अथ निर्भर्त्सनां तस्मादपि[1] प्राप्तवतासकृत् । हठेन हर्तुं तां[2] राज्ञा समादिश्यन्त सैनिकाः ॥२५६॥

तैर्गृहाग्रे कृतास्कन्दो निर्गत्यान्येन वर्त्मना । त्राणार्थी नागभवनं सजानिः प्राविशद्द्विजः ॥२५७॥

ताभ्यामभ्येत्य वृत्तान्ते ततस्तस्मिन्निवेदिते । क्रोधान्धः सरसस्तस्मादुज्जगाम फणीश्वरः ॥२५८॥

उद्गर्जज्जिह्मजीमूतजनितध्वान्तसंततिः । स घोराशनिवर्षेण ददाह सपुरं नृपम् ॥२५९॥

दग्धप्राण्यङ्गविगलद्वसासृक्स्नेहवाहिनी । मयूरचन्द्रकाङ्केव वितस्ता समपद्यत ॥२६०॥

शरणाय प्रविष्टानां भयाच्चक्रधरान्तिकम् । मुहूर्तान्निरदह्यन्त सहस्राणि शरीरिणाम् ॥२६१॥

मधुकैटभयोर्मेदः प्रागूर्वीरिव चाक्रिणम् । दग्धानां प्राणिनां तत्तत्तदा[1] सर्वाङ्गमस्पृशत् ॥२६२॥

स्वसा[1] सुश्रवसो नागी रमण्याख्याद्रिगह्वरात् । साहायकायाश्मराशीन्समादाय तदाययौ ॥२६३॥

सा योजनाधिके शेषे मार्गस्यारात्सहोदरम्[1] । कृतकार्यं निशम्याश्मवर्षं ग्रामेषु तज्जहौ ॥२६४॥

योजनानि ततः पञ्च जाता ग्रामधरा खिला । सा रमण्याटवी[1]त्यद्याप्यस्ति[2] स्थूलशिलाबिला ॥२६५॥

घोरं जनक्षयं कृत्वा प्रातः सानुशयोप्यहिः । लोकापवादनिर्विण्णः स्थानमुत्सृज्य तद्ययौ ॥२६६॥

दुग्धाब्धिधवलं तेन सरो दूरगिरौ कृतम् । अमरेश्वर[1]यात्रायां जनैरद्यापि दृश्यते ॥२६७॥

श्वशुरानुग्रहान्नागीभूतस्यापि द्विजन्मनः । जामातृसर इत्यन्यत्तत्र च प्रथितं सरः ॥२६८॥

प्रजानां पालनव्याजान्निःशङ्क[1]क्षयकारिणः । अकस्मादन्तकाः केचित्[2]संभवन्ति तथाविधाः[3] ॥२६९॥

अद्यापि तत्पुरं दग्धं श्वभ्रीभूतं च तत्सरः । उपचक्रधरं दृष्ट्वा कथेयं स्मर्यते जनैः ॥२७०॥

राज्ञां[1] रागः कियान्नाम[2] दोषः स्वल्पदृशां मते । तत्तस्य तेन संवृत्तं यन्नाभूत्क्वापि कस्यचित् ॥२७१॥

सतीदैवतविप्राणामप्येकस्य प्रकोपतः । श्रुतो हि प्रतिवृत्तान्तं त्रैलोक्यस्यापि विप्लवः ॥२७२॥

चत्वारिंशतमब्दान्स मासैश्चोनां त्रिभिः समाम् । भुवं भुक्त्वा क्षितिवृषा[1] दुर्नयेन क्षयं ययौ ॥२७३॥

अप्य[1]ल्पकालसंदृष्टप्राकाराट्टालमण्डलम् । तत्किंनरपुरं लेभे गन्धर्वनगरोपमाम् ॥२७४॥

एकस्तु तनयस्तस्य वैचित्र्यात्कर्मणां गतेः । स्वधात्र्या विजयक्षेत्रं नीतः प्राणैर्न तत्यजे ॥२७५॥

राजा सिद्धाभिधः सोथ तथा निःशेषितं जनम् । नवीचकार जलदो दावदग्धमिवाचलम् ॥२७६॥

इति वृत्तं महाश्चर्यं तस्य पित्र्यं महामतेः । संसारासारताज्ञाने प्राप पुण्योपदेशताम् ॥२७७॥

भोगयोगेन मालिन्यं नेतुं मध्यगतोपि सः । न शक्यते स्म पङ्केन प्रतिमेन्दुरिवामलः ॥२७८॥

दर्पज्वरोष्णभूपालमध्ये निध्यायतोनिशम् । सुधासूतिकलामौलिं तस्यैवोल्लाघतोद्ययौ ॥२७९॥

गणितं गुणिना तेन मणींस्तृणमिवोज्झता । खण्डेन्दुमण्डनार्चायां मण्डनत्वमखण्डितम् ॥२८०॥

राज्ञस्तस्यैव राजश्रीः परलोकानुगाभवत् । यस्तामयोजयद्भर्तो धर्मेणा[1]व्यभिचारिणा ॥२८१॥

षष्टिमब्दान्प्रशास्योर्वीमासन्नानुचरान्वितः । आरुरोह सदेहोसौ लोकाञ्शशिशिखामणेः ॥२८२॥

---

२५६. [1]) $A_3$ gloss तस्याः भर्तुः.—[2]) $A_3$ gloss चन्द्रलेखां. २६२. [1]) $A_3$ तं तु तदा. २६३. [1]) $A_3$ gloss रमण्या नागी. २६४. [1]) Thus $A_2$; $A_1$ °रान्महोदरम्. २६५. [1]) $A_2$ gloss रमण्याटवी रमेआडू इति प्रसिद्धः.— [2]) $A_1$ originally °त्यस्थि, altered by later hand as above. G and R °त्यस्ति. २६७. [1]) $A_2$ adds the note अमरेश्वरयात्रायां प्रागुद्दिष्टोयं नागः सुश्रवा इत्याख्यः सुश्रम् नाग इति भाषया प्रसिद्धः तस्यैवोपरि [निक]टस्थले जामा[त्र]नाग इति भाषया प्रसिद्धः स विशाखनामा ब्राह्मण एव निजश्वशुरानुग्रहेण नागीभूतो नाग इत्यर्थः. The *aksharas* in brackets are effaced in A and have been supplied here from R. २६९. [1]) A G R निःशङ्क°.— [2]) [3]) $A_3$ glosses राजानः, नरनामसदृशाः. २७१. [1]) $A_3$ राज्ञो.—[2]) Emended; A G R कियन्नाम. २७३. [1]) $A_3$ gloss इन्द्रः. २७४. [1]) $A_3$ अत्यल्प°. २८१. [1]) Thus $A_1$ ; $A_3$ धर्मेण व्य°.

भृत्या नरं समाश्रित्य प्रययुः शोचनीयताम् । तत्सुतं तु समालम्ब्य प्रभुं भुवनवन्द्यताम्[1] ॥२८३॥
यात्याश्रितः किल समाश्रयणीयलभ्यां निन्द्यां गतिं जगति सर्वजनार्चितां वा ।
गच्छत्यधस्तृणगुणः श्रितकूपयन्त्रः पुष्पाश्रयी सुरशिरोभुवि रूढिमेति ॥२८४॥
सिद्धः सिद्धः सदेहोयमिति शब्दं सुरा दिवि । प्राघोषयं[1]स्ताडयन्तः पटहं सप्त वासरान् ॥२८५॥
उत्पलाक्ष इति ख्यातिं पेशलाक्षतयां[1] गतः । तत्सूनुस्त्रिंशतं सार्धां वर्षाणामन्वशान्महीम् ॥२८६॥
तस्य सूनुर्हिरण्याक्षः स्वनामाङ्कं[1] पुरं व्यधात् । क्ष्मां सप्तत्रिंशतिं[2] वर्षान्सप्त मासांश्च भुक्तवान् ॥२८७॥
हिरण्यकुल इत्यस्य हिरण्योत्सकृदात्मजः । षष्टिं षष्टिं वसुकुलस्तत्सूनुरभवत्समाः ॥२८८॥
अथ म्लेच्छगणाकीर्णे मण्डले चण्डचेष्टितः । तस्यात्मजोभून्मिहिरकुलः कालोपमो नृपः ॥२८९॥
दक्षिणां सान्तकामाशां स्पर्धया जेतुमुद्यता । यन्मिषादुत्तरहरिद्भारान्यमिवान्तकम् ॥२९०॥
सांनिध्यं यस्य सैन्यान्तर्हन्यमानाशनोत्सुकान्[1] । अजानन्गृध्रकाकादीन्दृष्ट्वाग्रे धावतो जनाः ॥२९१॥
दिवारात्रं हतप्राणिसहस्रपरिवारितः । योभूद्भूपालवेतालो विलासभवनेष्वपि ॥२९२॥
बालेषु करुणा स्त्रीषु घृणा वृद्धेषु गौरवम् । न बभूव नृशंसस्य यस्य घोराकृतेर्घ्नतः ॥२९३॥
स जातु देवीं संवीतसिंहलांशु[1]ककञ्चुकाम् । हैमपादाङ्कितकुचां दृष्ट्वा जज्वाल मन्युना ॥२९४॥
सिंहलेषु नरेन्द्राङ्घ्रिमुद्राङ्कः क्रियते पटः । इति कञ्चुकिना पृष्टेनोक्तो यात्रामदात्ततः ॥२९५॥
तत्सेनाकुम्भिदानाम्भोनिम्नगाकृतसंगमः । यमुनालिङ्गनप्रीतिं प्रपेदे दक्षिणार्णवः ॥२९६॥
स सिंहलेन्द्रेण समं संरम्भादुदपाटयत् । चिरेण चरणस्पृष्टप्रियालोकनजां रुषम्[1] ॥२९७॥
दूरात्तत्सैन्यमालोक्य लङ्कासौधैर्निशाचराः । भूयोपि राघवोद्योगमाशङ्क्य प्रचकम्पिरे ॥२९८॥
स तत्रान्यं नृपं दत्त्वा तीव्रशक्तिरु[1]पाहरत् । पटं यमुषदेवाख्यं मार्ताण्डप्रतिमाङ्कितम् ॥२९९॥
व्यावृत्य चोलकर्णाटलाटादींश्च नरेश्वरान् । सिन्धुरानिव गन्धेभो गन्धेनैव व्यदारयत् ॥३००॥
तस्मिन्प्रयाते प्राप्तेभ्यः शशंसुस्तत्पराभवम् । नगर्यो नरनाथेभ्यस्त्रुटयदट्टालमेखलाः ॥३०१॥
काश्मीरं द्वारमा[1]साद्य श्वभ्रभ्रष्टस्य दन्तिनः । श्रुत्वा स त्रासजं घोषं तोषरोमाञ्चितोभवत् ॥३०२॥
तदाकर्णनसंरम्भे सहर्षोथ विरुद्धधीः । शतमन्यद्गजेन्द्राणां हठेन निरलोठयत् ॥३०३॥
स्पर्शोङ्गानि यथा वाचं कीर्तनं पापिनां तथा । संदूषयेदतो नोक्ता तस्यान्यापि नृशंसता ॥३०४॥
को वेत्त्यद्भुत[1]चेष्टानां कृत्यं प्राकृतचेतसाम् । धर्मं सुकृतसंप्राप्तिहेतोः सोपि यदाददे ॥३०५॥
श्रीनगर्यां हि दुर्बुद्धिर्विदधे मिहिरेश्वरम् । होलडायां[1] स मिहिरपुराख्यं पृथुपत्तनम् ॥३०६॥
अग्रहाराञ्जगृहिरे गान्धारा ब्राह्मणास्ततः । समानशीलास्तस्यैव ध्रुवं तेपि द्विजाधमाः ॥३०७॥

---

२८३. [1]) Thus corr. by $A_2$ from $A_1$ °वन्ध्यताम्. २८५. [1]) Thus $A_3$; $A_1$ प्रोद्घोषयन्ताड°. २८६. [1]) Thus corr. by later hand from $A_1$ पेशलाक्षितया. २८७. [1]) $A_2$ gloss रण्येल्, with note स्वनामाङ्कपुरप्रणीरित्यपि पाठः.—[2]) A सप्तार्त्रिं°. २९१. [1]) $A_2$ gloss हन्यमानानां लोकानां यदशनं । अदनं । तत्रोत्सुकाः. २९४. [1]) $A_2$ gloss सिङ्गलद्वीप. २९७. [1]) Thus corr. by $A_1$ from रुजम्. २९९. [1]) Thus corr. by $A_3$ from $A_1$ °शक्तिरपा°. ३०२. [1]) $A_2$ gloss तदारभ्य हस्तिवञ्ज इति प्रसिद्धः प्रदेशवर्त्म येन आयातो मिहिरकुलः. ३०५. [1]) $A_3$ वेत्त्युद्वृत्त°. ३०६. [1]) Emended; A होलाळायां. Cf. vii. 1228. viii. 733. 1432 (*C.*). 2909 (*C.*). 3216 (*C.*).

मे[1]घागमः फणिभुजं प्रथितान्धकारः प्रीणाति हंसममलो जलदात्ययश्च ।
प्रीतिः समानरुचितैव भवेन्नितान्तं[2] दातुः प्रतिग्रहकृतश्च[3] परस्परस्य ॥३०८॥

स वर्षसप्ततिं भुक्त्वा भुवं भूलोकभैरवः । भूरिरोगार्दितवपुः प्राविशज्जातवेदसम् ॥३०९॥

सोयं त्रिकोटिहा मुक्तो यः स्वात्मन्यपि निर्घृणः । देहत्यागेस्य गगनादुच्चचारेति भारती ॥३१०॥

इत्यूचुर्ये मते तेषां स एव परिहारदः। खण्डयन्वीतघृणतामग्रहारादिकर्मभिः ॥३११॥

आक्रान्ते दारदैर्भौट्टैर्म्लेच्छैरशुचिकर्मभिः । विनष्टधर्मे देशेस्मिन्पुण्याचारप्रवर्तनम् ॥३१२॥

आर्यदेश्यान्स संस्थाप्य व्यतनोद्दारुणं तपः । संकल्प्य स्ववपुर्दाहं प्रायश्चित्तक्रियां व्यधात् ॥३१३॥

अत एवाग्रहाराणां सहस्रं प्रत्यपादयत् । गान्धारदेशजातेभ्यो द्विजेभ्यो विजयेश्वरे ॥३१४॥

क्षुरखड्गासिधेन्वादिपूर्णैयःफलके तदा । वह्निप्रदीप्ते सहसा पर्यन्ते स्वां तनुं जहौ ॥३१५॥

इत्येतस्मिञ्जनाम्नाये केचिदव्यभिचारिणि । प्राहुः पुरुषसिंहस्य क्रौर्यं तस्याविगर्हितम् ॥३१६॥ कुलकम् ॥

ये नागेन रुषा प्लुष्टे नगरे प्राभवन्खशाः । तेषां नाशाय वृत्तान्तं पूर्वोक्तं जगदुः परे ॥३१७॥

अवतारयतस्तस्य चन्द्रकुल्याभिधां नदीम् । अशक्योन्मूलना मध्ये शिलाभूद्विघ्नकारिणी ॥३१८॥

ततः कृततपाः स्वप्ने देवैरुक्तः स भूपतिः । यक्षः शिलायां बलवान्ब्रह्मचार्यत्र तिष्ठति ॥३१९॥

साध्वी स्पृशति चेदेनां निरोद्धुं न स[1] शक्नुयात् । ततोपरेद्युः स्वप्नोक्तं शिलायां तेन कारितम् ॥३२०॥

तासु तासु कुलस्त्रीषु व्यर्थयत्नास्वथाचलत् । चन्द्रवत्याख्यया स्पृष्टा कुलाल्या सा महाशिला ॥३२१॥

कोटित्रयं नरपतिः क्रुद्धस्तेनागसा ततः । सपतिभ्रातृपुत्राणामवधीत्कुलयोषिताम् ॥३२२॥

इयं चान्यमते ख्यातिः प्रथते तथ्यतः पुनः । अभव्या सनिमित्तापि प्राणिहिंसा गरीयसी ॥३२३॥

एवं क्षुद्रोपि यद्राजा संभूय न हतो जनैः । तत्कर्म कारयद्भिस्तद्दैवतैरेव रक्षितः ॥३२४॥

प्रजापुण्योदयैस्तीव्रैश्चिरात्तस्मिन्क्षयं गते । बक[1]स्तत्प्रभवः पौरैः सदाचारोभ्यषिच्यत ॥३२५॥

तत्रापि पूर्वसंस्कारादु[1]क्तत्रासं दधे जनः । श्मशानविहिते लीलावेश्मनीव नृपास्पदे ॥३२६॥

अतिसंतापदाज्जातः स जनाह्लादकोभवत् । जलौघो जलदश्यामात्तपात्ययदिनादिव ॥३२७॥

लोकान्तरादिवायातं मेने धर्मं तदा जनः । अभयं च परावृत्तं प्रवासाद्गहनादिव ॥३२८॥

स बकेशं बकश्वभ्रे बकवत्यापगां तथा । कृत्वा पुरं परार्ध्यश्रीर्लवणोत्साभिधं व्यधात् ॥३२९॥

तत्र त्रिषष्टिर्वर्षाणां सत्रयोदशवासरा । अत्यवाह्यत भूपेन तेन पृथ्वीं प्रशासता ॥३३०॥

अथ योगेश्वरी काचिद्भट्टाख्या रजनीमुखे । कृत्वा कान्ताकृतिं काम्यामुपतस्थे विशां पतिम् ॥३३१॥

तया मनोहरैस्तैस्तैर्व[1]चनैर्ग्लपितस्मृतिः । स यागोत्सवमाहात्म्यं द्रष्टुं हृष्टो न्यमन्त्रयत ॥३३२॥

पुत्रपौत्रशतोपेतः प्रातस्तत्र ततो गतः । चक्रवर्ती तया निन्ये देवीचक्रोपहारताम् ॥३३३॥

कर्मणा तेन सिद्धाया व्योमाक्रमणसूचकम् । जानुमुद्राद्वयं तस्या दृशद्यद्यापि दृश्यते ॥३३४॥

---

३०८. [1]) Edd. add before this verse the following verses, not found in A G R: भगिनीवर्गसम्भोगनिर्लज्जाम्लेच्छवंशजाः। स्नुषासङ्गतिसक्ताश्च दारदाः सन्ति पापिनः॥ वस्तुभावैस्तथा भाद्रा भार्याविक्रयकारिणः। परोपभोगितास्तेषां निर्लज्जास्तर्हि योषितः॥.—[2]) $A_2$ °न्निमित्तं.—[3]) Thus $A_3$; $A_1$ °ग्रहहतश्च. ३२०. [1]) Thus corr. by $A_3$ from $A_1$ न च. ३२५. [1]) Emended; A R G एकस्त°. ३२६. [1]) G उक्ताचासं. ३३२. [1]) Thus corr. by $A_2$ from $A_1$ °हरैस्तैस्तैर्व°.

देवः शतकपालेशो मातृचक्रं शिला च सा | खेरीमठेषु तद्वार्तास्मृतिमद्यापि यच्छति ||३३५||
देव्या कुलतरोः कन्दः क्षितिनन्दोवशेषितः | ततस्तस्य सुतस्त्रिंशद्वत्सरानन्वशान्महीम् ||३३६||
द्वापञ्चाशतमब्दान्क्ष्मां द्वौ च मासौ तदात्मजः | अपासीद्वसुनन्दाख्यः प्रख्यातस्मरशास्त्रकृत् ||३३७||
नरः षष्टिं तस्य सूनुस्तावतोक्षश्च तत्सुतः | वर्षानभूद्विभुर्ग्रामं योक्षवालमकारयत् ||३३८||
जुगोप गोपादित्योथ क्ष्मां सद्वीपां तदात्मजः | वर्णाश्रमप्रत्यवेक्षा[1]दर्शितादियुगोदयः ||३३९||
सखोलखागिकाहाडि[1]ग्रामस्कन्दपुरा[2]भिधान् | शमाङ्गासं[3]मुखांश्चाग्रहारान्यः प्रत्यपादयत् ||३४०||
ज्येष्ठेश्वरं प्रतिष्ठाप्य गोपाद्रावार्य[1]देशजाः | गोपाग्रहारान्कृतिना येन स्वीकारिता द्विजाः ||३४१||
भूक्षीरवाटिकायां[1] यो निर्वास्य लशुनाशिनः | खासटायां[2] व्यधाद्विप्रा[3]न्निजाचारविवर्जितान् ||३४२||
अन्यांश्चानीय देशेभ्यः पुण्येभ्यो वश्चिकादिषु[1] | पावनानग्रहारेषु ब्राह्मणान्स न्यरोपयत् ||३४३||
उत्तमो लोकपालोयमिति लक्ष्म प्रशस्तिषु | यः प्राप्तवान्विना यज्ञं चक्षमे न पशुक्षयम् ||३४४||
सषड्दिनां[1] वर्षषष्टिं पालयित्वा स मेदिनीम् | भोक्तुं पुण्यपरीपाकं लोकान्सुकृतिनामगात् ||३४५||
गोकर्णस्तत्सुतः क्षोणीं गोकर्णेश्वरकृद्दधे | अष्टपञ्चाशतं वर्षांस्त्रिंशत्याह्नां विवर्जितान् ||३४६||
सूनुर्नरेन्द्रादित्योस्य खिङ्खिलान्याभिधोभवत् | भूतेश्वरप्रतिष्ठानामक्षयिण्याश्च[1] कारकः[2] ||३४७ ||
दिव्यानुग्रहभागुग्राभिधो यस्य गुरुर्व्यधात् | उग्रेशं मातृचक्रं च प्रभावोदग्रविग्रहः ||३४८||
भूत्वा षट्त्रिंशतं वर्षाञ्शतं चाह्नां विभुर्भुवः | स दीर्घैरनघांल्लोकानासदत्सुकृतैः कृती ||३४९||
युधिष्ठिराभिधानोभूदथ राजा तदात्मजः | यः सूक्ष्माक्षतया[1] लोकैः कथितोन्धयुधिष्ठिरः ||३५०||
तेन क्रमागतं राज्यं सावधानेन शासता | अनुजग्मे मितं कालं पूर्वभूपालपद्धतिः ||३५१||
काले कियत्यपि ततो यात्यभाग्यवशादसौ | सिषेवे श्रीमदक्षीवो यत्किंचनविधायिताम् ||३५२||
नान्वग्रहीदनुग्राह्यान्न संजग्राह धीमतः | न प्रवृत्तोपचाराणां प्रागिवासीत्प्रियंकरः ||३५३||
दुर्विद्यपर्षदा साकं निर्विशेषं सभाजितैः | परिजह्रे[1] स दुर्जातो जाततेजोवधैर्बुधैः ||३५४||
सर्वत्र समदृष्टित्वं गुणोयं खलु योगिनः | अकीर्तिहेतुः स महान्दोषस्तु पृथिवीपतेः ||३५५||
नयद्भिर्गुणतां दोषान्दोषतां च गुणान्विटैः | स लुप्तप्रतिभश्चक्रे शनकैः स्त्रीजितोपमः ||३५६||
वाङ्मर्मच्छेदिनी दीर्घं नर्म शश्वत्कथा विटैः | अनीश्वरोचिता तस्य क्रीडापि भयदाभवत् ||३५७||
पुरो मिथ्या गुणग्राही परोक्षं दोषदर्शकः | असुस्थिरादरो भूभृत्सोभूद्द्वेष्योनुजीविनाम् ||३५८||
मनागनवधानेन स्खलतस्तस्य भूपतेः | इत्थं राज्यस्थितिरगादचिरेण विसूत्रताम् ||३५९||
उपेक्षितस्य निर्द्रोहै[1]रयतन्ताजितात्मनः | अथ लब्धबलास्तस्य नाशाय द्रोहिमन्त्रिणः ||३६०||

---

३३९. 1) Thus corr. by $A_3$ from $A_1$ प्रत्यवीक्षा°. ३४०. 1) $A_2$ gloss आडेग्राम्.—2) $A_2$ gloss खन्दोर्.—3) $A_2$ शमाजासा, with gloss इिमन् जासव्. ३४१. 1) $A_2$ gloss गोपकार् इति प्रसिद्धस्थले. ३४२. 1) $A_2$ gloss भुछयेवाडु इति भाषया प्रसिद्धस्थले.—2) $A_2$ gloss सोदरबले.—3) Emended; A R व्यधान्वि°; G व्यथान्वि°. ३४३. 1) $A_2$ gloss वाच्यिग्रामादिषु. ३४५. 1) $A_3$ सषण्मासां. ३४७. 1) Thus corr. from $A_1$ °न्यास्च by $A_2$ which adds the glosses अविच्छिन्नमन्नदानमक्षयिणी धर्मभक्तमिति च प्रसिद्धा, and अक्षयिण्या इति पार्वतीयदेशादौ कश्मीरोपकण्ठवर्तिनि अछयीण्या इति प्रसिद्धाः यासु ($A_3$ यस्यां) सदाक्षिणं भूरिब्राह्मणभोजनं वितीर्यते. Of a third gloss by $A_2$ which has been smeared over with ink, only the following can be read: उद्यापनं यज्ञमित्यक्षयि-----.—2) Thus corr. by $A_3$ from $A_1$ कारसः. ३५०. 1) Thus $A_3$; $A_1$ सूक्ष्माक्षितया. ३५४. 1) Thus $A_3$; $A_1$ °जिह्रे. ३६०. 1) $A_3$ gloss मंत्रिभिः.

प्रभोः संकोचिताज्ञैस्तैश्चरद्भिर्निरवग्रहम् । राज्यं जिहीर्षवो भूपाश्चक्रिरे भूम्यनन्तराः ॥३६१॥
तदनुप्राणिताः सर्वे ते ते[1] नानादिगाश्रयाः । आसन्राज्यामिषं प्राप्तुं श्येना इव ससंभ्रमाः ॥३६२॥
अथोत्पन्नभयो राजा न शशाक निजस्थितिम् । व्यवस्थापयितुं यन्त्रच्युतां कारुः शिलामिव ॥३६३॥
चिरं क्षुण्णे क्षमाभर्तुस्तस्मिन्राज्ये विसंस्थुले । उपायोस्य स्थितेर्हेतुर्नैकः कश्चन पप्रथे ॥३६४॥
दृष्टदोषान्स्थितिं प्राप्तो[1] हन्यादस्मानसंशयम् । विचिन्त्येति न सामास्य जगृहुर्निजमन्त्रिणः ॥३६५॥
अथ निरुरुधुस्ते संनद्धा बलैर्नृपमन्दिरं व्यवहितजनाक्रन्दं भेरीरवैरतिभैरवैः ।
मदकरिघटाकेतुच्छायानिरुद्धरविप्रभा भवनवलभीः संतन्वन्तो दिवापि तमोवृताः ॥३६६॥
तैर्गन्तुं स्वभुवो निवारितरणैर्दत्तेवकाशे[1] ततस्त्यक्तश्रीर्नगरान्तरात्स नृपतिस्तात्पर्यतो निर्ययौ ।
आजानेयरजोङ्कराजललनाप्रस्थानसंदर्शनक्षुभ्यत्पौरजनास्रुलाजकणिकाकीर्णेन राजाध्वना ॥३६७॥
राज्याच्युतस्य बहुशः परिवाररामाकोशादि[1] तस्य रिपवो व्रजतोपजह्रुः[2] ।
उर्वीरुहो विगलितस्य[3] नगेन्द्रशृङ्गाद्वल्लीफलादि रभसादिव गण्डशैलाः ॥३६८॥
रम्यैः शैलपथैर्व्रजञ्श्रमवशाच्छायां श्रितः शाखिनामासीनप्रचलायितेन[1] सुमहद्दुःखं विसस्मार सः ।
दूरात्पामरपूत्कृतैः श्रुतिपथप्राप्तैः प्रबुद्धस्त्वभूद्दृष्टो निर्झरवारिभिः सह मनः[2]श्वभ्रे निमज्जन्निव ॥३६९॥
नानावीरुत्तृणपरिमलैरुग्रगन्धा वनोर्वीरम्भःक्षोभप्रतिहतशिलाः पिच्छिलाश्चाद्रिकुल्याः ।
क्रान्त्वा श्रान्तैर्बिसकिसलयच्छायमुग्धाङ्गलेखैरभ्युत्सङ्गं[1] निहिततनुभिर्मूर्छितं तस्य दारैः ॥३७०॥
पर्यन्ताद्रि[1]तटाद्विलोक्य सुचिरं दूरीभवन्मण्डलं द्रागामन्त्रयितुं जहत्सु[2] नृपतेर्दारेषु पुष्पाञ्जलीन् ।
क्षोणीपृष्ठविकीर्णपक्षतिनमत्तुण्डं स्वनीडस्थितैः सावेगं गिरिकन्दरासु पततां वृन्दैरपि क्रन्दितम् ॥३७१॥
स्तनयुगतलनद्धस्रस्तमूर्धांशुकानां त्रिकवलनविलोलं वीक्ष्य दूरात्स्वदेशम् ।
अवहत रुदतीनां मौलिविन्यस्तहस्तं पथि नृपवनितानामस्रुभिर्निर्झराम्भः[1] ॥३७२॥
प्रीतिस्थैर्यैरुचितवचनाक्षिप्तया शोकशान्त्या निर्व्याजाज्ञाग्रहणगुरुभिस्तैश्च तैश्चोपचारैः ।
तस्य स्नेहादुपगतवतो राज्यविभ्रंशदुःखं मन्दीचक्रुः स्वभुवि सुजना भूपतेर्भूमिपालाः ॥३७३॥

[1]इति काश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां प्रथमस्तरङ्गः ॥
चतुर्दशा[2]धिकं वर्षसहस्रं नव वासराः । मासाश्च विगता ह्यस्मिन्नेकविंशतिराजसु[3] ॥

---

३६२. 1) $A_1$ had written च after ते ते; struck out. $A_3$ तदनुप्राणिता वैरिनृपा नाना°. ३६३. 1) $A_2$ gloss यन्त्रवद् इति सेनायां युद्धार्थं प्रसिद्धम्. ३६४. 1) Thus corr. by $A_3$ from $A_1$ कस्य न. ३६५. 1) Thus corr. by $A_3$ from $A_1$ प्राप्तान्ह°. ३६७. 1) $A_3$ gloss धर्मद्वारे. ३६८. 1) Thus corr. by $A_3$; $A_1$ °रामा^को°.—2) Thus corr. by $A_2$ from $A_1$ °विजहुः—3) $A_3$ विचलितस्य. ३६९. 1) G has *sec. manu* the *v. l.* आसीनः प्रलयायितेन.—2) Thus $A_1$; $A_3$ gives the *v. l.* महत् for मनः between the lines and another *v. l.* पुनः in margin. ३७०. 1) $A_3$ अभ्युत्सङ्गं. ३७१. 1) Thus $A_3$; $A_1$ पर्यस्ता°.—2) $A_3$ क्षिपत्सु. ३७२. 1) $A_2$ बलमबलानां, with gloss अबलानां बलं कर्तृ.—2) $A_2$ gloss कर्म. *Colophon.* 1) $A_3$ adds before this the note रा ३८ ॥ ग्रं ॥ ३७२ ॥.—2) $A_3$ चतुर्विंशा°.—3) Thus $A_3$; $A_1$ °न्नष्टात्रिंशति रा°.

## ॥ द्वितीयस्तरङ्गः ॥

विहितमजगोशृङ्गाग्राभ्यां धनुर्घटितं तथा नरकरटिनोर्देहार्धाभ्यां गणं परिगृह्णतः[2] ।
विविधघटनाश्लाघ्यानां निधेरुचिता[3] विभोर्जयति ललनापुंभागाभ्यां शरीरविनिर्मितिः ॥१॥

भूयोराज्यार्जनोद्योगस्तेनात्यज्यत भूभुजा । जरसा शमिवाण्या[1] च कर्णमूलमवाप्तया ॥२॥

अनयद्विनयोदात्तः समं स्वविषयेण तान् । विषयान्वाशिनामग्र्यः स तान्पञ्चापि विस्मृतिम् ॥३॥

धावन्राज्येच्छया दुर्गागलिकायां[1] स्वमन्त्रिभिः । कालेन स्थापितो बद्धेत्यभ्यधायि तु कैरपि ॥४॥

अथ प्रतापादित्याख्यस्तैरानीय दिगन्तरात् । विक्रमादित्यभूभर्तुर्ज्ञातिरत्राभ्यषिच्यत ॥५॥

शकारिर्विक्रमादित्य इति स भ्रममाश्रितैः[1] । अन्यैरत्रान्यथालेखि विसंवादि[2] कदर्थितम् ॥६॥

इदं स्वभेदविधुरं हर्षादीनां धराभुजाम् । कंचित्कालमभूद्भोज्यं ततः प्रभृति मण्डलम् ॥७॥

असपूर्वापि तेनोर्वी सपूर्वेव महीभुजा । लालिता हृदयज्ञेन पत्या नववधूरिव ॥८॥

भुक्त्वा द्वात्रिंशतं वर्षान्भुवं तस्मिन्दिवं गते । जलौकास्तत्सुतो भूमेर्भूषणं समपद्यत ॥९॥

पितुरेव समं कालं वृद्धिहेतोः स दिद्युते । विषुवत्पूर्णशीतांशुरिव शीतेतरार्चिषः ॥१०॥

अथ वाक्पुष्टया सार्धं देव्या दिव्यप्रभावया । भुवं तत्प्रभवो भुञ्जंस्तुञ्जीनोरञ्जयत्प्रजाः ॥११॥

दंपतिभ्यामियं ताभ्यामभूष्यत वसुंधरा । गङ्गामृगाङ्कखण्डाभ्यां जटाभूरिव धूर्जटेः ॥१२॥

मण्डलं साध्वधत्तां तौ नानावर्णमनोरमम् । शतह्रदापयोवाहौ माहेन्द्रमिव कार्मुकम् ॥१३॥

चक्राते च महाभागौ विभ्रमाभरणं भुवः । तुङ्गेश्वरं हरावासं कतिका[1]ख्यं च पत्तनम् ॥१४॥

क्वचिन्मडवराज्यान्तःस्थाने चण्डातपोज्ज्वले[1] । तत्प्रभावेण फलितं वृक्षैस्तत्क्षणरोपितैः ॥१५॥

नाट्यं सर्वजनप्रेक्ष्यं यश्चक्रे स महाकविः[1] । द्वैपायनमुनेरंशस्तत्काले चन्दकोभवत् ॥१६॥

तयोः प्रभावमाहात्म्यजिज्ञासार्थमिवोद्यता । प्रजासु दुःसहा जातु व्यापद्दैवी[1] व्यजृम्भत ॥१७॥

पाकोन्मुखशरच्छालिच्छन्नकेदारमण्डले । मासि भाद्रपदे कस्मात्पपात तुहिनं महत् ॥१८॥

तस्मिन्विश्वक्षयोद्युक्तकालाट्टहसितोपमे । न्यमज्जञ्शालयः साकं प्रजानां जीविताशया ॥१९॥

अथासीत्क्षुत्परिक्षामजनप्रेतकुलाकुलः । प्राकारो[1] निरयस्येव घोरो दुर्भिक्षविप्लवः ॥२०॥

पत्नीप्रीतिं सुतस्नेहं पितृदाक्षिण्यमातुरः । कुक्षिंभरिः क्षुदुत्तप्तो विसस्माराखिलो जनः ॥२१॥

---

१. 1) Thus corr. by $A_3$ from $A_1$ °गोःशृङ्गा°.—2) Thus corr. by $A_3$ from $A_1$ प्रतिगृह्यतः.—3) $A_4$ gloss अभ्यस्ता. २. 1) $A_2$ gloss जितेन्द्रियाणां. ४. 1) $A_2$ gloss दुर्गाज्यन्. ६. 1) $A_3$ स इति भ्रमम°; R G follow this reading and write °विरथः.—2) $A_2$ विसंवादक°. १४. 1) $A_2$ gloss कैय. १५. 1) $A_3$ °तपोल्बणे. १६. 1) Thus $A_3$, also R G; $A_1$ °कवेः. १७. 1) $A_3$ gloss देवैः कृतत्वाद्देवानां संबन्धिनी दैवी. २०. 1) Thus $A_1$; altered by $A_3$ into प्रकारो.

क्षुत्तापाद्यस्मरल्लज्जामभिमानं कुलोन्नतिम् । अशनाहंक्रियाग्रातो लोको[1] लक्ष्मीकटाक्षितः ॥२२॥
क्षामं कण्ठगतप्राणं याचमानं सुतं पिता । पुत्रो वा पितरं त्यक्त्वा चकार स्वस्य पोषणम् ॥२३॥
स्नाय्वस्थिशेषे बीभत्से स्वदेहेहंक्रियावताम् । अभूद्भोज्यार्थिनां युद्धं प्रेतानामिव देहिनाम् ॥२४॥
रूक्षाभिभाषी क्षुत्क्षामो घोरो दिक्ष्वक्षिणी क्षिपन् । एक एको जगज्जीवैरियेष स्वात्मपोषणम् ॥२५॥
तस्मिन्महाभये घोरे प्राणिनामतिदुःसहे । ददृशे लोकनाथस्य तस्यैव करुणार्द्रता ॥२६॥
निवारितप्रतीहारः स रत्नौषधिशोभिना । दर्शनेनैव दीनानामलक्ष्मीक्लममच्छिनत् ॥२७॥
सपत्नीको निजैः कोशैः संचयैर्मन्त्रिणामपि । क्रीतान्नैः स दिवारात्रं प्राणिनः समजीवयत् ॥२८॥
अटवीषु श्मशानेषु रथ्यास्ववसथेषु च । क्षुत्क्षामः क्ष्माभुजा तेन नहि कश्चिदुपेक्ष्यत[1] ॥२९॥
ततो निःशेषितधनः क्षीणान्नां वीक्ष्य मेदिनीम् । क्षपायामेकदा देवीमेवमूचे स[1] दुःखितः ॥३०॥
देव्यस्मदपचारेण ध्रुवं केनापि दुस्तरा । जाता निरपराधानां जनानां व्यापदीदृशी ॥३१॥
धिङ्मामधन्यं यस्याग्रे लोकोयं शोकपीडितः । पश्यन्नशरणामुर्वीमनुग्राह्यो विपद्यते ॥३२॥
प्रजा निःशरणा एता अन्योन्यं बान्धवोज्झिताः । अरक्षतो भयेमुष्मिन्किं कार्यं जीवितेन मे ॥३३॥
यथा कथंचिल्लोकोयं दिनान्येतानि यत्नतः । मयातिवाहितः सर्वो न च कोपि व्यपद्यत ॥३४॥
अतिक्रान्तप्रभावेयं कालदौरात्म्यपीडिता । निष्किंचनाद्य संजाता पृथिवी गतगौरवा ॥३५॥
तदिमाः सर्वतो मग्ना दारुणे व्यसनार्णवे । उपायः कतमस्तावत्समुद्धर्तुं क्षमः प्रजाः ॥३६॥
निरालोको हि लोकोयं दुर्दिनग्रस्तभास्करः । कालरात्रिकुलैर्विश्वक्परीत इव वर्तते ॥३७॥
हिमसंघातदुर्लङ्घ्य[1]क्षितिभृद्रुद्धनिर्गमाः । बद्धद्वारकुलाय[2]स्थखगवद्विवशा जनाः ॥३८॥
शूराश्च मतिमन्तश्च विद्यावन्तश्च जन्तवः । कालदौरात्म्यतः पश्य जाता निहतयोग्यताः ॥३९॥
आशाः काञ्चनपुष्पकुट्मलकुलच्छन्ना न काः क्ष्मातले सौजन्यामृतवर्षिभिस्तिलकितं सेव्यैर्न किं मण्डलम् ।
पन्थानः सुचिरोप[1]चाररुचिरैर्व्याप्ता न कैः संस्तुतैस्तेषा[2]मत्र वसन्ति निह्नुतगुणाः कालेन ये[3] मोहिताः ॥४०॥
तदेष गलितोपायो जुहोमि ज्वलने तनुम् । नतु द्रष्टुं समर्थोस्मि प्रजानां नाशमीदृशम् ॥४१॥
धन्यास्ते पृथिवीपालाः सुखं ये निशि शेरते । पौरान्पुत्रानिव पुरः सर्वतो वीक्ष्य निर्वृतान् ॥४२॥
इत्युक्त्वा करुणाविष्टो मुखमाच्छाद्य वाससा । निपत्य तल्पे निःशब्दं[1] रुरोद पृथिवीपतिः ॥४३॥
निवातस्तिमितैर्दीपैरुद्ग्रीवैः कौतुकादिव । वीक्षमाणाथ तं देवी जगाद जगतीभुजम् ॥४४॥
राजन्प्रजानां कुकृतैः कोयं मतिविपर्ययः । येनेतर इव स्वैरमधीरोचितमीहसे ॥४५॥
यद्यसाध्यानि दुःखानि छेत्तुं न प्रभविष्णुता । तन्महीपाल महतां महत्त्वस्य किमङ्कनम् ॥४६॥
कः शक्रः कतमः स्रष्टा वराकः कतमो यमः । सत्यव्रतानां भूपानां कर्तुं शासनलङ्घनम् ॥४७॥
पत्यौ भक्तिर्व्रतं स्त्रीणामद्रोहो मन्त्रिणां व्रतम् । प्रजानुपालनेनन्यकर्मता भूभृतां व्रतम् ॥४८॥

---

२२. 1) $A_1$ लोकोऽलक्ष्मी°. २९. 1) Thus corr. by $A_3$ from $A_1$ उपेक्ष्यते. ३०. 1) Thus corr. by $A_3$ from $A_1$ सु°. ३८. 1) $A_3$ हिमसंपातदुर्लक्ष्यक्षि°.—2) $A_2$ gloss नीडं. ४०. 1) $A_3$ प्रचुरो°.—2) $A_3$ संस्तुतैरेषां°, with gloss एषां शूरमतिमदादीनाम् निह्नुतगुणाः ये शूराद्या अत्र अस्मिन्नेव देशे वसन्ति देशान्तरं न गच्छन्ति ते कालेन मोहिताः.—3) $A_3$ ते. ४३. 1) Thus corr. by $A_3$ from $A_1$ °शङ्कं.

उत्तिष्ठ व्रतिनामध्य क्व विपर्येति मद्वचः । प्रजापाल प्रजानां ते नास्त्येव क्षुत्कृतं भयम् ॥४९॥
इति संरम्भतः प्रोक्ते तयानु[1]ध्याय देवताः । प्रतिगेहं गतप्राणः कपोतनिवहोपतत् ॥५०॥
प्रातस्तन्नृपतिर्वीक्ष्य व्यरंसीन्मरणोद्यमात् । प्रजाश्च प्रत्यहं प्राप्तैः कपोतैर्जीवितं दधुः ॥५१॥
वस्त्वन्तरं किमपि तत्साध्वी नूनं ससर्ज सा । जनताजीवितावाप्त्यै न कपोतास्तु तेभवन्[1] ॥५२॥
तादृशां नहि निर्व्याजप्राणिकारुण्यशालिनाम् । हिंसया धर्मचर्यायाः शक्यं क्वापि कलङ्कनम् ॥५३॥
अभवन्निर्मलं व्योम देवीकृत्यैः सह क्रमात् । साकं भूपालशोकेन दुर्भिक्षं च शमं ययौ ॥५४॥
सा भूतिविभवोदग्रमग्रहारं द्विजन्मनाम् । सती कतीमुषं[1] चक्रे रामुषं[2] चापकल्मषा ॥५५॥
वर्षैः षट्त्रिंशता शान्ते पत्यौ विरहजो ज्वरः । तत्यजे ज्वलनज्वालानलिनप्रच्छदे तया ॥५६॥
सा यत्र शुचिचारित्रा विपन्नं पतिमन्वगात् । स्थानं जनैस्तद्वाक्पुष्टाटवीत्यद्यापि गद्यते ॥५७॥
चारुचारित्रया तत्र तया सत्त्रेवतारिते । नानापथागतानाथसार्थैरद्यापि भुज्यते ॥५८॥
आभ्यामभ्यधिकं कर्तुं शक्तिः कस्येति निश्चितम् । विचिन्त्यारोचकी धाता नापत्यं निर्ममे तयोः ॥५९॥
वेधाः परां धुरमुपैति परीक्षकाणामिक्षोः फलप्रजननेन कृतश्रमो यः ।
विस्मारितोद्धुरसुधारसयोग्यतां त[1]त्तस्मादुदेत्य[2] किमिवाभ्यधिकं विदध्यात् ॥६०॥
दीर्घदुर्दिननष्टार्कं राष्ट्रमात्मापचारतः । ज्ञात्वा राज्यमिसाहेहं सा चकारेति केचन ॥६१॥
ततोन्यकुलजो राजा विजयोष्टावभूत्समाः । पत्तनेन परीतं यश्चकार विजयेश्वरम् ॥६२॥
सुतो महीमहेन्द्रस्य जयेन्द्रस्तस्य भूपतेः । क्ष्मामाजानुभुजो राजा बुभोजाथ पृथुप्रथः ॥६३॥
अलोल[1]कीर्तिकल्लोलदुगूलवलनोज्ज्वलाम् । बभार यद्भुजस्तम्भो जयश्री[2]सालभञ्जिकाम्[3] ॥६४॥
तस्याभूदद्भुतोदन्त[1]भवभक्तिविभूषितः । राज्ञः संधिमतिर्नाम मन्त्री मतिमतां वरः ॥६५॥
नास्त्युपायः स संसारे कोपि योपोहितुं क्षमः । भूपालमत्तकरिणामेषां चपलकर्णताम् ॥६६॥
अत्यद्भुतमतिः शङ्क्यः सोयमुक्तेति यद्द्विटैः । तस्मिन्धीसचिवे द्वेषस्तेनाग्राह्यत भूभुजा ॥६७॥ युग्मम् ॥
निवारितप्रवेशोथ सकोप[1]स्तमहेतुकम् । निनाय हृतसर्वस्वं यावदायुर्दरिद्रताम् ॥६८॥
तस्य भूपतिविद्वेषग्रीष्मोष्मपरिशोषिणः । आप्तायं राजपुरुषा वार्तयापि न चक्रिरे ॥६९॥
गिरं गभीरो गृह्णाति क्ष्माभृद्यावत्तदग्रगाः । उक्तानुवादिनस्तावद्व्यक्तं प्रतिरवा इव ॥७०॥
स तु राजविरुद्धत्वदारिद्र्याभ्यां न विव्यथे । गतप्रत्यूहया प्रीतः प्राप्तया हरसेवया ॥७१॥
अथ भाव्यर्थमाहात्म्यात्पप्रथे प्रति[1]मन्दिरम् । राज्यं संधिमतेर्भावीत्यश्रुतापि सरस्वती ॥७२॥
नाचोदिता वाक्चरतीत्याप्तेभ्यः श्रुतवान्नृपः । ततः संभूत[1]संत्रासः कारावेश्मनि तं न्यधात्[2] ॥७३॥

५०. 1) $A_3$ देव्या. ५२. 1) $A_3$ पतन्. ५५. 1) $A_2$ gloss कैमोह्.—2) $A_2$ gloss रामोह्. ६०. 1) Thus $A_1$; $A_3$ योग्यतात्तत्; and subsequently corrected into योग्यता तु.—2) $A_3$ gloss उत्पादयित्वा. G योग्यताच्चात्, explained by योग्यतयात्तो गृहीतः ६४. 1) G आलोल°.—2) Thus corr. by $A_3$ from $A_1$ °स्त्री°.—3) $A_2$ gloss पुत्तलिकाम्. ६५. 1) $A_3$ °दात्तो. ६८. 1) $A_3$ कोपात्तम्. ७२. 1) Thus corr. by $A_2$ from $A_1$ नवम°; $A_2$ had explained in margin the original reading by a note which has been struck out: राज्यं सन्धिमतो (sic) भावीत्यश्रुतापि सरस्वती एव नवमन्दिरं पप्रथे सन्धिमतेर्वराकस्य विषमपूर्वदृत्यपरिपोषकरूपत्वान्नवमन्दिरत्वरूपं तन्मात्रश्रुतवाक् श्रवणमभूदित्यर्थः येन च तदुपरि राजातीव क्रूरचेष्टोभूदिति भावः. ७३. 1) Thus corr. by $A_2$ from $A_1$ सद्भूत°.—2) Thus corr. by $A_3$ from $A_1$ व्यधात्.

तत्र तस्योग्रनिगडैः पीडिताङ्घ्रेर्विशुष्यतः । पूर्णोभूद्दशमो वर्षो भूपतेश्चायुषोवधिः ||७४||
निष्पुत्रः स महीपालो मुमूर्षुर्दाहमादधे । रोगोत्थया पीडया च चिन्तया च तदीयया ||७५||
ऊष्मायमाणो विद्वेषवह्निना ज्वलतानिशम् । न विना तद्वधं मेने भवितव्यप्रतिक्रियाम् ||७६||
भाव्यर्थस्याबुधाः[1] कुर्युरुपायं स्थगनाय यम् । स एवापावृतं द्वारं ज्ञेयं दैवेन कल्पितम् ||७७||
दग्धाङ्गारकदम्बके विलुठतः स्तोकोन्मिषत्तेजसो वेधा वह्निकणस्य शक्तिमतुलामाधातुकामो हठात् ।
तन्निर्वापणमिच्छतः प्रतनुते पुंसः समीपस्थिते[1] संतापद्रुतभूरिसर्पिषि घटे पानीयकुम्भभ्रमम् ||७८||
अथ राजाज्ञया क्रूरैर्वधकर्माधिकारिभिः । निशि संधिमतिः शूले समारोप्य विपादितः ||७९||
प्रोतशूले श्रुते तस्मिञ्शोकशङ्कुर्महीपतेः । निरगाद्रोगभग्नस्य पूर्वं पश्चात्तु जीवितम् ||८०||
सप्तत्रिंशतिवर्षेषु यातेष्वस्मिन्निरन्वये । प्रशान्तभूमिपालाभूत्कतिचिद्दिवसानि भूः ||८१||
अथ संधिमतिं बुद्ध्वा तथा व्यापादितं गुरोः । ईशानाख्यस्य हृदयं विवशं वशिनोप्यभूत् ||८२||
शिरीष इव संसारे ह्युखोच्छेद्ये मनीषिणाम् । हन्तानृशंस्यं तद्धन्तमिवैकमवशिष्यते ||८३||
स श्मशानभुवं प्रायादनाथस्येव शुष्यतः । कर्तुं विनयिनस्तस्य स्वोचितामन्तसत्क्रियाम् ||८४||
तं चास्थिशेषमद्राक्षीत्कृष्यमाणं बलाद्वृकैः । शूलमूलावबद्धास्थिखण्डावष्टंभनिश्चलम् ||८५||
समीरणसमाकीर्णमुण्डरन्ध्रायनिर्गतैः । ध्वनितैरनुशोचन्तमिवावस्थां तथाविधाम् ||८६||
हा वत्स द्रष्टुमीदृक्के जीवाम्यद्येति वादिना । तस्याकृष्यत शूलान्तःप्रोतं तेनाथ कीकसम् ||८७||
वेष्टिताङ्घ्रिः शिरःशीर्णैस्तत्कचैर्धूलिधूसरैः । अनैषीत्तं स कङ्कालं वारयन्भषतो वृकान् ||८८||
उचितां सत्क्रियां कर्तुं ततस्तस्य समुद्यतः । भाले विधातृलिखितं श्लोकमेतमवाचयत् ||८९||
यावज्जीवं दरिद्रत्वं दश वर्षाणि बन्धनम् । शूलस्य पृष्ठे मरणं पुना[1] राज्यं भविष्यति ||९०||
पादत्रयस्य दृष्टार्थः[1] श्लोकस्यासीत्स योगवित् । द्रष्टव्ये तुर्यपादार्थ[3]प्रत्यये कौतुकान्वितः ||९१||
अचिन्तयच्च संभ्रान्तः कथमेतद्भविष्यति । उवाच च विधेः शक्तिमचिन्त्यां कलयंश्चिरम् ||९२||
तत्तत्कर्मव्यतिकरकृतः पारतन्त्र्यानुरोधात्सज्ज्ञाः सर्वे व्यवसितहठोन्मूलनाय प्रयत्नात् ।
चित्रं तत्राप्युदयति विधेः शक्तिरत्यद्भुतेयं यन्माहात्म्याद्विविधघटनासिद्धयो निर्निरोधाः ||९३||
मणिपूरपुरे पार्थं निहतं समजीवयत् । फणिकन्याप्रभावेण सर्वाश्चर्यनिधिर्विधिः ||९४||
द्रोणपुत्रास्त्रनिर्दग्धं मातुर्गर्भे परीक्षितम् । जीवयन्कृष्णमाहात्म्याद्धाता धुर्योधिकारिणाम् ||९५||
कचं भस्मीकृतं दैत्यैर्नागांस्तार्क्ष्येण भक्षितान् । पुनर्जीवयितुं को वा दैवादन्यः प्रगल्भते ||९६||
इत्युक्त्वा भाविनोर्थस्य द्रष्टुं सिद्धिं समुद्यतः । तत्रैव बद्धवसतिः कङ्कालं स ररक्ष तम् ||९७||
अथार्धरात्रे निर्निद्रस्तयैवाद्भुतचिन्तया । धूपाधिवासमीशानो घ्रातवान्दिव्यमेकदा ||९८||
उच्चण्डलाडनादण्डो[1]द्घृष्टघण्टौघटांकृतैः । चण्डैर्डमरुनिर्घोषै[2]र्घर्घरं श्रुतवान्ध्वनिम् ||९९||

---

७७. 1) Thus corr. by later hand from A₁ °र्थस्य बुधाः. ७८. 1) Another hand alters this to °स्थितेः. ८६. 1) A₂ °समापूर्णमु° with gloss शिरः over मुण्ड. ९०. 1) Thus A₁; A₃ पुनराज्यं. ९१. 1) Thus corr. by later hand from A₁ °दृष्टार्थे.— 2) A₂ gloss चतुर्थ —3) Thus corr. by later hand from A₁ °पादार्थे. ९२. 1) Thus corr. by A₂ from A₁ कार्यमे°. ९९. 1) A₂ gloss लाडना अन्तर्गता शलाका आण्डु इति भाषया.—2) A₃ °डमरुघोष्यैश्च.

उद्घाटिततमोरिः[1] स ततः पितृवनावनौ । ददर्श योगिनीस्तेजःपरिवेषान्तरस्थिताः ॥१००॥
तासां संभ्रममालक्ष्य कङ्कालं चापवाहितम् । ईशानस्तां श्मशानोर्वीं धृतासिश्चकितो ययौ ॥१०१॥
अथापश्यत्तरुच्छन्नः शायितं मण्डलान्तरे । संधीयमानसर्वाङ्गं कङ्कालं योगिनीगणैः ॥१०२॥
उल्लसद्वरसंभोगवाञ्छा मद्यपदेवताः । वीरालाभात्समन्विष्य कङ्कालं तमपाहरन्[2] ॥१०३॥
एकमेकं स्वमङ्गं च विनिधाय क्षणादथ । कुतोऽप्यानीय[1] पुंलक्ष्म[2] पूर्णाङ्गं तं प्रचक्रिरे ॥१०४॥
अथ पुर्यष्टकं भ्राम्यदनाक्रान्तान्यविग्रहम् । योगेनाकृष्य योगेश्यस्[2]तत्र संधिमतेर्न्यधुः ॥१०५॥
ततः सुप्तोत्थित[1] इव प्रत्तदिव्यविलेपनः । समभुज्यत ताभिः स यथेच्छं चक्रनायकः ॥१०६॥
ईशानस्तस्य[1] देवीनां वितीर्णाङ्गाहृतिं पुनः । क्षपायां क्षीयमाणायां चकितः पर्यशङ्कत ॥१०७॥
नदंस्तद्रक्षया धीरः स च तत्स्थानमाययौ । तच्च योगेश्वरीचक्रं क्षिप्रमन्तरधीयत ॥१०८॥
अथाश्रूयत वाक्तासां माभूदीशान भीस्तव । नास्त्यङ्गहानिरस्माकं वृते चास्मिन्न वञ्चना ॥१०९॥
अस्मद्वराद्दिव्यवपुःसंधितः संधिमानसौ । आर्यत्वादार्यराजश्च ख्यातो भुवि[1] भविष्यति ॥११०॥
ततो दिव्याम्बरः स्रग्वी दिव्यभूषणभूषितः । ववन्दे संधिमान्प्रह्वः प्राप्तपूर्वस्मृतिर्गुरुम् ॥१११॥
ईशानोऽपि तमालिङ्ग्य स्वप्नेष्वपि सुदुर्लभम् । भूमिकामाललम्बे कामिति को वक्तुमर्हति ॥११२॥
असारं च विचित्रं च संसारं ध्यायतोर्मिथः । विवेकविशदा तत्र प्रावर्तत तयोः कथा ॥११३॥
अथ वार्तां विदित्वेमां कुतोऽपि नगरौकसः । सबालवृद्धाः सामात्यास्तमेवोद्देशमाययुः ॥११४॥
पूर्वाकृतिविसंवादाद्भ्रमो नायं स इत्यथ । तेनाच्छिद्यत संवादिनिखिलान्पृच्छता वचः ॥११५॥
अर्थनां शासितुं राष्ट्रं पौराणामपराजकम् । सोऽन्वमन्यत कृच्छ्रेण निःस्पृहः शासनाद्गुरोः ॥११६॥
प्राप्य्योपवनोपान्तं तं दिव्याकृतिशोभिनम् । सतूर्यं स्नापयामासुरभिषेकाम्बुभिर्द्विजाः ॥११७॥
नवराजोचिताचारे न स शिक्षामपेक्षत । दृष्टकर्मा समस्तास्तु निस्तुषाः प्रक्रिया व्यधात् ॥११८॥
स राजोचितनेपथ्यः पौराशीर्घोषशोभिनीम् । सौधोन्मिषल्लाजवर्षां ससैन्यः[1] प्राविशत्पुरीम् ॥११९॥
तस्मिन्विरजसि प्राज्यमाक्रामति नृपासनम् । आचक्राम प्रजा व्यापन्न दैवी न च मानुषी ॥१२०॥
अहरन्हृदयं तस्य शृङ्गारहितविभ्रमाः[1] । नितम्बिन्यो वनभुवः शमिनो[2] न तु योषितः ॥१२१॥
वनप्रसूनसंपर्कपुण्यगन्धैस्तपस्विनाम् । कर्पूरधूपसुरभिः करैः स्पृष्टः स पिप्रिये ॥१२२॥
भूतेशवर्धमानेशविजयेशानपश्यतः । नियमो राजकार्येषु तस्याभूत्प्रतिवासरम् ॥१२३॥
हरायतनसोपानक्षालनाम्भःकणाञ्चितैः । संस्पृष्टः पवनैः सोऽभूदानन्दास्पन्दविग्रहः ॥१२४॥
पूर्वपूजापनयने निराडम्बर[1]सुन्दरः । तेनैव द्रष्टुमज्ञायि स्नपितो विजयेश्वरः ॥१२५॥
लिङ्गपीठलुठत्स्नानकुम्भाम्भःक्षोभभूर्ध्वनिः । शयानस्याप्यभूत्तस्य वल्लभो वल्लकीद्विषः ॥१२६॥

१००. ¹) $A_2$ gloss तमोरिः त्राव् इति भाषया. १०३. ¹) Thus corr. by $A_3$ from $A_1$ मध्यमदे°; $A_2$ in margin मद्यमदेन ताः इत्य-न्यादर्शे.—²) Thus corr. by $A_2$ from $A_1$ तमुपाहरन्. १०४. ¹) Thus corr. by later hand from $A_1$ ततो.—²) Thus corr. by $A_3$ from $A_1$ पुंलिङ्ग°. १०५. ¹) Thus corr. by $A_1$ from भ्राम्यन्मना°.—²) $A_3$ योगिन्यः. १०६. ¹) त supplied by $A_3$. १०७. ¹) Thus corr. by $A_3$ from $A_1$ ईशानतस्य. ११०. ¹) $A_3$ राजा. ११९. ¹) Thus corr. by $A_3$ from $A_1$ ससैन्यां. १२१. ¹) $A_3$ gloss शृङ्गेषु अरहितः न त्यक्तः वीनां पक्षिणां भ्रमः भ्रमणं याभिः ताः.—²) $A_3$ gloss शान्तस्य. १२५. ¹) Thus corr. by $A_3$ from $A_1$ निजड°.

तापसैर्भस्मरुद्राक्षजटाजूटाङ्कितैर्बभौ । तस्य माहेश्वरी पर्षदिव भूमिपतेः सभा ॥१२७॥
शिवलिङ्गसहस्रस्य प्रतिष्ठाकर्मणि प्रभोः । प्रतिज्ञा प्रत्यहं तस्य नाभूद्विघटिता क्वचित् ॥१२८॥
प्रमादात्तदनिष्पत्तौ शिलामुत्कीर्य कल्पिता । सहस्रलिङ्गी तद्भृत्यैः सर्वतोद्यापि दृश्यते ॥१२९॥
तासु तासु स वापीषु लिङ्गव्याजादरोपयत् । स्वपुण्यपुण्डरीकानां जन्मनेक्षपरंपराम् ॥१३०॥
स्थाने स्थाने जलान्तश्च बहुसंख्यैर्निवेशितैः । अनयन्नर्मदाभङ्गिं शिवलिङ्गैस्तरङ्गिणीः ॥१३१॥
प्रतिलिङ्गं महाग्रामाः प्रत्यपाद्यन्त तेन ये । पर्षदामद्य तद्भोगः कालेनान्तर्धिमागतः ॥१३२॥
अकरोत्स महाहर्म्यैर्महालिङ्गैर्महावृषैः । महात्रिशूलैर्महतीं महामाहेश्वरो महीम् ॥१३३॥
कृत्वा संधीश्वरं[1] देहसंधानपितृकानने । ईशानस्य गुरोर्नाम्ना व्यधादीशेश्वरं[2] हरम् ॥१३४॥
थेदां च भीमादेवीं च देशांश्चान्यान्पदेपदे । स मठप्रतिमालिङ्गैर्हर्म्यैर्निन्ये महार्घताम् ॥१३५॥
स्वयंभूभिश्च तीर्थैश्च पूतं भक्तिविभूषितैः[1] । स एव भोक्तुमज्ञासीत्प्राज्ञः[2] कश्मीर[3]मण्डलम् ॥१३६॥
स्नातस्य निर्झराम्भोभिः पुष्पलिङ्गार्चनोत्सवैः । राज्ञस्तस्य वनोर्वीषु मासः पुष्पाकरो ययौ ॥१३७॥
स चातिरम्यः काश्मीरो ग्रीष्मस्त्रिदिवदुर्लभः । हिमलिङ्गार्चनैः प्रायाद्वनान्तेषु कृतार्थताम् ॥१३८॥
फुल्लाब्जषण्डरुद्धाशाः प्राप्य पुष्करिणीतटीः । लक्ष्मीसखः स खण्डेन्दुचूड[1]ध्यानपरोभवत् ॥१३९॥
नीलोत्पलवतीर्वापीरगस्त्योदयनिर्विषाः । अवगाह्य हरार्चाभिः शरदं निर्विवेश सः ॥१४०॥
सार्धं तपोधनैस्तैस्तैर्भजतो जागरोत्सवान् । तस्याभूवन्भुवो भर्तुरमोघा माघरात्रयः ॥१४१॥
अत्यद्भुतं राज्यलाभमित्थं सफलयन्कृती । पञ्चाशतं त्रिवर्षोनामत्यक्रामत्स वत्सरान् ॥१४२॥
शमव्यसनिनस्तस्य राज्यकार्याण्यपश्यतः । तस्मिन्काले प्रकृतयो विरागं प्रतिपेदिरे ॥१४३॥
अन्वैष्यत नृपस्ताभिः कश्चिद्राज्याय शुश्रुवे । राजपुत्रो जिगीषुश्च श्रीमान्यौधिष्ठिरे कुले ॥१४४॥
जुगोप गोपादित्याख्यं[1] कश्मीरेन्द्रजिगीषया । युधिष्ठिरप्रपौत्रं हि गान्धाराधिपतिस्तदा ॥१४५॥
वसन्नप्राप्त[1]साम्राज्यः स तत्र तनयं क्रमात् । अवाप लक्षणैर्दिव्यैरमोघं मेघवाहनम् ॥१४६॥
स तत्र[1] पितुरादेशाद्वैष्णवान्वयजन्मनः । राष्ट्रं प्राग्ज्योतिषेन्द्रस्य ययौ कन्यास्वयंवरे ॥१४७॥
तत्र तं वारुणं छत्रं छायया राजसंनिधौ । भेजे वरस्रजा राजकन्यका चामृतप्रभा ॥१४८॥
तेन तस्य निमित्तेन वृद्धिमागामिनीं जनाः । अजानन्नम्बुवाहस्य पाश्चात्येनेव वायुना ॥१४९॥
राज्ञा हि नरकेणैतद्वरुणाद्दुष्णवारणम् । आनीतमकरोच्छायां न विना चक्रवर्तिनम् ॥१५०॥
तमन्तिकं पितुः प्राप्तं पत्न्या लक्ष्म्या च संश्रितम् । भुवा निमन्त्रयामासुर्मन्त्रिणो वंशयोग्यया ॥१५१॥
अथार्यराजो विज्ञाय स्वराज्यं भेदजर्जरम् । प्रतिचक्रे न शक्तोपि तस्थौ तु त्यक्तुमुत्सुकः ॥१५२॥
अचिन्तयच्च सत्यं मे संप्रीतो भूतभावनः । सिद्धिविज्ञानभून्दीर्घानपाकर्तुं समुद्यतः ॥१५३॥
कृत्ये बहुनि निष्पाद्ये अमात्कौसीद्य[1]याश्रयन्[2] । प्रावृषीवाध्वगो दिष्ट्या मोहितोस्मि न निद्रया ॥१५४॥
स्वकाले[1] त्यजता लक्ष्मीं विरक्तां[2] बन्धकीमिव । हठनिर्वासनव्रीडा दिष्ट्या नासादिता मया ॥१५५॥

---

१३०. [1]) Thus corr. by $A_3$ from $A_1$ °पुण्डरीकाक्षज°. १३४. [1]) The *aksharas* श्वरं supplied by $A_3$ in space left by $A_1$.— [2]) $A_2$ gloss ईशब्राडू इति प्रसिद्धस्थले. १३६. [1]) $A_3$ °विशेषतः.—[2]) Thus $A_3$ ; $A_1$ प्राज्यः.—[3]) Thus corr. by later hand from $A_1$ काश्मीर°. १३९. [1]) Thus corr. by later hand from $A_1$ चूडाध्या°. १४५. [1]) Thus corr. by $A_1$ from °त्याख्यः. १४६. [1]) Thus $A_3$; $A_1$ वसन्नपास्तसा°. १४७. [1]) $A_3$ पुत्रा. १५४. [1]) $A_2$ glosses आलस्यम् and---न कर्म कौसीद्यं.—[2]) Thus corr. by $A_3$ from $A_1$ °श्रयम्. १५५. [1]) Thus $A_1$ ; $A_3$ स्वकुले.—[2]) Thus corr. by $A_3$ from $A_1$ सरक्ताम्.

शैलूषस्येव मे राज्यरङ्गेस्मिन्वल्गतश्चिरम् । निर्व्यूढम[1]पि वैरस्यं दिष्टया न प्रेक्षका गताः ॥१५६॥

दिष्टया सदैव वैमुख्यनुचैरुद्घोषयञ्श्रियः । त्यागक्षणे न भीतोस्मि विकत्थन इवाहवे ॥१५७॥

इति संचिन्तयन्नंतः सर्वत्यागोन्मुखो नृपः । मनोराज्यानि कुर्वाणो दरिद्र इव पिप्रिये ॥१५८॥

अन्येद्युः प्रकृतीः सर्वाः संनिपत्य सभान्तरे । ताभ्यः प्रत्यर्पयन्न्यासमिव राज्यं सुरक्षितम् ॥१५९॥

उज्झितं स्वेच्छया तच्च[1] प्रयत्नेनापि नाशकत् । तं स्वीकारयितुं कश्चित्फणीन्द्रमिव कञ्चुकम् ॥१६०॥

अर्चालिङ्गमुपादाय सोथ प्रायादुदङ्मुखः । धौतवासा निरुष्णीषः पद्भ्यामेव प्रजेश्वरः ॥१६१॥

तस्य पादार्पितदृशो व्रजतो मौनिनः प्रभोः । पन्थानं जगृहुः पौरा निःशब्दस्रवदस्रवः ॥१६२॥

स विलङ्घितगव्यूतिरुपविश्य तरोरधः । जनमेकैकमुद्बाष्पं न्यवर्तयत सान्त्वयन् ॥१६३॥

पथि शिखरिणां मूले मूले विलम्ब्य जहज्जनान्मितपरिकरो गच्छन्नूर्ध्वं क्रमात्समदृश्यत ।
गहनवसुधाः संपूर्योच्चैर्व्रजन्स निजात्पदान्नद इव विनिर्यातः स्तोकैः कृतानुगमो[1] जलैः ॥१६४॥

निःशेषं निकटात्स लोकमटवीमध्ये निरुन्धन्पदं[1] शोकावेशसबाष्पगद्गदपदं संमान्य चोत्सार्य च ।
भूर्जत्वक्[2]परिरोधमर्मरम[3]रुन्निद्राणसिद्धाध्वगश्रेणीमौलि[4]मणिप्रभोज्ज्वलगुहागेहं[5] जगाहे वनम् ॥१६५॥

अथ वनसरसीतटद्रुमाधः पुटकघटोदरसंभृताम्बुपूराम् ।
वसतिमकृत वासरावसाने शुचितरुपल्लवकल्पितोच्चतल्पाम् ॥१६६॥

शृङ्गासक्तासितातपाः शवलितच्छायाभुवः शाद्वलैरुत्फुल्ला[1]मलमल्लिकातलमिलत्सुप्तव्रजस्त्रीजनाः ।
सध्वाना वनपालवेणु[2]रणितोन्मिश्रैः प्रपाताम्बुभिः श्रान्तं दृक्पथमागतास्तमनयन्निद्रामदूराद्रयः[3] ॥१६७॥

वनकरि[1]रसितैः पदे पदे स प्रतिभटतां पटहध्वनेर्दधानैः ।
अमनुत रटितैश्च कर्करेटोः परिगलितां गमनोन्मुखस्त्रियामाम् ॥१६८॥

अन्येद्युर्विधिवदुपास्य पूर्वसंध्यामासन्ने नलिनसरस्यपास्तनिद्रः ।
क्ष्मापालः परिचितसोदराम्बुतीर्थं नन्दीशाध्युषितमवाप भूतभर्तुः ॥१६९॥

नन्दिक्षेत्रे त्रिभुवनगुरोः सोग्रतस्तत्र यावत्तस्थौ तावत्[1]स्वयमभिमतावाप्तये जायते स्म ।
भस्मस्मेरः सुघटितजटाजूटबन्धोक्षसूत्री रुद्राक्षाङ्को जरढमुनिभिः सस्पृहं वीक्ष्यमाणः ॥१७०॥

भ्राम्य[1]च्छ्रीकण्ठदत्तव्रतजनितमहासत्क्रियो भैक्षहेतोर्भिक्षादानोद्यतासु प्रतिमुनिनिलयं संभ्रमात्तापसीषु ।
वृक्षैर्भिक्षाकपाले शुचिफलकुसुमश्रेणिभिः पूर्यमाणे मान्यो वैराग्ययोगे[2]ष्यनुपनतपर[3]प्रार्थनालाघवोभूत् ॥१७१॥

६ ॥ १७१ ॥ आदितः ४३ ॥ ग्रं ५४३ ॥

**इति श्रीकाश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां द्वितीयस्तरङ्गः ॥**

**शतद्वये वत्सराणामष्टाभिः परिवर्जिते । अस्मिन्द्वितीये व्याख्याताः षट्प्रख्यातगुणा नृपाः ॥**

---

१५६. [1]) Thus $A_1$; the *v. l.* of $A_2$ निर्व्यूढावपि has been struck out again; G R निर्व्यूढमपि. १६०. [1]) Thus corr. by later hand from $A_1$ तं च. १६४. [1]) Thus corr. by $A_3$ from $A_1$ स्तोकानुगमो. १६५. [1]) Thus $A_3$; $A_1$ निरुद्धयत्पदं.—[2]) Thus corr. by later hand from $A_1$ भूर्जत्वत्प°.—[3]) Thus corr. by $A_3$ from $A_1$ मर्जर°.—[4]) The *akshara* लि supplied by $A_3$ in space left by $A_1$.—[5]) The gloss भोमजोवो, written by $A_4$ at the foot of the page, probably refers to this word. १६७. [1]) Thus corr. by $A_2$ from $A_1$ शाद्वलैरुल्लासामल°; the latter reading repeated in margin by $A_3$.—[2]) Thus G *sec. manu* and P; A R C °पालरेणु°.—[3]) $A_3$ gloss पर्वताः. १६८. [1]) $A_3$ वनहरि°.—[2]) Thus corr. by later hand from $A_1$° ध्वनैर्दे°.— १७०. [1]) $A_1$ यावत्तावत्; supplemented as above by $A_2$. १७१. [1]) $A_3$ भ्राम्यच्छ्री°.—[2]) Thus corr. by $A_3$ from $A_1$ °योग्यो.
[3]) $A_1$ writes °व्यनुपतन°, with figures indicating transposition.

## ॥ तृतीयस्तरङ्गः ॥

मुञ्चेभाजिनमस्य[1] कुम्भकुहरे मुक्ताः कुचाग्रोचिताः किं भालज्वलनेन कज्जलमतः स्वीकार्यमक्ष्णोः कृते ।
संधाने वपुरर्धयोः प्रतिवदन्नेवं निषेधेप्यहेः कर्तव्ये प्रिययोत्तरानुसरणोद्युक्तो हरः पातु वः ॥१॥
अथोल्लसत्पृथुश्लाघमानिन्युर्मेघवाहनम् । गान्धारविषयं गत्वा सचिवाधिष्ठिताः प्रजाः ॥२॥
रक्तप्रजस्य भूभर्तुः पश्चाल्लोकानुरञ्जनम् । तस्याज्ञायि जनैर्धौतक्षौमक्षालनसंनिभम् ॥३॥
स पुनर्बोधिसत्त्वानामपि सत्त्वानुकम्पिनाम् । चर्यामुदात्तचरितैरत्यशेत महाशयः ॥४॥
तस्याभिषेक एवाज्ञां धारयन्तोधिकारिणः । सर्वतोमार[1]मर्यादापटहानुदघोषयन् ॥५॥
कल्याणिना प्राणिवधे तेन राष्ट्रान्निवारिते । निष्पापां प्रापिता वृत्तिं स्वकोशात्सौनिकादयः ॥६॥
तस्य राज्ये जिनस्येव मारविद्वेषिणः प्रभोः । क्रतौ घृतपशुः पिष्टपशुर्भूतबलावभूत् ॥७॥
स मेघवननामानमग्रहारं विनिर्ममे । मयुष्टग्रामकृत्पुण्यज्येष्ठं[1] मेघमठं तदा[2] ॥८॥
भोगाय देश्य[1]भिक्षूणां वल्लभास्यामृतप्रभा । विहारमुच्चैरमृतभवनाख्यमकारयत् ॥९॥
देशैकदेशा[1]ल्लोर्नाम्नः प्राप्तस्तस्याः पितुर्गुरुः । स्तुन्पा[2] तद्भाषया प्रोक्तो लोस्तोन्पास्तूपकार्यकृत् ॥१०॥
चक्रे नडवने राज्ञो यूक[1]देव्यभिधा वधूः । विहारमद्भुताकारं सपत्नीस्पर्धयोद्यता ॥११॥
अर्धे यद्भिक्षवः शिक्षाचारास्तत्रार्पितास्तया । अर्धे गार्हस्थ्यगर्ह्याश्च सस्त्रीपुत्रपशुस्त्रियः ॥१२॥
अथेन्द्रदेवीभवनमिन्द्रदेव्यभिधा व्यधात् । विहारं सचतुःशालं स्तूपं भूपप्रियापरा ॥१३॥
अन्याभिः खादनासम्माप्रमुखाभि[1]र्निजाख्यया । देवीभिस्तस्य महिता विहारा बहवः कृताः ॥१४॥
अर्वाक्कालोद्भवस्यापि राज्यकालोस्य भूपतेः । न्यक्कृतादिनृपोदन्तैर्वृत्तान्तैरद्भुतोभवत् ॥१५॥
स बहिर्विहरञ्जातु भूभृद्भीतैरुदीरितम् । चौरश्चौरोयमित्यारादशृणोत्क्रन्दितध्वनिम् ॥१६॥
कः कोत्र बध्यतां चौर इत्युक्ते तेन सक्रुधा । शशामाक्रन्दितध्वानो न च चौरो व्यभाव्यत ॥१७॥
पुनर्द्वित्रैर्दिनैस्तस्य निर्गतस्याग्रतस्ततः । अभवन्नभयार्थिन्यो द्वित्रा दिव्यप्रभाः स्त्रियः ॥१८॥
ताः संश्रुतेप्सितास्तेन रुद्धाश्चेन कृपालुना । अभ्यभाषन्त सीमन्तपुञ्जिताञ्जलयो वचः ॥१९॥
देव दिव्यप्रभावेण भुवने भवता धृते । अपरस्माद्भयं जातु कस्य स्यात्करुणानिधे ॥२०॥
तदानीं तोयदा भूत्वा छादयन्तो नभस्तलम् । अकाण्डकरकापातशङ्किभिः कार्षकैर्मृषा ॥२१॥
पक्वशालिवनस्फीति[1]रक्षाक्षुभितमानसैः । नागास्त्वत्कोपसंरम्भभूमितां[2] गमिताः प्रभो ॥२२॥

---

१. [1]) $A_2$ gloss इभस्य. ५. [1]) $A_3$ gloss अमारः अहिंसा. ८. [1]) $A_3$ °ज्येष्ठो.—[2]) $A_3$ तथा. ९. [1]) Thus $A_3$; $A_1$ चैष्य°. १०. [1]) Thus $A_1$; corr. by later hand into देद्दयैक°.—[2]) $A_2$ स्तुम्पा. ११. [1]) $A_3$ यूख°. १४. [1]) $A_3$ gloss नृपस्त्रीभिः. २२. [1]) $A_3$ °स्फाति°.—[2]) $A_3$ भूमिं ते.

तेस्माकं पतयश्चौरश्चौर इत्यार्तभाषितम् । श्रुत्वा देवेन बध्यन्तामित्यवादि यदा क्रुधा ॥२३॥
तदा त्वदाज्ञामात्रेण न्यपतन्पाशवेष्टिताः । प्रसादः क्रियतां तेषामस्मत्करुणयाधुना ॥२४॥ चक्कलकम् ॥
तदाकर्ण्यावदद्राजा प्रसादविशदाननः । सर्वे ते बन्धनान्नागास्त्यज्यन्तामिति सस्मितः ॥२५॥
तया तस्याज्ञया राज्ञो नागा विधुतबन्धनाः । प्रणम्य चरणौ तूर्णं प्रययुः सपरिग्रहाः ॥२६॥
अथ ग्राहयितुं भूपानाज्ञां हिंसानिवृत्तये । स दिग्जयाय निर्व्याजधर्मचर्यो विनिर्ययौ ॥२७॥
अभूदभीतजनतावेक्षणश्लाघ्यविक्रमः । स्पृहणीयो जनस्यापि तदीयविजयोद्यमः ॥२८॥
प्रभावविजितान्कृत्वा सोहिंसादीक्षितान्नृपान् । अर्णसां पत्युरभ्यर्णमवापावर्णवर्जितः ॥२९॥
तत्र तालीवनच्छायासुखविश्रान्तसैनिकः[1] । युक्तिं द्वीपान्तराक्रान्तौ क्षणमन्तर्व्यचिन्तयत् ॥३०॥
अथ वेलावनोपान्तात्तेनार्ताक्रन्दितध्वनिः । मेघवाहनराज्येपि हतोहमिति शुश्रुवे ॥३१॥
तत्प्रायःशङ्कुनेवान्तर्व्रणितः स द्रुतं ततः । संचारिणातपत्रेण सत्रा तां वसुधामगात् ॥३२॥
अपश्यदथ केनापि चण्डिकायतनाग्रतः । नरं शबर[1]सेनान्या हन्यमानमधोमुखम् ॥३३॥
अनात्मज्ञ धिगेतत्ते कुकर्मेति महीभुजा । तर्जितः स भयादेवं शबरस्तं व्यजिज्ञपत् ॥३४॥
शिशुर्मुमूर्षुर्मे राजन्नयं रोगार्दितः सुतः । कर्मैतदैवतैरुक्तमस्य श्रेयोलवावहम् ॥३५॥
उपहारनिरोधेन सद्य एवं[1] विपद्यते । बन्धुवर्गमशेषं च विद्ध्येतज्जीवजीवितम् ॥३६॥
अरण्यगहनाल्लब्धमनाथं देव रक्षसि । बहुलोकाश्रयं बालं कथमेतमुपेक्षसे ॥३७॥
अथाभ्यधान्महात्मा स वचोभिः शबरस्य तैः । वध्यस्य दृष्टिपातैश्च विक्लवैर्विवशीकृतः ॥३८॥
किरात कातरो मा भूः स्वयं संरक्ष्यते मया । बहुबन्धुस्तव सुतो वध्योप्ययमबान्धवः ॥३९॥
उपहारीकरोम्येष चण्डिकायै स्वविग्रहम् । मयि प्रहर निःशङ्कं जीवत्वेतज्जनद्वयम् ॥४०॥
तदद्भुतमहासत्त्ववैचित्तोदात्तत्वविस्मितः । उन्मिषद्रोमहर्षस्तं ततः स शबरोभ्यधात् ॥४१॥
अतिकारुण्यमिषतस्तवायं पृथिवीपते । कश्चिन्मतिविपर्यासप्रकारो हृदि रोहति ॥४२॥
त्रैलोक्यजीवितेनापि यो रक्ष्यो हेलयैव तम् । पृथिवीभोगसुभगं कथं कायमुपेक्षसे ॥४३॥
न मानं न यशो नार्थान्न दारान्न च बान्धवान् । न धर्मं न सुतान्भूपा रक्षन्ति प्राणतृष्णया ॥४४॥
तत्प्रसीद प्रजानाथ मा वध्येस्मिन्कृपां कृथाः । शिशुश्चैष प्रजाश्चैता जीवन्तु त्वयि जीवति ॥४५॥
उपाजिहीर्षुरात्मानं दन्तद्योतार्घडम्बरैः । अर्चयन्निव चामुण्डामथोवाच स पार्थिवः ॥४६॥
सदाचारसुधास्वादे के भवन्तो वनौकसः । जाह्नवीमज्जनप्रीतिं न जानन्ति मरुस्थिताः ॥४७॥
ध्रुवापायेन कायेन क्रीणतः कीर्तिमव्ययाम् । ममाभीष्टं[1] प्रमाष्टुं ते मूढ रूढोयमाग्रहः ॥४८॥
मा वोचः किंचिदपरं प्रहर्तुं चेद्घृणा तव । न किं निजः कृपाणो मे शक्तः प्रक्रान्तसिद्धये ॥४९॥
इत्युक्त्वा स स्वयं देहमुपहर्तुं समुद्यतः । खण्डनाय स्वमुण्डस्य विकोशं शस्त्रमादधे ॥५०॥
ततः प्रहर्तुकामस्य तस्य द्युकुसुमैः शिरः । करश्च दिव्यवपुषा रुद्धः केनाप्यजायत ॥५१॥

---

३०. [1]) Thus corr. by later hand from $A_1$ °कैः. ३३. [1]) A R G here and elsewhere शवर°. ३६. [1]) $A_3$ एव. ४८. [1]) Thus corr. by later hand from $A_1$ °भीष्टां.

अथापश्यत्तथाभूतः कंचिद्दिव्याकृतिं पुरः । न चण्डिकां न तं वध्यं न किरातं न दारकम् ॥५२॥

स तं दिव्यस्तदावादीन्मां त्वं सत्त्ववशीकृतम् । विद्धि मध्यमलोकेन्दो वरुणं करुणानिधे ॥५३॥

यदेतत्त्वामुपास्तेद्य छत्त्रं तन्मत्पुरात्पुरा । महाबलोहरद्वीमः पुराणश्वशुरस्तव ॥५४॥

रसातलैकतिलकं माहात्म्यवदिदं विना । उपद्रवाः प्राणहराः पौराणां नः पदे पदे ॥५५॥

तदिदं प्राप्तुकामेन त्वदौदार्यं परीक्षितुम् । कारुण्यमय मायेयं निरमायि मयेदृशी ॥५६॥

त्वदादिर्यो व्यधाज्जन्तून्व्यसून्वसुकु[1]लात्मजः । प्रायश्चित्तममारेण चरसीव तदेन[1]सः ॥५७॥

भयस्पृहाजन[1]कयोर्धरणीधारणोचिते । शेषदेहे विषोद्गारफणारत्नौघयोरिव ॥५८॥

तमःप्रकाशावहयोस्तेजःक्रान्तदिगन्तरे । उषर्बुधे धूमजालज्वालापल्लवयोरिव ॥५९॥

क्रमाप्यायक्रियाभाजो रुद्धतेजस्विमण्डले । प्रावृट्पयोदच्छन्नेह्नि संतापासारयोरिव ॥६०॥

द्वयोरालोकितं चित्रं जन्मैकस्मिन्महाकुले । तस्य त्रिकोटिहन्तुश्च तवाहिंसस्य च प्रभोः ॥६१॥ चक्कलकम् ॥

नम्रः सम्राडथैवं स वदतो यादसां प्रभोः । चकार पूजां स्तोत्रेण छत्त्रेण च कृताञ्जलिः ॥६२॥

तं च स प्रतिगृह्णन्तं प्रणयादुष्णवारणम् । जगाद गुणिनामग्र्यो वरुणं धरणीधरः ॥६३॥

कल्पद्रुमाश्च सन्तश्च नार्हन्ति समशीर्षिकाम् । अर्थिनां प्रार्थिताः पूर्वे फलन्त्यन्ये स्वयं यतः ॥६४॥

अत्रालम्बिष्यत छत्त्रं कथं नः पुण्यपण्यताम् । तत्प्रार्थयिष्य[1]तं न चेदार्तोपकृतये भवान् ॥६५॥

वदान्य[1]ः संविभाग्येभ्य[2]ः पूर्णो कुर्यादनुग्रहम् । छाययाप्याययन्दद्या[3]त्फलान्यपि महीरुहः ॥६६॥

तदे[1]वं विहितोदात्तसंविभागाभिचोदितः । जनोयं भगवन्किंचिद्वरं प्रार्थयते परम् ॥६७॥

वशीकृतेयं पृथिवी कृत्स्ना भवदनुग्रहात् । जेतुं द्वीपान्कथ्यतां तु युक्तिः पाथोधिलङ्घने ॥६८॥

इत्यर्थ्यमानोकथयद्भूमिपालं जलेश्वरः । तितीर्षौ भवति स्तम्भं नीयतेम्भो मयाम्बुधेः ॥६९॥

ततो महान्प्रसादोयमित्युक्ते पृथिवीभुजा । तिरोबभूव भगवान्वरुणः सोष्णवारणः ॥७०॥

अन्येद्युर्विस्मयस्मेरैर्बलैः सीमन्तयञ्जलम् । प्रभावस्तम्भितक्षो[1]भं प्रोत्ततार स वारिधिम् ॥७१॥

गुणरत्नाकरः शैलं स रत्नाकरशेखरम् । नानारत्नाकरं सैन्यैरारुरोहाथ रोहणम् ॥७२॥

तत्र तालीतरुवनच्छायाध्यासितसैनिकम् । प्रीत्या लङ्काधिराजस्तमुपतस्थे विभीषणः ॥७३॥

समागमः स शुशुभे नरराक्षसराजयोः । वन्दिना[1]द्भुतान्यो[2]न्यप्रथमालापसंभ्रमः ॥७४॥

अथ रक्षःपतिर्लङ्कां नीत्वालंकरणं क्षितेः । अमर्त्यसुलभाभिस्तं विभूतिभिरुपाचरत् ॥७५॥

यदासीत्पिशिताशा इत्यन्वर्थं नाम रक्षसाम् । तदा तदाज्ञाग्रहणे प्रापि तद्रूढिशब्दताम् ॥७६॥

रक्षःशिरःप्रतिच्छन्दैः[1] स्थिरप्रणतिसूचकैः । सनाथशिखरान्प्रादात्तस्मै रक्षःपतिर्ध्वजान् ॥७७॥

पाराद्वारिनिधेः प्राप्ताः कश्मीरेष्वधुनापि ये । राज्ञां यात्रासु निर्यान्ति ख्याताः पारध्वजाः पुरः ॥७८॥

इत्थमाराक्षसकुलं प्राणिहिंसां निषिध्य सः । स्वमण्डलं प्रति कृती न्यवर्तत नराधिपः ॥७९॥

---

५७. [1]) The *aksharas* न्व्यसून्वसुकु and मारेण चरसीव तदेनसः supplied by $A_3$ in spaces left by $A_1$. ५८. [1]) भयस्पृहाजन supplied by $A_3$, as above. ६५. [1]) त supplied by $A_3$. ६६. [1]) Emended; A R G वदन्यः.—[2]) $A_1$ gloss अर्थिभ्यः.—[3]) Thus corr. by $A_3$ from $A_1$ दध्यात्. ६७. [1]) Thus corr. by $A_3$ from $A_1$ तदयं. ७१. [1]) Thus $A_1$; $A_3$ जलं. ७४. [1]) दा supplied by $A_3$.—[2]) न्योन्य supplied by $A_3$ in space left by $A_1$. ७७. [1]) $A_1$ gloss प्रतिमाभिः.

ततः[1] प्रभृति तस्याज्ञा सार्वभौमस्य भूपतेः । हिंसाविरतिरूपा सा न कैश्चिदुदलङ्घ्यत ॥८०॥
क्षुद्रैरुध्रादिभिर्नाप्सु सिंहाद्यैर्गहने न च । न श्येनप्रमुखैर्व्योम्नि तद्राज्ये जन्तवो हताः[1] ॥८१॥
अतिक्रामति कालेथ कोपि शोकाकुलो द्विजः । पुत्रं गदार्तमादाय द्वारि चक्रन्द भूपतेः ॥८२॥
दुर्गया प्रार्थितं राजन्पश्वाहारं[1] विनैष मे । अनन्यसंततेः सूनुर्ज्वरेणाद्य विपद्यते ॥८३॥
यद्यहिंसाग्रहेणेमं क्षितिपाल न रक्षसि । एतद्विपत्तौ तत्कोन्यो निमित्तं प्रतिभाति मे ॥८४॥
निर्णयो वर्णगुरुणा त्वयैवैष प्रदीयताम् । ब्राह्मणस्य पशोर्वा स्यात्प्राणानां कियदन्तरम् ॥८५॥
तपःस्थानपि ये जघ्नुर्ब्राह्मणप्राणलब्धये । हा मातस्तेधुना भूमे प्रजापालास्तिरोहिताः ॥८६॥
इति ब्रुवति साक्षेपं शोकरूक्षाक्षरं द्विजे । आपन्नार्तिहरो राजा चिरमेवं व्यचिन्तयत् ॥८७॥
न वध्याः प्राणिन इति प्राङ्मया[1] समयः कृतः । विप्रार्थमपि किं कुर्यां स प्रतिज्ञातविप्लवम् ॥८८॥
निमित्तीकृत्य मामद्य विपद्येत द्विजो यदि । तत्राप्यत्यन्तपापीयानर्थः संकल्पविप्लवः ॥८९॥
नैति मे संशयभ्रान्तमेकपक्षावलम्बनम् । संभेदावर्तपतितं प्रसूनमिव मानसम् ॥९०॥
तत्स्वदेहोपहारेण दुर्गां तोषयता मया । प्रतिज्ञया समं न्याय्यं रक्षितुं जीवितं द्वयोः ॥९१॥
इति संचिन्त्य सुचिरं देहदानोद्यतो नृपः । श्वः प्रियं तव कर्तास्मीत्युक्त्वा विप्रं व्यसर्जयत् ॥९२॥
क्षपायां क्ष्मापतिमथ स्वमुपाहर्तुमुद्यतम् । निषिध्य दुर्गा व्यधित प्रकृतिस्थं द्विजन्मजम् ॥९३॥
इत्याद्यद्यतनस्यापि चरितं तस्य भूपतेः । पृथग्जनेष्वसंभाव्यं वर्णयन्तस्त्रपामहे ॥९४॥
अथवा[1] रचनानिर्विशेषमार्षेण वर्त्मना । प्रस्थितां[2] नानुरुन्धन्ति श्रोतृचित्तानुवर्तनम् ॥९५॥
तस्मिन्नस्तंगते भुक्त्वा क्ष्मां चतुस्त्रिंशतं समाः । अनादित्यमिवाशेषं निरालोकमभूज्जगत् ॥९६॥
अथ क्ष्माभृद्ररक्ष क्ष्मां श्रेष्ठसेनस्तदात्मजः । आहुः प्रवरसेनं यं तुञ्जीनं चाञ्जसा जनाः ॥९७॥
दोःस्तम्भसंभृतासक्तौ कृपाणमणिदर्पणे । संक्रान्तेवोन्मुखी यस्य भुवनश्रीर्व्यभाव्यत ॥९८॥
समातृचक्रं निर्माय यः पूर्वं प्रवरेश्वरम् । पुण्याः पुराणाधिष्ठाने प्रतिष्ठा विविधा व्यधात् ॥९९॥
गृहाङ्गनमिव क्षोणीं गणयन्वशवर्तिनीम् । त्रिगर्तोर्व्यां ग्राममध्ये[1] प्रवरेशाय यो ददौ ॥१००॥
ईशो नृपाणां निःशेषक्ष्माकेदारकुटुम्बिनाम् । स समास्त्रिंशतं भूभृदनिस्त्रिंशाशयोभवत् ॥१०१॥
हिरण्यतोरमाणाख्यौ व्यधत्तामथ तत्सुतौ । साम्राज्ययुवराजत्वभाजने रञ्जनं क्षितेः ॥१०२॥
बलाहतानां[1] प्राचुर्यं विनिवार्यासमञ्जसम् । तोरमाणेन दीन्नाराः[2] स्वाहताः[3] संप्रवर्तिताः ॥१०३॥
मामवज्ञाय राज्ञेव कस्मादितेन[1] वल्गितम् । इति तं पूर्वजो राजा क्रोधनो बन्धने व्यधात् ॥१०४॥
चिरंस्थितित्यक्तशुचस्तत्र तस्याञ्जनाभिधा । ऐक्ष्वाकस्यात्मजा राज्ञी वज्रेन्द्रस्यास्त गुर्विणी ॥१०५॥
आसन्नप्रसवा भर्त्रा सा त्रपार्तेन[1] बोधिता । सुतं प्रविष्टा प्रासोष्ट कुलालनिलये क्वचित् ॥१०६॥
स कुम्भकारगेहिन्या काक्येव पिकशावकः । पुत्रीकृतो राजपुत्रः पर्याप्तं पर्यवर्धत ॥१०७॥

---

८०—८१. [1])—[1]) These two verses have been supplied in margin by $A_3$. ८३. [1]) $A_3$ राजन्नुपहारं. ८८. [1]) $A_3$ प्राग्योऽहिम समकल्पयम्. ९५. [1]) This verse is supplied by $A_3$ in margin.—[2]) $A_3$ gloss जनाः. १००. [1]) Thus $A_3$; $A_1$ °सख्ये १०३. [1]) Thus A; G R Edd. बाला°.—[2]) $A_3$ gloss सुवर्णमया रजतताम्रमयाश्च.—[3]) $A_3$ gloss स्वाहताः स्वनामाक्षरमुद्राङ्कनेन आहताः संप्रवर्तिताः व्यवहारविषयाः कृताः. १०४. [1]) $A_3$ gloss तोरमाणेन. १०६. [1]) $A_3$ gloss त्रपार्तेन सलज्जेन.

जनयित्र्याः कुलाल्याश्च रक्षित्र्या विदितोभवत् । रत्नसूतेर्भुजंग्याश्च[1] प्रच्छन्न इव शेवधिः ॥१०८॥
पौत्रः प्रवरसेनस्य गिरा मातुर्नृपात्मजः । पैतामहेन नाम्नैव कुलाल्या ख्यापितोभवत् ॥१०९॥
वर्धमानः स संपर्कं न सेहे सहवासिनाम् । तेजस्विमैत्रीरसिकः शिशुः पद्म इवाम्भसाम् ॥११०॥
तं कुलीनैश्च शूरैश्च विद्याविद्भिश्च दारकैः। अन्वीतमेव ददृशुः क्रीडन्तं विस्मयाज्जनाः ॥१११॥
स्ववृन्दस्यात्युदारौजा[1] राजा चक्रे स दारकैः । मृगेन्द्रशावः क्रीडद्भिर्वने बालमृगैरिव ॥११२॥
संविभेजेनुजग्राह वशीचक्रे च सोर्भकान् । अराजोचितमाचारं नैव कंचिदसेवत[1] ॥११३॥
भाण्डादि कर्तुं मृत्पिण्डं कुम्भकारैः समर्पितम् । स्वीकृत्य चक्रिरे तेन शिवलिङ्गपरंपराः ॥११४॥
तथा साश्चर्यचर्यः स क्रीडञ्जातु व्यलोक्यत । मातुलेन जयेन्द्रेण सादरं चाभ्यनन्द्यत ॥११५॥
आवेद्यमानं शिशुभिस्तं जयेन्द्रोयमित्यसौ[1] । भूपालवत्सावहेलं पश्यन्नन्वग्रहीदिव ॥११६॥
संभाव्य सत्त्वावष्टम्भात्तमसामान्यवंशजम् । सादृश्याद्भगिनीभर्तुर्भागिनेयमशङ्कत ॥११७॥
सत्वरस्तत्त्वजिज्ञासारसेनानुससार तम् । प्राप्तस्तद्गृहमौत्सुक्यात्स्वसारं च व्यलोकयत् ॥११८॥
सा स चान्योन्यमुन्मन्यू पश्यन्तौ भ्रातरौ चिरात् । निःश्वासद्विगुणोष्माणि मुहुरस्रूण्यमुञ्चताम् ॥११९॥
कुलाल्या दारको मातः कावेताविति पृष्टवान् । अकथ्यतेत्थं वत्सैषा मातायं मातुलश्च ते ॥१२०॥
पितुर्बन्धेन सक्रोधं तं कालापेक्षयाक्षमम् । शिक्षयित्वा जयेन्द्रोथ कार्यशेषाय निर्ययौ ॥१२१॥
उत्पिञ्जोत्पादनासञ्जे[1] तस्मिन्भ्रात्रा यदृच्छया । बन्धात्त्यक्तो नृतरणिस्तोरमाणोस्तमाययौ ॥१२२॥
निवार्य मरणोद्योगं मातुर्निर्वेदखेदितः । ययौ प्रवरसेनोथ तीर्थौत्सुक्याद्दिगन्तरम् ॥१२३॥
रक्षित्वा दशमासोनाः क्ष्मामेकत्रिंशतिं समाः । तस्मिन्क्षणे हिरण्योपि शान्ति निःसंततिर्ययौ ॥१२४॥
तत्रानेहस्युज्जयिन्यां श्रीमान्हर्षापराभिधः । एकच्छत्रश्चक्रवर्ती विक्रमादित्य इत्यभूत् ॥१२५॥
भूपमद्भुतसौभाग्यं श्रीर्वद्धरभसाभजत् । विहाय हरिबाहूंश्च चतुरः सागरांश्च यम् ॥१२६॥
लक्ष्मीं कृत्वोपकरणं गुणे येन प्रवर्धिते[1] । श्रीमत्सु गुणिनोद्यापि तिष्ठन्त्युद्धुरकन्धराः ॥१२७॥
म्लेच्छोच्छेदाय वसुधां हरेरवतरिष्यतः[1] । शकान्विनाश्य येनादौ कार्यभारो लघूकृतः ॥१२८॥
नानादिगन्तराख्यातं गुणवत्सुलभं नृपम् । तं कविर्मातृगुप्ताख्यः सर्वास्थानस्थमासदत्[1] ॥१२९॥
स गम्भीरस्य भूभर्तुरनुभावं महाद्भुतम् । विविधास्थानसंवृद्धस्तस्याभ्यूह्य व्यचिन्तयत् ॥१३०॥
सोयमासादितः पुण्यैः क्षोणिपालो गुणिप्रियः । परभागोपलम्भाय पूर्वेमुष्य महीभुजः ॥१३१॥
यस्मिन्नाजनि[1] तत्त्वज्ञैः सूरिभिः संभृतश्रुतैः । नाञ्जलिर्दीयते जातु मानाय च गुणाय च ॥१३२॥
भङ्ग्यामुष्मिन्विदधती स्वाभिप्रायप्रकाशनम् । वैदग्ध्यवन्ध्यतां नैति बुद्धिः कुलवधूरिव ॥१३३॥
खिलीकृतखलालापे युक्तायुक्तविवेक्तरि । नायाति सेव्यमानेस्मिन्स्वगुणोनर्थकारिताम् ॥१३४॥
अनामुवद्भिः सावद्यदुर्विद्यसमर्शीर्षिकाम् । जीवन्मरणमस्याग्रे गुणिभिर्नानुभूयते ॥१३५॥

---

१०८. 1) $A_3$ gloss भूमेः. ११२. 1) $A_2$ gloss अतिशयेन उदारं ओजः यस्य. ११३. 1) Thus corr. by later hand from A किंचिद°. ११६. 1) $A_3$ gloss प्रवरसेनः. १२२. 1) Thus $A_1$; $A_1$ has given a *varia lectio* in margin of which only उत्पिञ्जो-ह्रास- is legible (उत्पिञ्जोह्रासनासञ्जे ?). $A_3$ उत्पिञ्जोत्पादने सञ्जे, with gloss द्वन्द्वयुद्धस्य कोलाहले सञ्जे सति. १२७. 1) G Edd. गुणो येन प्रवर्धते. १२८. 1) $A_3$ gloss कल्किनाम्नः. १२९. 1) G *sec. manu* and Edd. सभास्था°. १३२. 1) $A_3$ अस्मिन्ना°.

संभावनानुसारेण[1] प्रवृत्तोस्माद्विवेकिनः । शोच्यते नाञ्चितोच्छ्वासं प्रीतिदायो महाशयैः ॥१३६॥
गृह्णन्यथागुणं स्वान्तमुचितप्रतिपत्तिभिः[1] । अन्तरज्ञः समस्तानामयमुत्साहवर्धनः ॥१३७॥
सेवया दृष्टकष्टस्य दाक्षिण्योत्पादने श्रमः । अस्य यो न स भृत्यानां हिमाद्रौ हिमविक्रयः ॥१३८॥
मिथ्याख्यातगुणो नाप्तो नामात्यः कलहप्रियः । असत्यसंधः स्थेयो वा नास्थानेस्य महीपतेः ॥१३९॥
अश्लीलालापिनोन्योन्यं नर्मोक्त्या मर्मभेदिनः । अन्यप्रवेशासहनाः संहता नास्य सेवकाः ॥१४०॥
छन्दानुवर्तिनामेष निजविज्ञानवन्दिनाम् । सर्वज्ञंमन्यतान्धानां मुखप्रेक्षी न पार्थिवः ॥१४१॥
अनेन सह संजातः संलापो विपुलोदयः । लभ्यते नान्तराच्छेत्तुं दुर्जातैर्जातु दुर्जनैः ॥१४२॥
सर्वदोषोज्झितं सेव्यं नृपमेवमिमं मम । समासादयतः पुण्यैरदूरे स्वार्थसिद्धयः ॥१४३॥
गम्भीरश्च गुणज्ञश्च स्थिरबुद्धिश्च पार्थिवः । एष क्लेशभयं त्यक्त्वा निषेव्यः प्रतिभाति मे ॥१४४॥
न चास्माद्धनमादाय रञ्जितादन्यराजवत् । भ्राम्यतो[1] भूतलेमुष्मिन्सेव्योन्यः प्रतिभाति मे ॥१४५॥
इति संचिन्त्य सुदृढं स नवामिव तां सभाम् । नारञ्जयन्न[1] चास्ते स्म गुणिगोष्ठीषु मध्यगः ॥१४६॥
मृदुपूर्वं गुणानेवं दर्शयन्तं विशांपतिः । विशिष्टयोग्यताज्ञप्त्यै विवेदाराधनोन्मुखम् ॥१४७॥
अचिन्तयच्च नायं स्याद्गुणिमात्रं महाशयः । उदात्तं सत्क्रियार्हत्वं वदत्यस्य गभीरता ॥१४८॥
इति संचिन्त्य राज्ञापि ज्ञातुं तस्यान्तरं मतेः । नाक्रियन्त परीक्षार्थं यथावल्लाभसत्क्रियाः ॥१४९॥
स तेनानुपचारेण तमुदात्ताशयं नृपम् । स्वीकर्तारं विदन्धीमान्सिषेवे प्रीतिमाश्रितः ॥१५०॥
क्रमोपचीयमानेन सेवाभ्यासेन धीमतः । तस्य नोद्वेगमगमत्स्वकाय इव पार्थिवः ॥१५१॥
नातीव स्वल्पया स्थित्या नातीवाप्यथ दीर्घया । शरन्निशाक्षणेनेव राजा[1] निन्ये[2] प्रसन्नताम् ॥१५२॥
नर्मभिर्गर्भचेटानां द्वाःस्थानां विक्रियाक्रमैः । मिथ्यास्तवैर्विटानां च न स क्षोभमनीयत ॥१५३॥
प्रसन्नालापसंप्राप्तौ छायामह इवाचलः । प्रतिस्पर्धीव च क्रुध्यन्नावज्ञायामभूत्प्रभोः ॥१५४॥
वीक्षणं राजदासीनां राजद्विष्टैः[1] सहासनम् । राजाग्रे च कथां नीचैः कालविन्नाचचार सः ॥१५५॥
स्वभावाद्राजपुरुषैः सजनै राजनिन्दकैः । नास्मात्[1]प्रभोरुपालम्भो लेभे पैशुन्यजीविभिः ॥१५६॥
वदद्भिरादरात्स्थैर्ये वैफल्याद्यन्वहं प्रभोः । निन्ये नोत्साहशैथिल्यं सेवोत्साहासहिष्णुभिः ॥१५७॥
अन्योत्कर्षानपि वदन्प्रसङ्गेन निराग्रहः । स्वविद्याद्योतकः सोभूत्सभ्यानां हृदयंगमः ॥१५८॥
एवं स सेवमानस्तमुद्योगेन बलीयसा । अनिर्विण्णो[1] मातृगुप्तः षडृतूनत्यवाहयत् ॥१५९॥
अथ तं कृशसर्वाङ्गं धूसरं जीर्णवाससम् । बहिर्जातु विनिर्यातो राजा वीक्ष्य व्यचिन्तयत् ॥१६०॥
वैदेशिको निःशरणो गुणवान्बान्धवोज्झितः । दार्ढ्यं जिज्ञासुना कष्टं सोयमायासितो मया ॥१६१॥
कोस्याश्रयः किमशनं कानि प्रावरणानि वा । इत्यैश्वर्यविमूढेन मया हन्त न चिन्तितम् ॥१६२॥
वसन्तेनेव न मया शोभयाद्यापि योजितः । शीतवातातपैः शुष्यन्सोयं पुरुषपादपः ॥१६३॥

---

१३६. [1]) संभावनानुसा supplied by $A_3$ in space left by $A_1$. १३७. [1]) $A_3$ gloss प्रतिपत्तिः सत्कारः सत्क्रिया पूजनं माननमिति यावत्. १४५. [1]) Thus corr. by $A_3$ from $A_1$ भ्राम्यते. १४६. [1]) Thus corr. by $A_3$ from $A_1$ नारञ्जन्न°. १५२. [1]) $A_1$ gloss राजा चन्द्रोपि.—[2]) $A_3$ gloss मातृगुप्तेन. १५५. [1]) $A_3$ gloss राजशत्रुभिः. १५६. [1]) $A_3$ gloss मातृगुप्तात्. १५९. [1]) Thus corr. by $A_3$ from $A_1$ अनिर्विन्नो.

अस्य ग्लानस्य भैषज्यं निर्विण्णस्य विनोदनम् । श्रान्तस्य वा क्रमच्छेदं को विदध्यादसंपदः ॥१६४॥
नास्मै चिन्तामणिं दध्यां नामृतं वा निषेवितः[1] । मया यदयमेतावद्व्यामूढेन परीक्ष्यते ॥१६५॥
तदमुष्य गुणित्वस्य तीव्रसेवाश्रमस्य च । प्रतिपत्त्या[1] कतमया तावदानृण्यमाप्नुयाम् ॥१६६॥
इति चिन्तयतस्तस्य राज्ञस्तं सेवकं प्रति । स्वप्रसादोचिता काचिन्नात्यभाच्चैव[1] सत्क्रिया ॥१६७॥
ततः प्रावर्तत स्फारनीहारलववाहिभिः । दहन्निवाङ्गं प्रालेयपवमानैर्हिमागमः ॥१६८॥
संततध्वान्तमिषतस्तीव्रशीतवशीकृताः । आशाश्चकाशिरे नीलनिचोलाच्छादिता इव ॥१६९॥
शीतार्त्या द्युमणावौर्वदहनोष्माभिलाषतः । द्रुतं यातीव जलधिं दिनानि लघुतां ययुः ॥१७०॥
अथ दीपोज्ज्वले धाम्नि लसद्दीप्रहसन्तिके[1] । कदाचिन्नृपतिर्दैवादर्धरात्रे व्यबुध्यत ॥१७१॥
स हेमन्तानिलैर्भूरिभांकारपरुषैः पुरः । दीपान्प्रकम्पितानीषत्प्रविष्टैर्धाम्नि दृष्टवान् ॥१७२॥
तानुज्ज्वलयितुं भृत्यानन्विष्यन्नभ्यधात्ततः । यामिकेषु[1] बहिः सज्जः को वर्तत इति स्फुटम् ॥१७३॥
सुखसुप्तेषु सर्वेषु बाह्यकक्ष्यान्तरात्ततः । राजन्नयमहं मातृगुप्त इत्यशृणोद्वचः ॥१७४॥
प्रविशेति स्वयं राज्ञा दत्तानुज्ञस्ततो गृहम् । लक्ष्मीसांनिध्यरम्यं तदपृष्टो[1]न्यैर्विवेश सः ॥१७५॥
दीपानुज्ज्वलयेत्युक्तो निष्पाद्य चतुरैः पदैः । बहिर्यियासुरूचेथ[1] क्षणं तिष्ठेति भूभुजा ॥१७६॥
स भयद्विगुणीभूतशीतकम्पः प्रभोः पुरः । किं स्विद्वक्तीति विमृषन्नातिदूरेभ्युपाविशत् ॥१७७॥
अथ पप्रच्छ भूपालः कियत्यस्ति निशेति तम् । सोभ्यधाद्देव यामिन्या यामः सार्धोवशिष्यते ॥१७८॥
ततो भूभृदुवाचैनं कथं सम्यङ्निशाक्षणः । त्वयावधारितो निद्रा कथं नाभूच्च ते निशि ॥१७९॥
अथ कृत्वा क्षणाच्छ्लोकमेतं तं स व्यजिज्ञपत् । अवस्थावेदना[1]दाशां दैन्यं वा त्यक्तुमुद्यतः ॥१८०॥
शीतेनोद्धूषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे ।
निद्रा क्वाप्यवमानितेव दयिता संत्यज्य दूरं गता सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥१८१॥
तदाकर्ण्य महीपालः साधुवादैः परिभ्रमम् । अभिनन्द्य कवीन्द्रं तं पूर्वस्थानं व्यसर्जयत् ॥१८२॥
अचिन्तयच्च धिङ्मां यः सगुणाखिन्नचेतसः । दुःखोत्तप्तं वचः शृण्वन्नेवमेवाधुना स्थितः ॥१८३॥
निरर्थकान्साधुवादानन्यस्येव विदन्मम । अयमज्ञातहृदयो दुःखमास्ते ध्रुवं बहिः ॥१८४॥
चिरं चिन्तयतो यत्नात्सदृशीमस्य सत्क्रियाम् । देयं महार्हमद्यापि न किंचित्प्रतिभाति मे ॥१८५॥
अथ वास्यैव सूक्तेन[1] स्मारितोस्म्यधुना यथा । वर्तते राजरहितं काम्यं कश्मीरमण्डलम् ॥१८६॥
पात्रायास्मै मही तस्मात्सा मया प्रतिपाद्यते । अवधीर्य महीपालान्महतोप्यर्थनापरान् ॥१८७॥
इति निश्चित्य चतुरं क्षपायामेव पार्थिवः । गूढं व्यसर्जयद्दूतान्काश्मीरीः प्रकृतीः प्रति[1] ॥१८८॥
आदिदेश च तान्यो वो दर्शयेच्छासनं मम । मातृगुप्ताभिधो राज्ये निःशङ्कं सोभिषिच्यताम् ॥१८९॥
अथ दूतेषु यातेषु लेखयित्वा स्वशासनम् । क्ष्मापतिस्तं क्षपाशेषं कृतकृत्योत्यवाहयत् ॥१९०॥

---

१६५. [1]) $A_3$ gloss अनेन इत्यर्थः. १६६. [1]) $A_3$ gloss सत्क्रियया. १६७. [1]) $A_3$ gloss चित्तविषयं न गता इत्यर्थः. १७१. [1]) $A_3$ gloss हसन्तिका मग्नाग्निका. १७३. [1]) $A_3$ gloss रात्रिजागरेषु पुरुषेषु. १७५. [1]) $A_3$ तददृष्टो. १७६. [1]) Thus corr. by $A_3$ from $A_1$ °रूचे च. १८०. [1]) $A_1$ gloss अवस्थायाः आवेदनं तस्मात्. १८६. [1]) $A_3$ gloss सत्पात्रेत्यादिना. १८८. [1]) $A_3$ gloss सचिवान् प्रति.

मातृगुप्तस्तु नृपतेः संलापमपि निष्फलम् । ध्यायन्गृहीतनैराश्यस्त्यक्तभार इवाभवत् ॥१९१॥
अन्तर्दध्यौ च कर्तव्यं कृतं शान्तोद्य संशयः । आशापिशाचिकात्यक्तश्चरिष्याम्यधुना सुखम् ॥१९२॥
गतानुगतिकत्वेन कोयमासीन्मम भ्रमः । जनप्रवादात्सेव्यत्वं येनास्य ज्ञातवानहम् ॥१९३॥
भुञ्जानाः पवनं सरीसृपगणाः प्रख्यापिता भोगिनो गायद्भृङ्गनिवारका निगदिता विस्तीर्णकर्णा गजाः ।
यथाभ्यन्तरसंभृतोष्मविकृतिः प्रोक्तः शमी स द्रुमो लोकेनेति निरर्गलं प्रलपता सर्वं विपर्यासितम् ॥१९४॥
अथ वा विद्यतेमुष्य न काप्यनभिगम्यता । लक्ष्मीप्रणयिनो येन कृताः प्रणयिनां गृहाः ॥१९५॥
त्यागिनो निष्कलङ्कस्य को दोषोस्य महीपतेः । ममापुण्यं तु तन्निन्द्यं यच्छ्रेयःप्रतिबन्धकम् ॥१९६॥
रत्नोज्ज्वलाः प्रविकिरंल्लहरीः समीरैरब्धिः क्रियेत यदि रुद्धतटाभिमुख्यः ।
दोषोर्थिनः स खलु भाग्यविपर्ययाणां[1] दातुर्मनागपि न तस्य तु दातृतायाः ॥१९७॥
उत्तानफललुब्धानां वरं राजोपजीविनः । न तु तत्स्वामिनस्तीव्रपरिक्लेशैः फलन्ति ये ॥१९८॥
तिष्ठन्ति ये पशुपतेः किल पादमूले संप्राप्यते झटिति तैर्नहि भस्मनोन्यत् ।
ये तद्भृषस्य तु समुज्ज्वलजातरूपप्राप्त्या न कानि सुदिनानि सदैव तेषाम् ॥१९९॥
चिन्तयन्नपि पश्यामि न कंचिद्दोषमात्मनः । यातो विरक्तिं यं ज्ञात्वा सेव्यमानोप्ययं नृपः ॥२००॥
अथ वानादृतोन्येन संप्राप्नोन्तिकमामुयात् । कः फलेनाभिसंबन्धं गतानुगतिकात्प्रभोः ॥२०१॥
अन्तर्ये सततं लुठन्त्यगणितास्तानेव पाथोधरैराप्तानापततस्तरङ्गवलयैरालिङ्ग्य गृह्णन्नसौ ।
व्यक्तं मौक्तिकरत्नतां जलकणान्संप्रापयत्यम्बुधिः प्रायोन्येन कृतादरो लघुरपि प्राप्नोच्यैते[2] स्वामिभिः ॥२०२॥
इदं संचिन्तयन्सोभूत्सेव्ये तस्मिन्निरादरः । खिन्नस्य हि विपर्येति तत्त्वज्ञस्यापि शेमुषी ॥२०३॥
प्रभातायां विभावर्यामथास्थानस्थितो नृपः । आकार्यतां मातृगुप्त इति क्षत्तारमादिशत् ॥२०४॥
ततः प्रधावितानेकप्रतीहारप्रवेशितः । प्रविवेश महीभर्तुस्त्यक्ताश इव सोन्तिकम् ॥२०५॥
तस्मै कृतप्रणामाय मुहूर्तादेव पार्थिवः । भ्रूसंज्ञितेन व्यतरल्लेखं लेखाधिकारिणा ॥२०६॥
स्वयं च तमुवाचाङ्ग कश्मीरान्वेत्ति किं भवान् । गत्वा तत्राधिकारिभ्य एतच्छासनमर्प्यताम् ॥२०७॥
स शापितोस्मदीहेन यो लेखं वाचयेत्पथि । संविदेषा प्रयत्नेन विस्मर्तव्या न जातु चित् ॥२०८॥
अविज्ञाताशयो राज्ञस्तामाज्ञां क्लेशशङ्कितः । सोबुद्ध दहनज्वालां न तु रत्नाङ्कुरद्युतिम् ॥२०९॥
यथादेशस्तथेत्युक्त्वा मातृगुप्ते विनिर्गते । निर्गर्वः पूर्ववद्राजा तस्थावाप्तैः सहालपन् ॥२१०॥
अथाक्लेशोचितं क्षाममपाथेयमबान्धवम् । दृष्ट्वा यान्तं मातृगुप्तं निनिन्देति नृपं जनः ॥२११॥
अहो नरेश्वरस्येयं यत्किंचनविधायिता । पृथग्जनोचिते कर्मण्यर्हतो निदधाति यः ॥२१२॥
दुराशया धृतक्लेशं सेवमानमहर्निशम् । ध्रुवं क्लेशार्हमेवैनं ज्ञातवानबुधो नृपः ॥२१३॥
उपायं यं[1] पुरस्कृत्य सेवते सेवकः प्रभुम् । अनन्तरज्ञस्तत्रैव योग्यं तं किल मन्यते ॥२१४॥

१९७. [1]) $A_3$ °पर्ययेण. १९८. [1]) $A_1$ glosses राजोपजीविनः पुरुषाः, तत्स्वामिनः तेषां स्वामिनः कर्तारः न वरं. २०२. [1]) Thus corr. by later hand from $A_1$ लुठन्ति ग°.—[2]) Thus $A_3$; $A_1$ °श्यते. २०४. [1]) $A_1$ gloss द्वारस्थं. २०८. [1]) $A_3$ gloss शिक्षा. २११. [1]) Thus corr. by later hand from $A_1$ अथ क्ले°. २१२. [1]) $A_3$ gloss पूज्यान्. २१४. [1]) Doubtful emendation; on account of an ink blot only the following is legible in the handwriting of $A_1$ : उपाय--- स्कृत्य. $A_4$ reads उपायनं पुरस्कृत्य; this reading is found also in R. G and Edd. read उपायं तं.

सुखार्थी नागारिप्रतिभयशमात्प्रत्युत सुखं जहौ शेषस्तल्पीकृततनु निषेव्यासुररिपुम् ।
215 यतस्तेनामुष्मिन्नधिगतव्रता क्लेशसहतां श्रमादाथि न्यस्तं निरवधि धराभारवहनम् ॥२१५॥
अयमेतद्गृहीतेषु गुणवत्सु गुणाधिकम् । आत्मानं गुणवान्पश्यन्नास्थयैनमशिश्रियत् ॥२१६॥
अनन्तरज्ञः[1] कोन्योस्माद्गुणान्दर्शयतेधिकान् । अस्मै गुणवते पूजां यश्चकार किलेदृशीम् ॥२१७॥
यो नानाद्युतिमत्पदार्थरसिकोसारेपि शक्रायुधे सप्रेमा स विलोक्य वर्हमिह मे किं किं न कुर्यात्प्रियम् ।
इत्याविष्कृतवर्हराजि नटते यो वर्हिणोम्भोलवान्नान्यन्मुञ्चति तं विहाय[1] जलदं कोन्योस्ति शून्याशयः ॥२१८॥
गच्छतो मातृगुप्तस्य निर्दैन्यस्यैव वर्त्मसु । नाभूद्वाव्यर्थमाहात्म्याद्विकल्पः कोपि चेतसि ॥२१९॥
220 अहंपूर्विकयोद्यद्भिर्निमित्तैः शुभशंसिभिः । स वितीर्णकरालम्ब इव न श्रममाददे ॥२२०॥
अपश्यत्स फणाकोटौ खञ्जरीटमहेः पथि । स्वप्ने प्रासादमारुह्य स्वं चोल्लङ्घितसागरम् ॥२२१॥
अचिन्तयच्च शास्त्रज्ञो निमित्तैः शुभशंसिभिः । एतैर्भूभर्तुरादेशो ध्रुवं मे स्याच्छुभावहः ॥२२२॥
फलं मम तनीयोपि कश्मीरेषु भवेद्यदि । अनर्घदेशमाहात्म्यात्किं किं नातिशयेत तत् ॥२२३॥
अकृच्छ्रलङ्घ्याः पन्थानो वल्लभातिथयो गृहाः । उपानमन्गच्छतोस्य सत्क्रियाश्च पदे पदे ॥२२४॥
225 इत्थं विलङ्घिताध्वा स लोलानोकहं[1]शाद्वलम् । मङ्गल्यदधिपात्राभं ददर्शाग्रे हिमाचलम् ॥२२५॥
सरलस्यन्दसुभगा गङ्गाशीकरवाहिनः । प्रत्युद्ययुस्तं मरुतः पाल्यायाः[1] संस्तुता भुवः ॥२२६॥
क्रमवर्ताभिधाने स प्रदेशे प्राप्तवांस्ततः । ढक्कं काम्बुवनामानं योद्य शूरपुरे स्थितः ॥२२७॥
नानाजनपदाकीर्णे स्थाने तत्राथ शुश्रुवान् । काश्मीरिकान्महामात्यान्स्थितान्केनापि हेतुना ॥२२८॥
ततोपनीतप्राग्वेषः प्रावृतो धवलांशुकैः । स जगामान्तिकं तेषां दातुं नृपतिशासनम् ॥२२९॥
230 तं प्रयान्तं समुद्यद्भिः शकुनैः सूचितोदयम् । पान्थाः केप्यन्वयुर्द्रष्टुं निमित्तानां फलोद्गमम् ॥२३०॥
श्रुत्वाथ विक्रमादित्यदूतः प्राप्त इति द्रुतम् । द्वाःस्थाः काश्मीरमन्त्रिभ्यस्तमासन्नं न्यवेदयन् ॥२३१॥
आगच्छत प्रविशतेत्युच्यमानोथ सर्वतः । स तान्समस्तसामन्तानाससादानिवारितः ॥२३२॥
यथाप्रधानं सचिवैर्विहितोचितसत्क्रियः । ततः परार्ध्यमध्यास्त तन्निदर्शितमासनम् ॥२३३॥
कृतार्हणैरथामात्यैराज्ञां पृष्टो महीभुजः । शनैस्तच्छासनं तेभ्यो लज्जमान इवार्पिपत् ॥२३४॥
235 तेभिवन्द्य प्रभोर्लेखमुपांशु[1] मिलितास्ततः । उन्मुच्य वाचयित्वैतमवोचन्विनयान्विताः ॥२३५॥
मातृगुप्त इति श्लाघ्यं भवतामेव नाम किम् । एवमेवैतदित्यूचे सोपि तान्विहितस्मितः ॥२३६॥
कः कोत्र संनिधातॄणामित्यश्रूयत वाक्ततः । राज्याभिषेकसंभारो दृश्यते स्म च संभृतः ॥२३७॥
ततः कलकलोत्तालभूरिलोकसमाकुलः । प्रदेशः क्षणमात्रेण सोभूत्क्षुभ्यन्निवार्णवः ॥२३८॥
अथ प्राङ्मुखसौवर्णभद्रपीठप्रतिष्ठितः । संनिपत्य प्रकृतिभिर्मातृगुप्तोभ्यषिच्यत ॥२३९॥
240 तस्य विन्ध्यतटव्यूढवक्षसः परिनिर्लुठत् । सशब्दमभिषेकाम्बु रेवास्रोत[1] इवाबभौ ॥२४०॥
अथ स्नातानुलिप्ताङ्गं सर्वाङ्गामुक्तभूषणम् । व्यजिज्ञपंस्तं राजानं क्रान्तराजासनं प्रजाः ॥२४१॥

---

२१७. 1) $A_3$ gloss मूर्खपुरुषः. २१८. 1) $A_3$ विलोक्य जलदमित्यन्यादर्शे. २२५. 1) Thus $A_1$ ; corr. by $A_3$ into °नौकरुह°, as also in G R. २२६. 1) $A_1$ gloss पाल्याया इति प्रभुभाविष्यता तेनैवेत्यर्थः. २३५. 1) $A_1$ gloss परैर्न श्रूयते यत्तदुपांशु परिकीर्तितम् ; $A_2$ adds मन्त्रकरणे. २४०. 1) Thus $A_3$ ; $A_1$ °स्रेव, corr. by later hand into °स्त्रव.

अर्थितेन स्वयं त्रातुं विक्रमादित्यभूभुजा । निर्दिष्टः स्वसमानस्त्वं शाधि नः पृथिवीमिमाम् ॥२४२॥

मण्डलानि विलभ्यन्ते[1] येनानेन प्रतिक्षणम् । मा मंस्था मण्डलं राजन्विलब्धं[2] तदिदं परैः ॥२४३॥

कर्मभिः स्वैरवाप्तस्य जन्मनः पितरौ यथा । राज्ञां तथान्ये राज्यस्य प्रवृत्तावेव कारणम् ॥२४४॥

इत्थं स्थितेपरं कंचित्त्वदीयोस्मीति शंसता । न नेया भवता राजन्[1]स्वयमात्मा च लाघवम् ॥२४५॥

इति तैस्तथ्यमुक्तोपि संस्मरन्स्वामिसत्क्रियाम् । मातृगुप्तो[1] महीपालः क्षणमासीत्कृतस्मितः ॥२४६॥

दानेन सुदिनं कुर्वन्नवराज्योर्जितेन सः । तत्रैव मङ्गलोदर्कं तदहो निरवर्तयत्[1] ॥२४७॥

पुरप्रवेशायान्येद्युरर्थ्यमानोथ मन्त्रिभिः । अद्भुतप्राभृतं दूतं राज्यदातुर्व्यसर्जयत् ॥२४८॥

देशौन्नत्यानुसारेण स्पर्धामिव च तां विदन् । स्वामिनो मनसि ह्रीतः सागसं स्वममन्यत ॥२४९॥

अथाहूयापरान्भृत्यान्वक्तुं सेवास्मृतिं प्रभोः । अल्पार्घाण्यपि सात्म्यानि[1] प्राहिणोत्प्राभृतानि सः ॥२५०॥

असामान्यान्गुणांस्तस्य स्मरन्पर्यस्तलोचनः । स्वयं लिखित्वा श्लोकं च स्वकमेकं व्यसर्जयत् ॥२५१॥

नाकारमुद्वहसि नैव विकत्थसे त्वं दित्सां न सूचयसि मुञ्चसि सत्फलानि ।
निःशब्दवर्षणमिवाम्बुधरस्य राजन्संलक्ष्यते फलत एव तव[1] प्रसादः ॥२५२॥

ततः प्रविश्य नगरं सैन्यैः पिहितदिक्तटैः । क्रमागतामिव महीं यथावत्पर्यपालयत् ॥२५३॥

त्यागे वा पौरुषे वापि तस्यौचित्योन्नतात्मनः[1] । क्ष्माभुजस्तर्कुकस्येव[2] नाभूत्परिमितेच्छता ॥२५४॥

यष्टुं यज्ञान्धृतोद्योगस्त्यागी विततदक्षिणान् । पशुबन्धमनुध्याय करुणाकूणितो[1]भवत् ॥२५५॥

अमारमादिदेशाथ यावद्राज्यं स्वमण्डले । चूर्णीकृत्य सुवर्णादि प्रददौ च करम्भकम् ॥२५६॥

करम्भके कीर्यमाणे मातृगुप्तेन भूभुजा । वैतृष्ण्यमुन्मिषत्तोषो न को नाम न्यषेवत ॥२५७॥

गुणी च दृष्टकष्टश्च वदान्यश्च[1] स पार्थिवः । विक्रमादित्यतोप्यासीदभिगम्यः शुभार्थिनाम् ॥२५८॥

विवेचकतया तस्य श्लाघ्यया सुरभीकृताः । लक्ष्मीविलासाः क्ष्माभर्तुरशोभन्त मनीषिषु ॥२५९॥

हयग्रीववधं[1] मेण्ठस्तदग्रे दर्शयन्नवम् । आसमाप्ति ततो नापत्साध्वसाध्विति वा वचः ॥२६०॥

अथ ग्रथयितुं तस्मिन्पुस्तकं प्रस्तुते न्यधात् । लावण्यनिर्याणभिया तदधः[1] स्वर्णभाजनम् ॥२६१॥

अन्तरज्ञतया तस्य तादृश्या कृतसत्कृतिः । भर्तृमेण्ठः कविर्मेने पुनरुक्तं श्रियोर्पणम् ॥२६२॥

स मातृगुप्तस्वाम्याख्यं निर्ममे मधुसूदनम् । कालेनादत्त यद्ग्रामान्मम्मः स्वश्वुरसद्मने[1] ॥२६३॥

इत्यासादितराज्यस्य शासतः क्ष्मां क्ष्मापतेः । त्रिमासोना ययुस्तस्य सैकाहाः पञ्च वत्सराः ॥२६४॥

कृतार्थतां तीर्थतोयैराज्ञ्नेयो[1]नयन्पितॄन् । जातं तादृशमश्रौषीत्स्वस्मिन्देशे पराक्रमम्[2] ॥२६५॥

पितृशोकार्द्रता तस्य क्रोधेनान्तरधीयत । तरोरिवार्कतापेन नैशाम्बुलवसिक्तता ॥२६६॥

श्रीपर्वते पाशुपतव्रतिवेषस्तम[1]गतम् । आचख्यावश्वपादाख्यः सिद्धः कन्दाशनं ददत् ॥२६७॥

---

२४३. [1]) [2]) $A_1$ indicates the *vv. ll.* विशीयन्ते and विवृत्तं. २४५. [1]) Thus $A_3$; $A_1$ राजा. २४६. [1]) Thus corr. by later hand from $A_1$ °गुप्तम°; G R as above. २४७. [1]) $A_3$ gloss अत्यवाहयत्. २५०. [1]) Thus $A_1$; $A_3$ स्वात्म्यानि, also G R; Edd. खाद्यानि. २५२. [1]) तव supplied by $A_3$. २५४. [1]) Thus corr. by later hand from $A_1$ °चित्यौन्न°.—[2]) $A_3$ gloss याचकस्येव. २५५. [1]) Thus A; G R °कूजितो; Edd. °कुञ्चितो. २५८. [1]) Emended: A R G वदन्यश्च. २६०. [1]) $A_3$ gloss काव्यं. २६१. [1]) $A_3$ राजाधः. २६३. [1]) $A_1$ gloss स्वश्वेवगृहाय. २६५. [1]) $A_3$ gloss प्रवरसेनः.—[2]) $A_3$ पराभवम्. २६७. [1]) $A_3$ gloss प्रवरसेनं.

जन्मान्तरे लब्धसिद्धिस्त्वामस्म्युपरि[1] साधकम् । वाञ्छामपृच्छं राज्यार्थमभिलाषस्तु तेऽभवत् ।।२६८।।

सयत्नं तत्र कर्तुं तन्मनोरथमनन्यथा । अथ मामित्थमादिक्षत्[1] क्षपारमणशेखरः[2] ।।२६९।।

गणोयं मामकः सिद्धो यस्तवोपरि साधकः । जन्मान्तरेस्य राज्येच्छां कुर्यामहमनन्यथा ।।२७०।।

भावं भवस्तद्भवतो भगवान्दत्तदर्शनः । साफल्यं नेष्यतीत्येवमभिधाय तिरोदधे ।।२७१।।

साम्राज्येच्छोः समामेकां तत्र तस्य तपस्यतः । लब्धस्मृतिः[2] सिद्धगिरा प्रददौ दर्शनं शिवः ।।२७२।।

व्रतिवेषं तमादिष्टवाञ्छितार्थसमर्पणम् । स जगन्निर्जयोन्निद्रं नरेन्द्रत्वमयाचत ।।२७३।।

उपेक्ष्य मोक्षं किं क्ष्माभृद्भोगानिच्छसि भङ्गुरान् । इति जिज्ञासुना भावं शंभुना सोऽभ्यधीयत ।।२७४।।

स तं बभाषे शंभुं त्वां बुद्ध्वा व्याजतपोधनम् । अभ्यधामिदमद्धा त्वं न स देवो जगद्गुरुः ।।२७५।।

महान्तो ह्यर्थिताः स्वल्पं फलन्त्यल्पेतरत्[1] स्वयम् । उदन्यया[2] वदान्योदाद्[3] दुग्धाब्धिं स[4] पयोर्थिने ।।२७६।।

अस्य वैकल्यकैवल्यलाभनिश्चलचेतसः । नो वेत्स्यभिजनस्याभिभूतिं[1] मर्मव्यथावहाम् ।।२७७।।

जगत्परिवृढः[1] प्रौढप्रीतिस्तं सफलार्थनम्[2] । कृत्वा प्रादुष्कृतवपुस्ततो भूयोऽभ्यभाषत ।।२७८।।

मज्जतो राज्यसौख्येषु सायुज्या[1]वाप्तिदूतिकाम् । मदाज्ञयाश्वपादस्ते संज्ञां काले करिष्यति ।।२७९।।

इत्युक्त्वान्तर्हिते देवे स कृतव्रतपारणः । आ[1]गच्छदश्वपादं तमापृच्छ्याभिमतां भुवम् ।।२८०।।

ततो विदितवृत्ता[1]न्तो मातृगुप्ताभिषेणनात् । निषिध्य सविधा[2]यातानमात्यानब्रवीद्वचः ।।२८१।।

विक्रमादित्यमुत्सिक्तमुच्छेत्तुं यतते मनः । मातृगुप्तं प्रति न नो रोषेणारूषितं मनः ।।२८२।।

अप्रियैरपि निष्पिष्टैः किं स्यात्क्लेशासहिष्णुभिः । ये तदुन्मूलने शक्ता जिगीषा तेषु शोभते ।।२८३।।

यान्यब्जान्युदयं द्विषन्ति शशिनः कोन्यस्ततोसंमतस्तन्निर्माथिकरीन्द्रदन्तदलनं यन्नाम कोयं नयः । सामर्थ्यप्रथनाय चित्रमसमैः स्पर्धी विधूयोन्नता ये तेषु प्रभवन्ति तत्र जहति व्यक्तं प्ररूढा रुषः ।।२८४।।

त्रिगर्तानां भुवं जित्वा स व्रजन्नथ भूपतिः । विक्रमादित्यमश्रृणोत्कालधर्ममुपागतम् ।।२८५।।

तस्मिन्नहनि भूभर्त्रा शोकान्निःश्वसतानिशम् । नास्नायि नाशि नास्वापि स्थितेनावनताननम् ।।२८६।।

अन्येद्युर्भुवमुत्सृज्य कश्मीरेभ्यो विनिर्गतम् । शुश्राव मातृगुप्तं स नातिदूरे कृतस्थितिम् ।।२८७।।

कैश्चिन्निर्वासितो मा स्विन्मदीयैरिति शङ्कितः । ययौ प्रवरसेनोस्य पार्श्वं मितपरिच्छदः ।।२८८।।

कृतार्हणं सुखासीनं ततः पप्रच्छ तं शनैः । विनयावनतो राजा राज्यत्यागस्य कारणम् ।।२८९।।

बभाषे तं क्षणं स्थित्वा स[1] निःश्वस्य[2] विहस्य च । गतः स सुकृती[3] राजन्येन भूमिभुजो वयम् ।।२९०।।

यावन्मूर्ध्नि रवेः पादास्तावद्द्योतयते दिशः । द्योतते नान्यथा किंचिद्ग्रा[1]वैत्र तपनोपलः[2] ।।२९१।।

---

२६८. 1) मस्म्यु supplied by $A_3$ in space left by $A_1$. २६९. 1) 2) $A_3$ glosses आदिदेश and ईश्वरः. २७१. 1) $A_3$ gloss अश्वपादः. २७२. 1) $A_3$ gloss प्रवरसेनस्य.—2) Thus $A_1$; corr. by later hand into °स्मृतेः, as found also in R. २७६. 1) $A_1$ gloss स्वल्पमर्थिता बहु फलन्ति महान्तः.—2) $A_1$ gloss उदन्यया पिपासया.—3) Emended: A R G वदन्यो.—4) $A_3$ gloss शिवः. २७७. 1) $A_3$ gloss पराभवं. २७८. 1) $A_3$ gloss प्रभुः.—2) Thus corr. by $A_3$ from $A_1$ स फलार्थिनम्. २७९. 1) Thus $A_1$; corr. by later hand into सांयुज्या°. २८०. 1) $A_3$ अगच्छ°. २८१. 1) त्त supplied by $A_3$ in space left by $A_1$.—2) $A_3$ gloss निकटं. २८४. 1) $A_3$ gloss तेभ्यः.—2) $A_3$ gloss नीचैः. २८६. 1) Emended; A निश्वस°. २८९. 1) $A_3$ gloss प्रवरसेनः. २९०. 1) $A_3$ gloss मातृगुप्तः.—2) Thus corr. by later hand from $A_1$ निश्वस्य.—3) $A_3$ gloss विक्रमादित्यः. २९१. 1) Thus $A_1$; corr. by $A_3$ into द्योतयेन्नान्यथा किं न which reading is found also in G R Edd.—2) $A_3$ gloss सूर्यकान्तः.

अथ राजाभ्यधात्केन राजन्नपकृतं तव । यत्प्रत्यपचिकीर्षायै[1] तमीशमनुशोचसि ॥२९२॥

मातृगुप्तस्ततोवादीत्कोपस्मितसिताधरः । अस्मानुत्सहते कश्चिन्नापकर्तुं बलाधिकः ॥२९३॥

नयता गण्यतामस्मानन्तरङ्गेन तेन[1] हि । न भस्मनि हुतं सर्पिर्नोप्तं वा सस्यमूषरे ॥२९४॥

उपकारं स्मरन्तस्तु कृतज्ञत्ववशंवदाः[1] । पदवीमुपकर्तॄणां यान्ति निश्चेतना अपि ॥२९५॥

निर्वाणमनुनिर्वाति तपनं तपनोपलः । इन्दुमिन्दुमणिः किं च शुष्यन्तमनुशुष्यति ॥२९६॥

पुण्यां वाराणसीं गत्वा तस्माच्छमसुखोन्मुखः । इच्छामि सर्वसंन्यासं कर्तुं द्विजजनोचितम् ॥२९७॥

मणिदीपमिवेशं[1] तमन्तरेणान्धकारिताम् । बिभेमि द्रष्टुमप्युर्वीं भोगयोगे कथैव का ॥२९८॥

इत्यौचित्यनिधेस्तस्य वाणीमाकर्ण्य विस्मितः । धीरः प्रवरसेनोपि व्याजहारोचितं वचः ॥२९९॥

सत्यं विश्वंभरा देवी भूपते रत्नसूरियम् । उत्पत्त्या द्योतते धर्म्यैः कृतज्ञैर्या भवादृशैः ॥३००॥

अन्तरज्ञतया श्लाघ्यः कोन्यस्तस्मान्महीभुजः[1] । इत्थं जडे जगत्येकस्त्वां यथावद्विवेद यः ॥३०१॥

चिरं खलु खिलीभूताः कृतज्ञत्वस्य वीथयः । धीर त्वयैव न त्वासु[1] संचारो यदि दर्श्यते[2] ॥३०२॥

पाकश्चेन्न शुभस्य मेघ तदसौ प्रागेव नादात्किमु स्वार्थश्चेन्न मयास्य किं न भजते दीनान्स्वबन्धूनयम् ।
मत्तो रन्ध्रदृशोस्य भीर्यदि न तल्लुब्धः किमेष त्यजेदित्यन्तः पुरुषाधमः कलयति प्रायः कृतोपक्रियः ॥३०३॥

अत्युदात्तगुणेष्वेषा कृतपुण्यैः प्ररोपिता । शतशाखीभवत्येव यावन्मात्रापि सत्क्रिया ॥३०४॥

तत्त्वं गुणवतामग्र्यस्तत्त्वज्ञैश्चाभिनन्दितः । परीक्षितो मणिरिव व्यक्तं बहुमतः सताम् ॥३०५॥

तस्मादनुगृहाणास्मान्मा स्म त्याक्षीर्नरेन्द्रताम् । ममापि ख्यातिमायातु गुणवत्पक्षपातिता ॥३०६॥

पूर्वं तेनाथ चरमं मयापि प्रतिपादिताम् । भवान्प्रतिप्रणयिनीं[1] विदधातु पुनर्भुवम् ॥३०७॥

अव्याजौदार्यचर्यस्य श्रुत्वेति नृपतेर्वचः । कृतस्मितो मातृगुप्तः शनैर्वचनमब्रवीत् ॥३०८॥

यान्यक्षराण्यन्तरेण[1] वाच्यं वक्तुं न पार्यते । का गतिस्तदुपादाने मर्यादोल्लङ्घनं विना ॥३०९॥

अतः[1] परुषमप्यद्य किंचिदेव मयोच्यते । अव्याजार्जवमप्येतदार्यत्वमवधीर्यते ॥३१०॥

सर्वः स्मरति सर्वस्य प्रागवस्थासु लाघवम् । आत्मैव वेत्ति माहात्म्यं वर्तमाने क्षणे पुनः ॥३११॥

पूर्वावस्था मदीया ते त्वदीया या च मे हृदि । ताभ्यां विमोहितावावां न विद्वोन्योन्यमाशयम् ॥३१२॥

राजा भूत्वा कथं मादृक्प्रतिगृह्णातु संपदः । कथमेकपदे सर्वमौचित्यं परिमार्जतु ॥३१३॥

असाधारणमौदार्यमाहात्म्यं तस्य भूपतेः । भोगमात्रकृते मादृक्किं साधारणतां नयेत् ॥३१४॥

अपि च स्पृहयालुः स्यां भोगेभ्यो यदि भूपते । ध्रियमाणेभिमाने मे केन ते[1] विनिवारिताः ॥३१५॥

यन्ममोपकृतं तेन तद्विना प्रत्युपक्रियाम् । जीर्णमेवाधुनाङ्गेषु प्रभवत्वेष निश्चयः ॥३१६॥

या गतिर्भूभुजोमुष्य मया तामनुगच्छता । पात्रापात्रविवेक्तृत्वख्यातिर्नेया प्रकाश्यताम् ॥३१७॥

एतावत्येव कर्तव्ये यातेस्मिन्[1] कीर्तिशेषताम् । भोगमात्रपरित्यागाद्विदध्यां सत्यसंधताम् ॥३१८॥

---

२९२. [1]) Thus corr. by later hand from $A_1$ यत्प्रत्युप°. २९४. [1]) $A_3$ gloss तेन हर्षदेवेन. २९५. [1]) $A_3$ °वशीकृताः. २९८. [1]) $A_3$ gloss विक्रमादित्यं. ३०१. [1]) $A_3$ gloss हर्षदेवात्. ३०२. [1]) $A_3$ gloss वीथीषु.—[2]) दर्श्यते supplied by $A_3$ in space left by $A_1$. ३०७. [1]) Thus $A_1$; $A_3$ °न्पाणिप्र°. ३०९. [1]) Thus corr. by $A_3$ from $A_1$ यान्यक्षारा°. ३१०. [1]) This verse has been omitted by $A_1$ and supplied in margin by $A_3$; found in R G. ३१५. [1]) $A_3$ gloss ते भोगा इत्यर्थः. ३१८. [1]) $A_3$ gloss विक्रमादित्ये.

इत्युक्त्वा विरते तस्मिञ्जगाद जगतीपतिः । त्वदीया न मया स्पृश्यास्त्वयि जीवति संपदः ॥३१९॥
अथ वाराणसीं गत्वा कृतकाषायसंग्रहः । सर्वं संन्यस्य सुकृती मातृगुप्तोभवद्यतिः ॥३२०॥
राजा प्रवरसेनोपि काश्मीरोत्पत्तिमञ्जसा । निखिलां मातृगुप्ताय प्राहिणोद्दृढनिश्चयः ॥३२१॥
स हठापतितां लक्ष्मीं भिक्षाभुक्प्रतिपादयन् । सर्वार्थिभ्यः कृती वर्षान्दश प्राणानधारयत् ॥३२२॥
अन्योन्यं साभिमानानामन्योन्यौचित्यशालिनाम् । त्रयाणा[1]मपि वृत्तान्त एष त्रिपथगापयः ॥३२३॥
राजा प्रवरसेनोथ नमयन्नवनीधरान् । अकृच्छ्रलङ्घ्याः ककुभो वृद्धस्य यशसो व्यधात् ॥३२४॥
पीताब्धिर्लङ्घितोर्वीभृत्कुम्भयोनिरिवानयत् । तस्य प्रतापः प्रभवन्भुवनानि[1] प्रसन्नताम् ॥३२५॥
शुष्यत्तमालपत्त्राणि शीर्णताडीदलानि च । तत्सेनार्णवतीराणि चक्रेरिस्त्रीमुखानि च ॥३२६॥
स गङ्गालिङ्गिताङ्गस्य पूर्ववारिनिधेर्व्यधात् । सैन्येभमदनिष्पन्दैः कालिन्दीसंगमश्रियम् ॥३२७॥
रोधस्यपरपाथोधेः कटकैः स्पृष्टदिक्तटैः । चकारोत्पाट्य सौराष्ट्रानसौ राष्ट्रविपाटनम् ॥३२८॥
यशोर्थिनः पार्थिवेषु द्वेषरागबहिष्कृतः । ववृधे धर्मविजयस्तस्य क्षितिशतक्रतोः ॥३२९॥
वैरिनिर्वासितं पित्र्ये विक्रमादित्यजं न्यधात् । राज्ये प्रतापशीलं स शीलादित्यापराभिधम् ॥३३०॥
सिंहासनं स्ववंश्यानां तेनाहितहृतं ततः । विक्रमादित्यवसतेरानीतं स्वपुरं पुनः ॥३३१॥
हेतूनुदीर्य विविधानमन्वानं पराजयम् । सप्त वारान्स्[1] तत्याज जित्वा मुम्मुनि[2]भूभुजम् ॥३३२॥
धार्ष्ट्यादथाष्टमे वारे हेतुमाख्यातुमुद्यतम् । धिक्पशून्वध्यतां सोयमित्यूचे नृपतिः क्रुधा ॥३३३॥
अवध्योहं पशुत्वेन वीरेत्युक्त्वाभयोत्सुकः । मध्येसभं ननर्तास्य सोनुकुर्वन्कलापिनम् ॥३३४॥
नृत्तं केकां च शिखिनो[1] दृष्ट्वास्मै द्रविणं नृपः । अभयेन समं प्रादात्ताला[2]वचरणोचितम् ॥३३५॥
वसतोस्य दिशो जित्वा नप्तुः पैतामहे पुरे । कर्तुं पुरं स्वनामाङ्कं प्रथते स्म मनोरथः ॥३३६॥
रात्रौ क्षेत्रं च लग्नं च दिव्यं ज्ञातुमथैकदा । स वीरो वीरचर्यायां निर्ययौ पार्थिवार्यमा ॥३३७॥
गच्छतः क्ष्मापतेस्तस्य मौलिरत्ना[1]ग्रबिम्बितः । बभार ताराप्रकरो रक्षासर्षपविभ्रमम् ॥३३८॥
अथानन्तचितालोकस्पष्टभीमतटद्रुमाम् । श्मशानप्रान्ततटिनीं पर्यटन्नाससाद सः ॥३३९॥
ततस्तस्य सरित्पारे मुक्तसंरावमग्रतः । ऊर्ध्वबाहु महद्भूतं प्रादुरासीन्महौजसः ॥३४०॥
नृपतिस्तस्य दृक्पातैर्ज्वलद्भिः कपिशीकृतः । उल्काज्योतिःकृताश्लेषः कुलाद्रिरिव दिद्युते ॥३४१॥
तमथ प्रतिशब्देन घोरेणापूरयन्दिशः । अत्रासं विहसन्नुच्चैरुवाच क्षणदाचरः ॥३४२॥
संत्यज्य विक्रमादित्यं सत्त्वोद्रिक्तं च शूद्रकम् । त्वां च भूपाल पर्याप्तं धैर्यमन्यत्र दुर्लभम् ॥३४३॥
वसुधाधिपते वाञ्छासिद्धिस्तव विधीयते । सेतुमेतं समुत्तीर्य पार्श्वमागम्यतां मम ॥३४४॥
इत्युदीर्य निजं जानुं रक्षः पारात्प्रसारयत्[1] । तन्महासरितो वारि सेतुसीमन्तितं व्यधात् ॥३४५॥
अङ्केन रक्षःकायस्य ज्ञात्वा सेतुं प्रकल्पितम् । वीरः प्रवरसेनोथ विकोशां क्षुरिकां दधे ॥३४६॥

३२३. [1]) $A_1$ gloss त्रयाणां विक्रमादित्यमातृगुप्तप्रवरसेनानाम्. ३२५. [1]) $A_3$ gloss जलान्यपि. ३३२. [1]) $A_3$ gloss प्रवरसेनः.—[2]) Doubtful emendation: मुंमु has been supplied by $A_3$ in space left by $A_1$; $A_3$ has marked a different division of the words, जित्वाऽमुं । मुनिभूभुजम्, which is also indicated by the interlinear gloss of $A_3$ प्रतापशीलं; C reads मुम्मुनि°. For the name मुम्मुनि see iv. 167; v. 516; viii. 2180 (*C.*).—३३५. [1]) $A_3$ gloss शिखिवद्दृष्ट्वा.—[2]) Thus $A_1$; $A_3$ तालार्धचरणो°. ३३८. [1]) Thus $A_3$; $A_1$ °त्नाङ्ग°. ३४५. [1]) Thus apparently $A_1$; $A_3$ °यन्.

स तयोत्क्रुत्य तन्मांसं कृतसोपानपद्धतिः । अतरद्यत्र तत्स्थानं क्षुरिकाबलं[1] उच्यते ॥३४७॥
पार्श्वस्थं तं लग्नमुक्त्वा प्रातर्मत्सूत्रपातनम् । दृष्ट्वा पुरं विधेहीति वदन्भूतं तिरोदधे ॥३४८॥
देव्या शारिकयाष्टेन यक्षेणाधिष्ठिते[1] च सः । ग्रामे शारीटके[2]पश्यत्सूत्रं वेतालपातितम् ॥३४९॥
भक्त्या प्रतिष्ठां प्राक्तस्मिन्निनीषौ प्रवरेश्वरम् । जयस्वामी स्वयं पीठे भित्त्वा यन्त्रमुपाविशत् ॥३५०॥
वेतालावेदितं लग्नं जानतो जगतीभुजा । स्थपतेः स जयाख्यस्य[1] नाम्ना प्रख्यापितोभवत् ॥३५१॥
नगराप्रातिलोम्याय भक्त्या तस्य विनायकः । प्रत्यङ्मुखः प्राङ्मुखतां भीमस्वामी स्वयं ययौ ॥३५२॥
सद्भावश्र्यादिका देव्यस्तेन श्रीशब्दलाञ्छिताः । पञ्च पञ्चजनेन्द्रेण पुरे तस्मिन्निवेशिताः ॥३५३॥
वितस्तायां स भूपालो बृहत्सेतुमकारयत् । ख्याता ततः[1] प्रभृत्येव तादृग्नौसेतुकल्पना ॥३५४॥
श्रीजयेन्द्रविहारस्य बृहद्बुद्धस्य च व्यधात् । मातुलः स नरेन्द्रस्य जयेन्द्रो विनिवेशनम्[1] ॥३५५॥
बुभोज सिंहलादीन्यो द्वीपान्स सचिवोकरोत् । मोराकनामा मोराकभवनं भुवनाद्भुतम् ॥३५६॥
षट्त्रिंशद्गृहलक्षाणि पुरं तत्पप्रथे पुरा । यस्यास्तां वर्धनस्वामी विश्वकर्मा च सीमयोः ॥३५७॥
दक्षिणस्मिन्नेव पारे वितस्तायाः पुरा किल । निर्मितं तेन नगरं विभक्तैर्युक्तमापणैः ॥३५८॥
ते तत्राभ्रंलिहाः सौधा यानध्यारुह्य दृश्यते । वृष्टिस्निग्धं निदाघान्ते चैत्रे चोत्कुसुमं जगत् ॥३५९॥
तद्विना नगरं कुत्र पवित्राः सुलभा भुवि । सुभगाः सिन्धुसंभेदाः क्रीडावसथवीथिषु ॥३६०॥
दृष्टः क्रीडानगोन्यत्र न मध्येनगरं क्वचित् । यतः सर्वौकसां लक्ष्मीः संलक्ष्या सुपथादिव ॥३६१॥
वैतस्तं वारि वास्तव्यैर्बृहत्तु[1]हिनशर्करम् । ग्रीष्मोग्रेह्नि स्ववेश्मागतात्क ततोन्यत्र लभ्यते ॥३६२॥
प्रतिदेवगृहं कोशास्ते तस्मिन्नर्पिता नृपैः । सहस्रशः शक्यते यैः क्रेतुं भूः सागराम्बरा ॥३६३॥
पुरे निवसतस्तस्मिंस्तस्य राजप्रजासृजः । शनैः साम्राज्यलाभस्य षष्टिः संवत्सरा ययुः ॥३६४॥
ललाटे शूलमुद्राङ्के जराशुक्लाः शिरोरुहाः । तस्य शंभुभ्रमासक्तिगङ्गाम्भोविभ्रमं दधुः ॥३६५॥
अथाश्वपादेनेशाननिदे[1]शात्तत्क्षणागतः । काश्मीरिको जयन्ताख्यो द्विजन्मायोजि पार्श्वगः ॥३६६॥
श्रान्तोस्यध्वन्य नान्यस्माद्देशात्तेभिमतं भवेत् । राज्ञे प्रवरसेनाय लेख एष प्रदर्श्यताम् ॥३६७॥
इत्युक्तार्पितलेखोसावसमर्थः पथः पृथून् । गन्तुं प्रस्थानखिन्नोस्मि सद्यस्तेनेत्यगद्यत ॥३६८॥
स्नाह्यद्य तावत्त्वं स्पृष्टो द्विजः कापालिना मया । उक्त्वेति तेन क्षिप्तोसावासन्ने दीर्घिकाजले ॥३६९॥
उन्मीलितेक्षणोद्राक्षीत्स्वं स्वदेशादथोत्थितम् । तस्थुषश्चार्चने राज्ञो भृत्यान्व्यग्राञ्जलाहृतौ ॥३७०॥
स्वमावेदयितुं नद्या नीयमाने नृपान्तिकम् । अव्याक्षिप्तोक्षिपल्लेखं स स्नानकलशे ततः ॥३७१॥
प्रवरेशं स्नापयता स्रस्तं तत्कलशात्पुनः । राज्ञा लेखं वाचयित्वा जयन्तः प्रापितोन्तिकम् ॥३७२॥
कृतं कृत्यं महद्दत्तं भोगा भुक्ता वयो गतम् । किमन्यत्करणीयं ते एहि गच्छ शिवालयम् ॥३७३॥
ततस्तं वृत्तसंकेतः संतोष्याभिमतार्पणात् । भित्त्वा तमश्मप्रासादं जगाहे विमलं नभः ॥३७४॥
जनैः सं ददृशे गच्छन्कैलासतिलकां दिशम् । विशदे घटयन्व्योम्नि द्वितीयतपनोदयम् ॥३७५॥

३४७. ¹) Thus corr. by $A_3$ from $A_1$ °भाल ; G °बाल. ३४९. ¹) Thus corr. by later hand from $A_1$ °ष्ठितं.—²) $A_2$ gloss शारटक्. ३५१. ¹) स्य supplied by $A_3$. ३५४. ¹) Thus corr. by $A_3$ from $A_1$ तदा. ३५५. ¹) $A_3$ gloss स्थापनम्. ३६२. ¹) $A_3$ °र्वेहत्तु°. ३६६. ¹) Thus corr. by $A_3$ from $A_1$ °निर्दे°.

जयन्तेनाद्भुतोदन्तहेतुनावाप्य संपदः । स्वनामाङ्काग्रहारादिकर्मभिर्निर्मलाः कृताः ॥३७६॥
एवं स भुवनैश्वर्यं भुक्त्वा[1] भूमिभृतां वरः । अनेनैव शरीरेण भेजे भूतपतेः सभाम् ॥३७७॥
प्रासादे प्रवरेशस्य सिद्धिक्षेत्रे क्षमापतेः । स्वर्गद्वारप्रतिभटं द्वारमद्यापि[1] लक्ष्यते ॥३७८॥
तस्य रत्नप्रभादेव्यां जातो राजा युधिष्ठिरः । अपासीन्नवमासोनाः क्ष्मां चत्वारिंशतिं[1] समाः ॥३७९॥
सर्वरत्नजयस्कन्दगुप्तशब्दाङ्किताभिधाः । आसन्विहारचैत्यादिकृत्यैस्तत्सचिवा वराः ॥३८०॥
भवच्छेदा[1]भिधं ग्रामं स्तुत्यं चैत्यादिसिद्धिभिः । यो व्यधात्सोस्य वज्रेन्द्रोप्यासीन्मन्त्री जयेन्द्रजः ॥३८१॥
दिक्कामिनीमुखोत्कीर्णकीर्तिचन्दनचित्रकाः । आसन्कुमारसेनाद्यास्तस्यान्येप्यग्र्यमन्त्रिणः ॥३८२॥
पद्मावत्यां सुतस्तस्य नरेन्द्रादित्य इत्यभूत् । लःखणा[1]परनामा यो नरेन्द्रस्वामिनं व्यधात् ॥३८३॥
वज्रेन्द्रतनयौ वज्रकनकौ यस्य मन्त्रिणौ । अभूतां सुकृतोदन्तौ राज्ञी च विमलप्रभा ॥३८४॥
स विधायाधिकरणं लिखितस्थितये निजम् । द्यां त्रयोदशभिर्वर्षैरारुरोह महाभुजः ॥३८५॥
तस्यानुजो धरणिभृद्रणादित्यस्ततोभवत् । तुञ्जीनापरनामानं यं जनाः प्राहुरञ्जसा ॥३८६॥
जगद्विलक्षणं यस्य शङ्खमुद्राङ्कितं शिरः । अपूर्वशर्वरीशान्तर्लीनभानुश्रियं दधे ॥३८७॥
रिपुकण्ठाटवीष्वासीद्यस्य धाराधरः पतन् । तद्वधूनेत्रकुण्डैस्तु जलाधिक्यमधार्यत ॥३८८॥
अपूर्वो यत्प्रतापाग्निः प्रविश्योर्वी द्विषां न्यधात् । नारीनेत्रेषु नीरोर्मीन्मन्दिरेषु तृणाङ्कुरान् ॥३८९॥
यस्य पाणिप्रणयितां कृपाणे समुपागते । कबन्धेभ्यः परो नृत्तं न व्यधत्त द्विषद्दले[1] ॥३९०॥
तस्याव्यपोह्यमाहात्म्या देवी दिव्याकृतेः प्रिया । विष्णुशक्तिः क्षितिं प्राप्ता रणारम्भाभिधाभवत् ॥३९१॥
स हि जन्मान्तरे पूर्वं द्यूतकारोभवत्किल । कदापि प्राप निर्वेदं सर्वस्वं कितवैर्जितः ॥३९२॥
देहत्यागोद्यतोप्यासीत्प्राप्यं किंचिद्विचिन्तयन् । न पर्यन्तेप्युपेक्षन्ते कितवाः स्वार्थसाधनम् ॥३९३॥
अवन्ध्यदर्शनां विन्ध्ये देवीं भ्रमरवासिनीम् । द्रष्टुमैच्छद्वराकाङ्क्षी निर्व्यपेक्षः स्वजीविते ॥३९४॥
भ्रमरैः शङ्कुपुच्छाद्यैः खण्ड्यमानस्य देहिनः । तदास्पदं हि विशतो दुर्लङ्घ्या पञ्चयोजनी ॥३९५॥
स वज्रशङ्कुपुच्छानां धीमांस्तेषां प्रतिक्रियाम् । देहेवश्यपरित्याज्ये मन्वानोभूददुष्कराम् ॥३९६॥
प्रागयोवर्मणा देहं ततो महिषचर्मणा । तेन छादयता दत्तो मृल्लेपोथ सगोमयः ॥३९७॥
अथ भानुकरोच्छुष्कमृल्लेपाम्रेडिताङ्गकः । स लोष्ट इव संचारी प्रतस्थे क्रूरनिश्चयः ॥३९८॥
सरलां सरणिं त्यक्त्वा जीवितस्पृहया समम् । गुहा तेन ततः सान्द्रतमोभीमा व्यगाह्यत ॥३९९॥
अथोदतिष्ठन्गर्तेभ्यो घोरा भ्रमरमण्डलाः । पक्षशब्दैः श्रुतिं घ्नन्तो मृत्युतूर्यरवैरिव ॥४००॥
ते तमुच्छुष्कमृल्लेपरेणुव्रणितलोचनाः । सहसा नाक्रमन्ते स्म प्रहरन्तोपि बाधितुम् ॥४०१॥
रेणुभिर्येन्धितदृशस्ते न्यवर्तन्त षट्पदाः । तेखण्डयंस्तु मृल्लेपं न्यपतन्ये नवा नवाः ॥४०२॥
तैः खण्ड्यमानमुच्चण्डैर्व्रजतो योजनत्रयीम् । क्रमान्मृत्कवचं तस्य पथि संक्षयमाययौ ॥४०३॥
ततो मुहुः प्रहरतां तेषां महिषचर्मणि । घोरश्चटचटाघोषः प्रादुरासीद्भयंकरः ॥४०४॥

---

३७७. [1]) Thus $A_3$; $A_1$ त्यक्त्वा. ३७८. [1]) $A_3$ च्छिद्रं. ३७९. [1]) Thus corr. by $A_3$ from $A_1$ चतुर्विंशतिं. ३८१. [1]) $A_1$ gloss भौछो. ३८३. [1]) $A_1$ ल×खणा°. ३९०. [1]) $A_3$ indicates a *varia lectio* in the marginal note अन्यत् कबन्धेभ्यः परं नृत्तं न व्यधत्त द्विषद्दलम्; over the last word the gloss कर्तृ by the same hand.

चतुर्थयोजनस्यार्धमतिक्रम्य विवेद सः । रणत्कारैर्द्विरेफांस्तानयोवर्मनिपातिनः ॥४०५॥
धावंस्ततोतिवेगेन खण्ड्यमानेन षट्पदैः । स शस्त्रवर्मणामोचि चित्तं[1] धैर्येण नो पुनः ॥४०६॥
गव्यूतिमात्रमासन्ने देवीधामनि धैर्यवान् । धुन्वन्कराभ्यां मधुपान्धावति स्म स धीरधीः ॥४०७॥
अथ स्नाय्वस्थिशेषाङ्गो लूनमांसः षडङ्घ्रिभिः । कराभ्यामक्षिणी रक्षन्देव्यायतनमासदत् ॥४०८॥
प्रशान्ते भृङ्गसंपाते प्रकाशमवलोकयन् । स देव्याः पादयोरग्रे पपातोद्भ्रान्तजीवितः ॥४०९॥
स्तोकावशेषप्राणं तं देव्याश्वासयितुं ततः । अभिरामं वपुः कृत्वा पस्पर्शाङ्गेषु पाणिना ॥४१०॥
दिव्येन पाणिस्पर्शेन तेन पीयूषवर्षिणा । स क्षिप्रासादितस्वास्थ्यो दिक्षु चिक्षेप चक्षुषी ॥४११॥
प्रविष्टमात्रः प्रैक्षिष्ट सिंहविष्टरसीम्नि याम् । घोराकारां स तां देवीं तदाद्राक्षीन्न तां पुनः[1] ॥४१२॥
ददर्श पुनरुद्यानलतावासे विलासिनीम् । स्थितां पुष्करिणीतीरे श्यामां पुष्करलोचनाम् ॥४१३॥
गृहीतहारमुक्तार्घां बद्ध्वा[1] पीनस्तनाञ्जलिम् । महार्हैः कान्तिकुसुमैर्यौवनेनार्चिताङ्गकाम् ॥४१४॥
यावकाहारिणौ पादौ दधतीं कृच्छ्रचारिणौ । स्तनच्छन्नमुखं द्रष्टुं तपस्यन्ताविवान्वहम् ॥४१५॥
भास्वद्बिम्बाधरां कृष्णकेशीं सितकराननाम् । हरिमध्यां शिवाकारां सर्वदेवमयीमिव ॥४१६॥
तां विभाव्यानवद्याङ्गीं निर्जने यौवनोर्जिताम् । निन्ये[1]वारितवामेन स कामेन विधेयताम् ॥४१७॥
दधती रूपमाधुर्यपूरच्छन्नामधृष्यताम् । अप्सराः प्रत्यभात्तस्य सा हि चित्ते न[1] देवता ॥४१८॥
कृपामृदुरवादीत्तं व्यथितोसि चिरं पथि । मुहुः सौम्य समाश्वस्य प्रार्थ्यतामुचितो वरः ॥४१९॥
स तां बभाषे शान्तो मे भवत्या दर्शनाच्छ्रमः । अदेवी किं तु भवती वरं दातुं कथं क्षमा ॥४२०॥
देवी जगाद तं भद्र कोयं ते मनसि भ्रमः । देवी वा स्यामदेवी वा वरीतुं त्वां तु शक्नुयाम् ॥४२१॥
इति सोभीष्टसंप्राप्तौ कारयित्वा प्रतिश्रवम् । दूरमुत्क्रान्तमर्यादः संगमं तामयाचत ॥ ४२२॥
तमभ्यधात्सा दुर्बुद्धे कोयं तेनुचितो विधिः । प्रार्थयस्वेतरद्यस्मात्साहं भ्रमरवासिनी ॥४२३॥
देवीं तां जानतोप्यस्य नाभूदवहितं मनः । निरुद्धा वासनाः केन जन्मान्तरनिबन्धनाः ॥४२४॥
स तामुवाच सत्यां[1] चेद्देवि स्वां गिरमिच्छसि । प्रमाणीकुरु मद्वाणीमहमन्यन्न कामये ॥४२५॥
पूर्वमेव हि जन्तूनां योधिवासो निलीयते । तिलानामिव तेषां स पर्यन्तेपि न शीर्यते ॥४२६॥
देवी वा भव कान्ता वा भीमा वा शोभनापि वा । यादृशीं पूर्वमद्राक्षं तादृश्येवावभासि मे ॥४२७॥
तमित्थं कथयन्तं सा ज्ञात्वा निश्चलनिश्चयम् । एवं जन्मान्तरे भावीत्यभ्यधादनुरोधतः ॥४२८॥
उत्सहन्ते हि संस्प्रष्टुं न दिव्या[1] मर्त्यधर्मिणः । तद्गच्छ क्रूरसंकल्पेत्युक्त्वा सान्तर्दधे ततः ॥४२९॥
अभून्यजन्मा भूयासं तया देव्येति चिन्तयन् । प्रयागवटशाखाग्रादहासीत्स वपुस्ततः ॥४३०॥
सोजायत रणादित्यो रणारम्भा च सा भुवि । मर्त्यभावेपि या नैव जहौ जन्मान्तरस्मृतिम् ॥४३१॥
रतिसेनाभिधश्चोलराजः सज्जोब्धिपूजने । तां तरङ्गान्तराल्लेभे रत्नराजिमिवोज्ज्वलाम् ॥४३२॥

---

४०६. [1]) $A_3$ चित्रं. ४१२. [1]) Thus $A_1$; $A_3$ G पुरः; R and Edd. read पुनः. ४१४. [1]) Thus $A_1$; altered by $A_3$ to °मुक्तार्घान्बद्धा. $A_3$ reads in margin गृहीतहारमुक्तार्घां बद्धपीनस्तनाञ्जलिम्, with gloss मुक्ता एवार्घाः. G and R follow $A_1$. ४१७. [1]) $A_1$ writes ऽ after निन्ये. ४१८. [1]) This division of the words is indicated by $A_1$. ४२५. [1]) Thus corr. by later hand from $A_1$ सत्यं; सत्यां also in G and R. ४२९. [1]) $A_3$ देव्यो.

आ बाल्याद्यक्तदिव्योक्तिं तामलंकृतयौवनाम् । दिव्यार्हां पृथिवीशेभ्यो नार्थिभ्योपि ददौ नृपः ॥४३३॥
रणादित्यनृपामात्ये दूत्यायाते तथैव तम् । प्रत्याख्यानेच्छुमाचख्यौ सैव तद्वरणं वरम् ॥४३४॥
तदर्थमेव कथितस्वोत्पत्तिं तां ततः पिता । द्रुतं कुलूतभूभर्तुः सुहृदः प्राहिणोद्गृहान् ॥४३५॥
प्रहृष्टो विप्रकृष्टं तं देशं गत्वा व्यधत्त ताम् । परिणीय रणादित्यः शुद्धान्तस्याधिदेवताम् ॥४३६॥
मर्त्यसंस्पर्शभीरुः सा महादेवी भवन्त्यपि । तं मायया मोहयन्ती न पस्पर्श कदाचन ॥४३७॥
व्यधान्मायामयीं राज्ञस्तल्पे स्वसदृशीं स्त्रियम् । स्वयं सा भ्रमरीरूपा निर्जगाम बहिर्निशि ॥४३८॥
स नाम्ना स्वस्य देव्याश्च कृत्वा सुरगृहद्वयम् । माहेश्वरः शैललिङ्गे कारयामास कारुभिः ॥४३९॥
श्वः प्रतिष्ठाप्रसङ्गेथ सज्जे तल्लिङ्गयोर्द्वयम्[1] । देशान्तरागतः कश्चिद्दूषयामास दैववित् ॥४४०॥
स दृष्टप्रत्ययः शश्वत्तयोर्घटितलिङ्गयोः । अश्मखण्डैः समण्डूकैर्बभाषे गर्भमावृतम् ॥४४१॥
किंकर्तव्यतया मूढं प्रतिष्ठाविघ्नविह्वलम् । दिव्यदृष्टिः स्वयं देवी ततो राजानमब्रवीत् ॥४४२॥
राजन्गिरिसुतोद्वाहे पौरोहित्यं पुरा भजन् । स्वमर्चादेवमादत्त[1] पूजाभाण्डात्प्रजापतिः ॥४४३॥
तां विष्णोः प्रतिमां वीक्ष्य पूजितां तेन धूर्जटिः । शून्यामिव तदा मेने शक्तिरूपां विना शिवम् ॥४४४॥
निमन्त्रितैर्ढौकितानि रत्नान्यथ सुरासुरैः । पिण्डीकृत्य स्वयं चक्रे लिङ्गं भुवनवन्दितम् ॥४४५॥
तां विष्णुप्रतिमां तच्च लिङ्गमीशानपूजितम् । स्वयं प्रजासृजः पूज्यं कालेनादत्त रावणः ॥४४६॥
तेनाप्यभ्यर्च्यमानं तल्लङ्कायामभवच्चिरम् । देवद्वयं रावणान्ते नीतमासीच्च वानरैः ॥४४७॥
तिर्यक्तया ते कपयो मुग्धा हिमनगौकसः । शान्तौत्सुक्याः शनैर्देवौ न्यधुरुत्तरमानसे ॥४४८॥
प्रागेव सरसस्तस्मात्कुशलैः शिल्पिभिर्मया । तावुद्धृतौ प्रातरत्र प्राप्तौ द्रक्ष्यस्यसंशयम् ॥४४९॥
तयोः प्रतिष्ठा क्रियतामित्युक्त्वा पृथिवीभुजम् । देवी प्रयाता शुद्धान्तं सिद्धान्सस्मार खेचरान् ॥४५०॥
ते[1] ध्यातमात्राः[2] संप्राप्ता देव्यादेशेन पाथसः[3] । उद्धृत्य नृपतेर्धाम्नि देवौ हरिहरौ न्यधुः[4] ॥४५१॥
दिव्यैः प्रसूनैः संवीतौ हरनारायणौ जनः । प्रातर्नृपगृहे दृष्ट्वा परं विस्मयमाययौ ॥४५२॥
सज्जे प्रतिष्ठालग्ने[1]थ माहेश्वरतया नृपः । रणेश्वरप्रतिष्ठायां पूर्वं यावत्समुद्यतः ॥४५३॥
रणारम्भानुभावेन तावद्देवाद्भुतावहः । स्वयं पीठे रणस्वामी भित्त्वा यन्त्रमुपाविशत् ॥४५४॥
कर्तुं प्रभावजिज्ञासां राज्ञ्या[1] दत्तधनस्ततः । स स्वयंभूः स्वयं भक्तां[2]स्तांस्तान्ग्रामानदापयत् ॥४५५॥
कुम्भदासतया छन्नः सिद्धो ब्रह्माभिधो वसन् । परिज्ञाय तयो[1]र्देव्या प्रतिष्ठाकर्म कारितः ॥४५६॥
स वृत्तप्रत्यभिज्ञः सन्प्रतिष्ठाप्य रणेश्वरम् । व्योम्ना व्रजन्रणस्वामिप्रतिष्ठां गूढमादधे ॥४५७॥
जनास्त्वलक्षयन्यत्स स्वयं पीठमवातरत् । इति केषामपि हृदि प्रवादो[1]द्यापि वर्तते ॥४५८॥
सा[1] ब्रह्मप्रतिमं सिद्धं देवी ब्रह्मविदां वरम् । अकारयत्तमुद्दिश्य पराध्यं[2] ब्रह्ममण्डपम्[3] ॥४५९॥
रणारम्भास्वामिदेवौ दंपतिभ्यां व्यधीयत । मठः पाशुपतानां च ताभ्यां प्रद्युम्नमूर्धनि[1] ॥४६०॥

४४०. 1) $A_3$ gloss शिवलिङ्गद्वयम्. ४४३. 1) Thus $A_3$; $A_1$ °धत्त. ४५१. 1) 2) 3) Thus corr. by later hand from $A_1$ तं, °मात्र, पाथस.—4) Thus $A_3$; $A_1$ व्यधुः. ४५३. 1) Thus $A_1$; $A_3$ °लिङ्गे. ४५५. 1) Thus corr. by $A_3$ from $A_1$ राज्ञा.—2) Thus $A_3$; $A_1$ भक्तैस्तां°. ४५६. 1) $A_3$ gloss हरिहरयोः. ४५८. 1) Thus $A_3$; $A_1$ प्रवचो. ४५९. 1) Thus corr. by later hand from $A_1$ स.—2) Thus corr. by $A_3$ from $A_1$ पराख्यं.—3) Thus $A_3$; $A_1$ °सत्तमम्. ४६०. 1) $A_3$ gloss प्रद्युम्नमूर्धनि शारिकागिरौ.

आरोग्यशाला निरघाप्युल्लाघत्वाय रोगिणाम् । तेन सेनामुखीदेवीभयशान्त्यै च कारिता ॥४६१॥
ख्यातिं रणपुरस्वामिसंज्ञया सर्वतो गतम् । स सिंहरोत्सिकाग्रामे मार्तण्डं प्रत्यपादयत् ॥४६२॥
अमृतप्रभया तस्य राज्ञः पत्न्यान्यया कृतः । दक्षिणेऽस्मिन्रणेशस्य पार्श्वे देवोऽमृतेश्वरः ॥४६३॥
मेघवाहनभूभर्तृपत्न्या भिन्नाख्यया कृते । विहारेऽपि तया बुद्धबिम्बं साधु निवेशितम् ॥४६४॥
राज्ञे देव्यनुरक्ताय सानुक्रोशाय सैकदा । पातालसिद्धिदं मन्त्रं प्रददौ हाटकेश्वरम् ॥४६५॥
मा भून्मोघास्य मत्प्राप्तिरिति मत्वा तयार्पितम् । असाधयत्स तं प्राप्य वर्षान्तं वत्सरान्बहून् ॥४६६॥
कृत्वेष्टिकापथे कष्टं तपो[1] नन्दिशिलां गतः । भूरिभिर्वत्सरैर्मन्त्रसिद्धेः प्रणयितां ययौ ॥४६७॥
स्वप्नैश्च सिद्धिलिंगैश्च जाताभङ्गुरनिश्चयः । चन्द्र[1]भागाजलं भित्त्वा नमुचेः प्राविशद्बिलम् ॥४६८॥
बिलेपावृततां याते दिवसान्येकविंशतिम् । प्रविश्य पौरान्प्राग्निन्ये दैत्यस्त्रीभोगभोगिताम् ॥४६९॥
एवं स भूपतिर्भुक्त्वा[1] भुवं वर्षशतत्रयम् । निर्वाणश्लाघ्यनिर्व्यूढि पातालै[2]श्वर्यमासदत् ॥४७०॥
सानुगे नृपतौ याते दैतेयदयितान्तिकम् । देवी सा वैष्णवी शक्तिः श्वेतद्वीपमगाहत ॥४७१॥
राजवंशेष्वनेकेषु राज्ञोर्वंशद्वये परम् । द्वयोरेवात्र निर्व्यूढिं प्रजावात्सल्यमागतम् ॥४७२॥
रणादित्यस्य गोनन्दवंशे रामस्य राघवे[1] । लोकान्तरसुखस्यापि ययो[2]रंशभुजः प्रजाः ॥४७३॥
विक्रमाक्रान्तविश्वस्य विक्रमेश्वरकृत्सुतः । तस्यासीद्विक्रमादित्यस्त्रिविक्रमपराक्रमः ॥४७४॥
राजा ब्रह्मगलूना[1]भ्यां सचिवाभ्यां समं महीम् । सोपासीद्वासवसमो द्वाचत्वारिंशतिं समाः ॥४७५॥
चक्रे ब्रह्ममठं ब्रह्मा गलूनो लूनदुष्कृतः । रत्नावल्याख्यया वध्वा विहारं निरमापयत् ॥४७६॥
राज्ञोऽनन्तरजस्तस्य राजाभूत्तदनन्तरम् । तापितारातिभूपालो बालादित्यो बलोर्जितः ॥४७७॥
लवणार्णवपानेन तर्षोत्कर्षमिवोद्वहन् । यत्प्रतापो रिपुस्त्रीणां सनेत्राम्भोभजन्मुखम् ॥४७८॥
आसन्येऽस्मिन्नगाधबोधदण्डा इवाहताः । यस्याद्यापि जयस्तम्भाः सन्ति ते पूर्ववारिधौ ॥४७९॥
प्रभावाङ्केन वङ्गाल्लाञ्छित्वा येन व्यधीयत । काश्मीरिकनिवासाय को[1]लम्ब्याख्यो जनाश्रयः ॥४८०॥
कश्मीरेषु धनोदग्रमग्रहारं द्विजन्मनाम् । राजा मडवराज्ये यो भेडरा[1]ख्यमकारयत् ॥४८१॥
विशां विपाटितारिष्टमरिष्टोत्सादने[1] व्यधात् । वल्लभा यस्य बिम्बोष्ठी बिम्बा बिम्बेश्वरं हरम् ॥४८२॥
भ्रातरो मन्त्रिणस्तस्य त्रयो मठसुरौकसोः । सेतोश्च कारका[1] आसन्खङ्खशत्रुघ्नमालवाः ॥४८३॥
बभूव तस्य भूभर्तुर्भुवनाद्भुतविभ्रमा । तनयानङ्गलेखाख्या शृङ्गारोदधिकौमुदी ॥४८४॥
तां वीक्ष्य लक्षणोपेतां मृगाक्षीं पितुरन्तिके । अमोघप्रत्ययो व्यक्तं व्याजहारेति दैववित् ॥४८५॥
भाविता तव जामाता जगतीभोगभाजनम् । त्वदन्तमेव साम्राज्यं गोनन्दान्वयजन्मनाम् ॥४८६॥
सुतासंतानसाम्राज्यमनिच्छन्नथ पार्थिवः । दैवं पुरुषकारेण जेतुमासीत्कृतोद्यमः ॥४८७॥

---

४६६. [1]) Thus A ; R G वंशान्तं ; Edd. वसन्तं. ४६७. [1]) Thus $A_3$ ; $A_1$ ततो. ४६८. [1]) Thus corr. by later hand from $A_1$ चान्द्र°. ४७०. [1]) Thus corr. by $A_3$ from $A_1$ भूत्वा.—[2]) Thus $A_3$ ; $A_1$ °लेश्वरम्. ४७३. [1]) $A_1$ gloss वंशे.—[2]) $A_3$ gloss ययोः रामरणादित्ययोः. ४७५. [1]) Emended ; A R G °गलूरा°. ४८०. [1]) The words from कालम्ब्याख्यो to कारका in verse 483 have been supplied by $A_1$ at a later date and in a smaller handwriting, partly in space left for this purpose, partly in margin. ४८१. [1]) Thus corr. by $A_3$ from $A_1$ भेरडा°. ४८२. [1]) $A_3$ gloss रहोसाने. ४८३. [1]) See note to verse 480 above.

अराजान्वयिने[1] दत्ता नेयं साम्राज्यहारिणी । मत्वेति प्रददौ कन्यां न कस्मैचन भूभुजे ॥४८८॥
हेतुं स रूपतामात्रं कृत्वा जामा[1]तरं नृपः । अथाश्वघासकायस्थं चक्रे दुर्लभवर्धनम् ॥४८९॥
मातुः कार्कोटनागेन सुस्नातायाः समीयुषा[1] । राज्यायैव हि संजातो राज्ञा नाज्ञायि तेन सः[2] ॥४९०॥
निश्चिन्वते हि जंमन्या यमेवायोग्यमाग्रहात् । जिगीषयेव तत्रैव निदधाति विधिः शुभम् ॥४९१॥
मात्सर्येण जहद्गृहा[1]न्विसदृशे धूमध्वजे योग्यतां ज्ञात्वा स्वां निदधत्त्विषं दिनपतिर्हास्यः प्रशान्त्युन्मुखः ।
दैवं वेत्ति न यः शिखी तु[2] परतो[3] नामास्तु तत्संभवाः स्युर्दीपा अपि यद्दशेन जगतस्तिग्मांशुविस्मारकाः ॥४९२॥
धिया भाग्यानुगामिन्या चेष्टमानो नयोचितम् । अभूत्सर्वस्य चक्षुष्यः स तु दुर्लभवर्धनः ॥४९३॥
प्रज्ञया द्योतमानं तं प्रज्ञादित्य इति प्रथाम् । कौवीरभाग्यस्वाम्यं च शनकैः श्वशुरोनयत् ॥४९४॥
पित्रोः प्रेयस्तयोद्वृत्ता[1] तारुण्यादिमदेन च । राजपुत्री यथावत्तु गणयामास नैव तम् ॥४९५॥
स्वैरिणीसंगमो भोगा युवानोग्रे पितुर्गृहम् । पत्युर्मृदुत्वमित्यस्याः किं नाभूच्छीलविप्लवकृत् ॥४९६॥
सा नित्यदर्शनाभ्यासाच्छनकैर्विशता मनः । अनङ्गलेखा खङ्खेन संप्रा[1]युज्यत मन्त्रिणा ॥४९७॥
छन्नप्रेमसुखाभ्यासनष्टह्रीभीतिसंभ्रमा । धार्ष्ट्यं दिनाद्दिनं यान्ती ततस्तन्मयतां ययौ ॥४९८॥
स मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः । अन्तःपुरे यथाकामं विजहार तया सह[1] ॥४९९॥
उपलेभे च शनकैस्तस्यास्तं शीलविप्लवम् । विरागलिङ्गै[1]रुद्यद्भिर्धीमान्दुर्लभवर्धनः ॥५००॥
सखीमध्ये रहः स्मेरा विवर्णा भर्तृदर्शने । अकाण्ड एव प्रोत्थाय पश्यन्ती सस्मितं पथः ॥५०१॥
पत्युः कोपे कृतावज्ञा भ्रूनेत्रचिबुकाञ्चनैः । तदप्रियं भाषमाणे सस्मितं न्यस्तलोचना ॥५०२॥
तत्तुल्यगुणनिर्विण्णा तद्विपक्षस्तुतौ रता । रिरंसां तस्य संलक्ष्य सखीभिर्बद्धसंकथा ॥५०३॥
तच्चुम्बने भुग्नकण्ठी तदाश्लेषेसहाङ्गका । तत्संभोगे त्यक्तहर्षा तत्तल्पे व्याजनिद्रिता[1] ॥५०४॥
भवेद्धि प्रायशो योषित्प्रेमविक्रीतचेतना । निवेदयन्ती दौःशील्यपिशाचावेशवैकृतम् ॥५०५॥ कुलकम् ॥
निगूढदारदौरात्म्यचिन्ताकृशवपुस्ततः । शुद्धान्तमविशज्जातु निशि दुर्लभवर्धनः ॥५०६॥
सोपश्यत्सुरतक्लान्तिसुलभस्वापनिःसहाम् । दुर्जार[1]भर्तुरङ्गेषु प्रत्युप्तामिव वल्लभाम्[2] ॥५०७॥
श्वासैरगलितावेगैः कम्पयद्भिः कुचाङ्कुरौ । निवेदयन्ती[1] तत्कालमेव निर्वहणं रतेः ॥५०८॥
अन्यस्यापि क्रुधो हेतुं पुनरप्यक्षमावहाम् । तां तथावस्थितां वीक्ष्य स प्रजज्वाल मन्युना ॥५०९॥
प्रजिहीर्षुः स रोषेण विमर्शेन निवारितः । प्रहरत्येव प्रहरत्येव निवृत्तं स्वममन्यत ॥५१०॥
ततस्तथाविधः क्षुभ्यत्प्रकोपावेशसागरः । विचारवेलया तस्य बलात्प्रशममनीयत ॥५११॥
नमस्तस्मै ततः कोन्यो गण्यते वशिनां धुरि । जीर्यन्ते येन पर्याप्ता ईर्ष्याविषविषूचिकाः ॥५१२॥
सोचिन्तयदहो कष्टाश्चेष्टा[1]रागानुगा इमाः । विचारवन्ध्याः क्षिप्यन्ते क्षिप्रं याभिरधो नराः ॥५१३॥

---

४८८. [1]) $A_3$ gloss न्यूनकुलोद्भवाय दत्ता. ४८९. [1]) कृत्वा जामा supplied by $A_3$ in space left by $A_1$. ४९०. [1]) Thus corr. by $A_3$ from $A_1$ समेयुषा.—[2]) Thus corr. by $A_3$ from $A_1$ सा. ४९२. [1]) Emended; A R G जहन्म°.—[2]) Thus $A_3$; $A_1$ स.—[3]) $A_3$ gloss दूरे इत्यर्थः. ४९५. [1]) $A_3$ gloss उल्लंघितमर्यादा. ४९७. [1]) Emended; A संप्रयु°. ४९९. [1]) $A_3$ समम्. ५००. [1]) The text from मान्दुर्लभवर्धनः to the end of verse 507 below has been supplied by $A_3$, partly in space left by $A_1$, partly in margin. ५०४. [1]) Emended with Edd.; A °निद्रता. ५०७. [1]) $A_3$ दुर्जात°, with *v. l.* as above.—[2]) See note to verse 500 above. ५०८. [1]) Thus corr. by $A_3$ from $A_1$ °यन्तौ. ५१३. [1]) Thus corrected by $A_3$ from $A_1$ कष्टाः श्रेष्ठा°.

स्त्रीति नामेन्द्रियार्थोयमिन्द्रियार्था यथा परे । तथैव सर्वसामान्या वशिनामत्र काः क्रुधः ॥५१४॥
निसर्गतरला नारीः को नियन्त्रयितुं क्षमः । नियन्त्रणेन किं वा स्याद्यत्सतां स्मरणोचितम् ॥५१५॥
यः श्वुनोरिव संघर्ष[1] एकार्थाभिनिविष्टयोः । रागिणोर्यदि मानः स कोवमानस्ततः परः ॥५१६॥
ममकारो मृगाक्षीषु क इवायं सचेतसाम् । स्वदेहेनुपपन्नोपि यः सोन्यत्र कथं मतः ॥५१७॥
उद्वेगोत्पादनादेषा वध्या चेत्प्रतिभाति मे । रागस्तद्विस्मृतः कस्मान्मूलमुद्वेगशाखिनः ॥५१८॥
सप्तपातालनिक्षिप्तमूलो रागमहीरुहः । भूमिभूतमनुत्पाद्य द्वेषमुन्मूल्यते कथम् ॥५१९॥
द्वेषो नामैष दुर्धर्षो जितो येन विवेकिना । क्षणार्धेनैव रागस्य तेन नामापि नाशितम् ॥५२०॥
वीक्ष्यैतद्दिव्यया दृष्ट्या रागिणां वाच्यमौषधम् । ईर्ष्या जेया ततो रागः स्वयमाशाः पलायते ॥५२१॥
इति ध्यात्वालिखद्वर्णान्खड्ग[1]स्यांशुकपल्लवे । वध्योपि न हतो यत्त्वं स्मर्तव्यं तत्त्वेत्यसौ ॥५२२॥
जनैरलक्ष्यमाणेथ याते दुर्लभवर्धने । त्यक्तनिद्रः स मन्त्री तं[1]दृष्ट्वा वर्णानवाचयत् ॥५२३॥
दाक्षिण्यात्प्राणदस्यास्य खड्गः स मनसा तदा[1] । विसस्माराननङ्गलेखां दध्यौ तु प्रत्युपक्रियाम् ॥५२४॥
तस्योपकर्तुरुचितं प्रतिकारमिच्छोश्चिन्ताविशन्न तु मनः स्मरबाणपंक्तिः ।
दृग्गोचरे परिचयप्रणयं प्रपेदे निर्निद्रता न तु कदाचन राजपुत्री ॥५२५॥
भूत्वा सप्तत्रिं[1]शतिमब्दान्स चतुर्भिर्मासैर्वन्ध्यां[2] मूर्धनि रत्नं नृपतीनाम् ।
तस्मिन्काले लोकमवापोज्ज्वलकृत्यो बालादित्यो बालशशाङ्काङ्कितमौलेः ॥५२६॥
पूर्वं विपन्नतनयेभिजनस्य शेषे गोनन्दसंततिरजायत तत्र[1] शान्ते ।
प्राग्दन्तिभुग्ननलिनाथ हठप्रविष्टतोयौघपाटितबिसा नलिनीव दीना ॥५२७॥
अथ शिथिलितमुख्यामात्यवैमत्यविघ्नः कनकघटविमुक्तैः पावनं तीर्थतोयैः ।
कथमपि सं[1] कृतज्ञो राजजामातुरुच्चैर्व्यधित विधिवदिष्टं मूर्ध्नि राज्याभिषेकम् ॥५२८॥
कार्कोट[1]प्रभवः प्रभुः स मुकुटप्रत्युप्तमुक्ताकणद्योतश्रेणिफणाङ्कुराङ्कितबृहद्बाहुर्महीमुद्वहन् ।
ज्ञातिप्रीतिसतोषशेषफणभृत्संफुल्लदृक्पल्लवन्यासावर्जकहाटकाब्जपटलस्रग्धामशोभोभवत् ॥५२९॥
अथ विगलिता गोनन्दोर्वीभुजोभिजनाच्छुचेरतिशुचिनि भूः कार्कोटाहेः कुले व्यधित स्थितिम् ।
चिरपरिचितात्स्वर्गाभोगाध्वनः पतनं श्रिता त्रिभुवनगुरोः शंभोर्मौलाविवामरनिम्नगा ॥५३०॥

१० ॥ ५३६ ॥ आदितः ५३ ॥ ग्रं १०६९॥

इति श्रीकाश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां तृतीयस्तरङ्गः ॥[1]

---

५१६. [1]) $A_3$ gloss विरोधः. ५२२. [1]) Thus corr. by $A_3$ from $A_1$ °न्खड्गस्या°. ५२३. [1]) मन्त्री त supplied by $A_3$ in space left by $A_1$. ५२४. [1]) तदा वि supplied by $A_3$ in space left by $A_1$. ५२६. [1]) Thus $A_1$; altered by $A_3$ to सप्तार्त्रि°.— [2]) $A_3$ gloss ऊनामित्यर्थः. ५२७. [1]) $A_3$ gloss तस्मिन्. ५२८. [1]) $A_3$ gloss खड्गः. ५२९. [1]) Thus corr. by $A_3$ from $A_1$ कर्कोट°. *Colophon.* [1]) $A_1$ adds here लिखितश्चैष मया राजानकरत्नकण्ठेन.

वज्रादित्यो बप्पियको ललितादित्य[1] इत्यपि । ख्यातोथ भूभृदभवद्यन्माता चक्रमर्दिका ॥३९३॥
स क्रूरचरितो भ्रातुः प्रजाह्लादविधायिनः । सुधांशोरिव दुर्वासा नूनं[1] विसदृशोभवत् ॥३९४॥
परिहासपुरात्पित्र्यां नानोपकरणावलीम् । स जहार दुराचारो भूभृल्लोभवशंवदः ॥३९५॥
रागिणो भूमिपालस्य भूयस्योन्तःपुरस्त्रियः । बीजाश्वस्येव वडवास्तास्ताः समभवन्प्रियाः ॥३९६॥
विक्रयेण प्रयच्छन्स म्लेच्छेभ्यः पुरुषान्बहून् । म्लेच्छोचितां व्यवहृतिं प्रावर्तयत मण्डले ॥३९७॥
सप्ताब्दान्वसुधां भुक्त्वा सोतिसंभोगजन्मना । जगाम संक्षयं क्ष्माभृत्क्षयरोगेण किल्विषी ॥३९८॥
तस्मान्मञ्जरिकादेव्यां जातो राजा प्रजान्तकः । ततः पृथिव्यापीडोभूत्समासाश्चतुरः समाः ॥३९९॥
जातो मम्माभिधानायां बप्पियात्सप्त वासरान्[1] । संग्रामापीडनामाथ तमुत्पाट्याभवन्नृपः ॥४००॥
भ्रातरौ तौ समासाद्य राज्यं नैव व्यराजत । हेमन्तशिशिरावाप्य चण्डांशोरिव मण्डलम् ॥४०१॥
शान्तेथ संग्रामापीडे कनीयान्बप्पियात्मजः । राजा श्रीमाञ्जयापीडः प्राप राज्यं ततः क्रमात् ॥४०२॥
पितामहसमो भूयादित्यमात्यवचः स्मरन् । जिगीषुः संभृतबलो दिग्जयाय स निर्ययौ ॥४०३॥
स्वदेशादेव नयविद्वशं नीतैः समं नृपैः । वृद्धान्पप्रच्छ निर्गच्छन्कश्मीरद्वारगोचरान् ॥४०४॥
पितामहस्य नः सैन्यं कियन्निर्गच्छतोभवत् । इति ब्रूताद्य यात्रासु यूयं संख्यातसैनिकाः ॥४०५॥
कृतस्मितास्तमूचुस्ते किं प्रश्नेनामुना प्रभो । वस्तु कश्चिदतिक्रान्तं नानुकर्तुं क्षमोधुना ॥४०६॥
कर्णीरथानां तस्यासीत्सपादं लक्षमीशितुः । अशीतिस्तु सहस्राणि देवस्याद्य जयोद्यमे ॥४०७॥
तदाकर्ण्य जयापीडो बहु मेने न निर्जयम् । क्षिप्रं क्षितेः संकुचन्त्याः कालस्य बलवत्तया ॥४०८॥
जिगीषोः क्ष्माभुजस्तस्य भावमालोक्य तादृशम् । दध्युर्भावज्ञतां वृद्धा ललितादित्यभूपतेः ॥४०९॥
तस्य दूरप्रयातस्य स्यालो जज्जाभिधो बलात् । द्रोहेणाक्रम्य कश्मीरान्स्वयं भेजे नृपासनम् ॥४१०॥
दिने दिने राजसैन्यात्स्वदेशस्मारिणस्ततः । सैनिकाः सं[1]न्यवर्तन्त स्वामिभक्तिपराङ्मुखाः ॥४११॥
प्रख्यापयिष्यन्स्वामेव शक्तिं परिकरं विना । निश्चिकाय जयापीडो युक्तां कांचित्तु संविदम् ॥४१२॥
अभङ्गुरास्तेभिमानास्तस्यैवासन्मनस्विनः । अत्यवर्तत यैरेष वैधात्रीरपि वामताः ॥४१३॥
स विसृज्य भुवं स्वां स्वां भूपतीननुयात्रिकान् । प्रयागमगमत्सैन्यैः परिमेयैर्निजैः समम् ॥४१४॥
तत्रावशिष्टानुचित्य वाजिनः स मनोजवान् । द्विजेभ्यो लक्षमेकोनं प्रददौ भूरिदक्षिणम् ॥४१५॥
संपूर्णमन्यो लक्षं यः प्रदद्यादत्र वाजिनाम् । तन्मुद्रयेयं मन्मुद्रा विनिवार्येत्युदीर्य च ॥४१६॥
श्रीजयापीडदेवस्येत्यक्षरैरुपलक्षिताम् । दिग्देशगामिनो मुद्रां गाङ्गस्य पयसो ददौ ॥४१७॥
तन्मुद्राङ्कं पयः पीत्वा गाङ्गमद्यापि निर्मलम् । चित्ते प्रवर्धते तापो भूपानामभिमानिनाम् ॥४१८॥
स्वदेशगमनानुज्ञां सैन्यस्याप्रमुखेनं[1] सः । दत्त्वा[2] निशायामेकाकी निर्ययौ कटकान्तरात् ॥४१९॥
मण्डलेषु नरेन्द्राणां पयोदानामिवार्यमा । गौडराजाश्रयं गुप्तं जयन्ताख्येन भूभुजा ॥४२०॥
प्रविवेश क्रमेणाथ नगरं पौण्ड्रवर्धनम् । यस्मिं[1]न्सौराज्यरम्याभिः प्रीतैः[1] पौरविभूतिभिः ॥४२१॥

---

३९३. [1]) $A_3$ ललितापीड. ३९४. [1]) $A_3$ दूरं. ४००. [1]) Thus $A_1$ R G; $A_3$ वत्सरान्. ४११. [1]) Thus $A_3$; $A_1$ स्वा न्यवर्तन्त ४१९. [1]) Thus corr. by $A_3$ from $A_1$ °प्रमुखोथ सः.—[2]) Thus corr. by $A_3$ from $A_1$ कृत्वा (?). ४२१. [1]) Thus corr. by $A_3$ from $A_1$ तस्मि° and प्रीर्ति.

लास्यं स द्रष्टुमविशत्[1] कार्तिकेयनिकेतनम् । भरतानुगमालक्ष्य[2] नृत्तगीतादिशास्त्रवित् ॥४२२॥
ततो देवगृहद्वाराशिलामध्यास्त स क्षणम् ।[1] ........................ ॥४२३॥
तेजोविशेषचकितैर्जनैः परिहृतान्तिकम् । नर्तकी कमला नाम कान्तिमन्तं ददर्श तम् ॥४२४॥
असामान्याकृतेः पुंसः सा ददर्श सविस्मया । अंसपृष्ठेन[1] धावन्तं करं तस्यान्तरान्तरा ॥४२५॥
अचिन्तयत्ततो गूढं चरन्नेष भवेद्ध्रुवम् । राजा वा राजपुत्रो वा लोकोत्तरकुलोद्भवः ॥४२६॥
एवं[1] ग्रहीतुम्[2] अभ्यासः पृष्ठस्थाः पर्णवीटिकाः । अंसपृष्ठेन येनायं लसत्पाणिः[3] प्रतिक्षणम् ॥४२७॥
लोलश्रोत्रपुटो मदोत्कमधुपापातात्ययेपि द्विपः सिंहोऽ[1]सत्यपि पृष्ठतः करिकुले व्यावृत्य विप्रेक्षिता ।
मेघौन्मुख्यशमेप्यशान्तवदनोद्गीर्णस्वरो बर्हिणश्चेष्टानां विरमेन्न हेतुविगमेप्यभ्यासदीर्घा स्थितिः ॥४२८॥
इत्यन्तश्चिन्तयन्ती सा कृत्वा संक्रान्तसंविदम् । सखीमभिन्नहृदयां विससर्ज तदन्तिकम् ॥४२९॥
प्राग्वत्पृष्ठं गते पाणौ पूगखण्डांस्तयार्पितान् । वक्त्रेक्षिपञ्जयापीडः परिवृत्य ददर्श ताम् ॥४३०॥
भ्रूसंज्ञयासि कस्य त्वं पृष्टाया इति सुभ्रुवः । ददत्या[1] वीटिकास्तस्या वृत्तान्तमुपलब्धवान् ॥४३१॥
तया जनितदाक्षिण्यस्तैस्तैर्मधुरभाषितैः । सख्याः समाप्तनृत्ताया निन्ये स[1] वसतिं शनैः ॥४३२॥
अग्राम्यपेशलालापा तथा तं सा विलासिनी । उपाचरत्परार्ध्यश्रीः सौम्यभूरिस्मितो यथा ॥४३३॥
ततः शशाङ्कधवले संजाते रजनीमुखे । पाणिनालम्ब्य भूपालं शय्यावेश्म विवेश सा ॥४३४॥
ततः काञ्चनपर्यङ्कशायी मैरेयमत्तया । तयार्थितोपि शिथिलं विदधे नाधरांशुकम् ॥४३५॥
प्रवेशयन्निव बृहद्वक्षस्तां सत्रपां ततः । दीर्घबाहुः समाश्लिष्य स शनैरिदमब्रवीत् ॥४३६॥
न त्वं पद्मपलाशाक्षि न मे हृदयहारिणी । किं तु कालानुरोधोयं सापराधं करोति माम् ॥४३७॥
दासस्तवायं कल्याणि गुणैः क्रीतोस्म्यकृत्रिमैः । अचिराज्ज्ञातवृत्तान्ता ध्रुवं दाक्षिण्यमेष्यसि ॥४३८॥
कार्यशेषमनिष्पाद्य सज्जं मानिनि कंचन । अभोगे कृतसंकल्पं सुखानां त्वमवेहि माम् ॥४३९॥
तामेवमुक्त्वा पर्यङ्कं साङ्गुलीयेन पाणिना । वादयन्निव[1] निःश्वस्य श्लोकमेतं पपाठ सः ॥४४०॥
असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः । अनाक्रम्य जगत्कृत्स्नं[1] नो संध्यां भजते रविः ॥४४१॥
श्लोकेनात्मगतं तेन पठितेन महीभुजा । सा कलाकुशलाज्ञासीन्महान्तं कंचिदेव तम् ॥४४२॥
गन्तुकामं च तं प्रातर्नृपं प्रणयिनी बलात् । अर्थयित्वा चिरं[1] कालमप्रस्थानमयाचत ॥४४३॥
एकदा वन्दितुं संध्यां प्रयातः सरितस्तटम्[1] । चिरायातो गृहं तस्या ददर्श भृशविह्वलम्[2] ॥४४४॥
किमेतदिति पृष्टाथ तमूचे सा शुचिस्मिता । सिंहोत्र सुमहान्रात्रौ निपत्याहन्ति देहिनः ॥४४५॥
नरनागाश्वसंहारः कृतस्तेन दिने दिने । त्वय्यभूत्वं चिरायाते तद्भयेन समाकुला ॥४४६॥
राजानो राजपुत्रा वा तद्भयेन विसूत्रिताः । गृहेभ्यो नात्र निर्यान्ति प्रवृत्ते क्षणदाक्षणे ॥४४७॥
तामिति ब्रुवतीं[1] मुग्धां निषिध्य च विहस्य च । सव्रीड इव तां रात्रिं जयापीडोत्यवाहयत् ॥४४८॥

४२२. [1]) द्रष्टु supplied by $A_3$ in space left by $A_1$.—[2]) $A_4$ gloss भरताचार्यकृतगीतशास्त्रसदृशं ज्ञात्वा. ४२३. [1]) Here two pâdas seem to be wanting. ४२५. [1]) Thus $A_1$; $A_3$ °पृष्ठेथ. ४२७. [1]) $A_3$ नूनं.—[2]) Emended; A गृहीतु°.—[3]) $A_3$ धावत्पा°. ४२८. [1]) Thus corr. by $A_3$ from $A_1$ सिंहः. ४३१. [1]) Thus corr. by $A_3$ from $A_1$ ददन्त्या. ४३२. [1]) Thus corr. by $A_3$ from $A_1$ स्व. ४४०. [1]) $A_3$ कथयन्निव. ४४१. [1]) Thus $A_3$; $A_1$ जगच्चित्तं. ४४३. [1]) $A_3$ मितं. ४४४. [1]) $A_3$ स सरित्तटम्.—[2]) Thus $A_1$; altered by later hand to °ह्वलाम्. ४४८. [1]) Thus corr. by later hand from $A_1$ ब्रुवतां.

अपरेद्युर्दिनापाये निर्गतो नगरान्तरात् । सिंहागमप्रतीक्षोभून्महावटतरोरधः ॥४४९॥
अदृश्यत ततो दूरादुत्फुल्लबकुलच्छविः । अट्टहासः कृतान्तस्य संचारीव मृगाधिपः ॥४५०॥
अध्वनान्येन यान्तं तमथ मन्थरगामिनम् । राजसिंहो[1] नदन्सिंहं समाह्वयत हेलया ॥४५१॥
स्तब्धश्रोत्रो व्यात्तवक्त्रः कम्प्र[1]कूर्चः प्रदीप्तदृक् । उदस्तपूर्वकायस्तं सगर्जः समुपाद्रवत् ॥४५२॥
तस्य न्यस्याननबिले कफोणिं पततः क्रुधा । क्षिप्रकारी जयापीडो वक्षः क्षुरिकया[1]भिनत् ॥४५३॥
शोणितं जग्धगन्धेभसिन्दूराभं विमुञ्चता । एकप्रहारभिन्नेन तेनात्यज्यत जीवितम् ॥४५४॥
आमुक्तव्रणपट्टः स कफोणिमथ गोपयन् । प्रविश्य नर्तकीवेश्म निशि सुष्वाप पूर्ववत् ॥४५५॥
प्रभातायां विभावर्यां श्रुत्वा सिंहं हतं नृपः । प्रहृष्टः कौतुकाद्द्रष्टुं जयन्तो निर्ययौ स्वयम् ॥४५६॥
स दृष्ट्वा तं महाकायमेकप्रहतिसंहतम् । साश्चर्यो निश्चयान्मेने प्रहर्तारममानुषम् ॥४५७॥
तस्य दन्तान्तराल्लब्धं केयूरं पार्श्वगार्पितम् । श्रीजयापीडनामाङ्कं ददर्शाथ सविस्मयः ॥४५८॥
स्यात्कुतोत्र स भूपाल इति ब्रुवति पार्थिवे । जयापीडागमाशङ्कि पुरमासीद्भयाकुलम् ॥४५९॥
ततः पौरान्विमृश्यैवं जयन्तः क्षितिपोब्रवीत् । प्रहर्षावसरे मूढाः कस्माद्वो भयसंभवः ॥४६०॥
श्रूयते हि जयापीडो राजा भुजबलोर्जितः । केनापि हेतुना भ्राम्यन्नेकाक्येव दिगन्तरे ॥४६१॥
राजपुत्रः कल्हट इत्युक्ता कल्याणदेव्यसौ । तस्मै नियमिता दातुं निष्पुत्रेण सता मया ॥४६२॥
सोन्विष्यश्चेत्स्वयं प्राप्तस्तद्रत्नाहरणेच्छया[1] । रत्नद्वीपं प्रतिष्ठासोर्निधानासादनं गृहात् ॥४६३॥
अस्मिन्नेव पुरे तेन भाव्यं भुवनशासिना । ब्रूयादेनं समान्विष्य योस्मै दद्यामभीप्सितम् ॥४६४॥
वाचि सप्रत्ययाः[1] पौरा भूपतेः सत्यवादिनः । अन्विष्य कमलावासवर्तिनं तं न्यवेदयन् ॥४६५॥
सामात्यान्तःपुरोभ्येत्य प्रयत्नेन प्रसाद्य तम् । ततः स्ववेश्म नृपतिर्निनाय विहितोत्सवः ॥४६६॥
कल्याणदेव्यास्तेनाथ कल्याणाभिनिवेशिना । राजलक्ष्म्या व्यपास्ताया इव सोजिग्रहत्करम् ॥४६७॥
व्यधाद्विनापि सामग्रीं तत्र शक्तिं प्रकाशयन् । पञ्च गौडाधिपाञ्जित्वा श्वशुरं तदधीश्वरम् ॥४६८॥
गतशेषं[1] प्रभुत्यक्तं सैन्यं संवाहयन्स्थितः । मित्रशर्मात्मजो देवशर्मामात्यस्तमाययौ ॥४६९॥
निजदेशं प्रति ततः स प्रतस्थे तदर्थितः । अग्रे जयश्रियं कुर्वन्पश्चात्तेथ सुलोचने[1] ॥४७०॥
सिंहासनं जितादाजौ[1] कन्यकुब्जमहीभुजः । स राज्यककुदं राजा जहारोदारपौरुषः ॥४७१॥
तस्मिन्प्रविष्टे स्वभुवं स्फूर्जदूर्जितविक्रमे । सैन्यैः समं समित्सज्जैर्जज्जो योद्धुं विनिर्ययौ ॥४७२॥
शुष्कलेत्राभिधे ग्रामे तेन सार्धं सुदारुणः । जयापीडस्य संग्रामः सुबहूनि दिनान्यभूत् ॥४७३॥
अनुरक्तप्रजो राजा जज्जराज्यासहिष्णुभिः । युधि सोन्वीयमानो[1]भूद्ग्राम्याटविकमण्डलैः ॥४७४॥
श्रीदेवो ग्रामचण्डालः प्राप्तो ग्राम्यैः समं युधि । कोत्र जज्ज इति भ्राम्यन्योधान्पप्रच्छ सर्वतः ॥४७५॥
तृष्णार्तं स्वर्णभृङ्गारात्पिबन्तं वारि तस्य ते । रणमध्ये हयारूढं तं दूरात्समदर्शयन् ॥४७६॥

---

४५१. [1]) Thus corr. by $A_3$ from $A_1$ °सिंहं. ४५२. [1]) Thus corr. by $A_3$ from $A_1$ कम्प°. ४५३. [1]) $A_3$ gloss खञ्जर्. ४६३. [1]) $A_2$ gloss दृष्टान्तोयम्. ४६५. [1]) $A_4$ gloss सविश्वासाः. ४६९. [1]) $A_2$ gloss प्रकृतं कथासम्बन्धं स्मारयति गतशेषमिति. ४७०. [1]) $A_4$ gloss कमलानर्तकीं कल्याणदेवीं च. ४७१. [1]) Thus $A_3$; $A_1$ °दारौ. ४७४. [1]) Thus $A_3$; $A_1$ सोन्विष्यमानो.

भ्रमयन्क्षेपणीयं स क्षिप्त्वाश्मानं तदानने । सोयं हतो मया जज्ज इत्यमोघक्रियोनदत् ॥४७७॥

साहायकाय[1] राज्ञोहं यामीत्युक्त्वार्थिताशनैः[2] । मातुर्हसन्त्या जज्जस्य प्रतिज्ञायाययौ वधम् ॥४७८॥

अश्मसंरुग्ण[1]भीमास्यं मुमूर्षुं पतितं हयात् । विवेष्टमानं मेदिन्यां जज्जं त्यक्त्वा ययुर्निजाः ॥४७९॥

स समर्थाहितापातचिन्तासततदुःस्थितः । द्रोहार्जितेन[1] राज्येन त्रिभिर्वर्षैर्व्ययुज्यत ॥४८०॥

न्यासापहाराद्वणिजां वेश्यानां कामिवञ्चनात् । द्रोहाच्चोपनता[1] राज्ञामस्थिरा एव संपदः ॥४८१॥

हते जज्जे जयापीडः प्रत्यावृत्य निजां श्रियम् । जग्राह दोष्णा भूभारं कृत्येन च सतां मनः ॥४८२॥

प्रपेदे यत्र कल्याणं स विरोधिविधान्नृपः । देशे कल्याणपुरकृत्तत्र कल्याणदेव्यभूत् ॥४८३॥

राजा मल्हाण[1]पुरकृच्चक्रे विपुल[2]केशवम् । कमला सा[3] स्वनाम्नापि कमलाख्यं[4] पुरं व्यधात् ॥४८४॥

महाप्रतीहारपीडा[1]धिकारं प्रतिपद्य सः । कल्याणदेवी[2]दाक्षिण्यादकरोदधिकोन्नतिम्[2] ॥४८५॥

उत्पत्तिभूमौ देशेस्मिन्दूरदूरतिरोहिता[1] । कश्यपेन वितस्तेव तेन विद्यावतारिता ॥४८६॥

वचो मूर्खोयमित्येव कस्मैचिद्वदते स्फुटम् । सर्वज्ञाना[1]न्ददच्चक्रे सर्वान्विद्याभियोगिनः ॥४८७॥

देशान्तरादागमय्य[1] व्याचक्षाणान्[2]क्षमापतिः । प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ॥४८८॥

क्षीराभिधा[1]च्छब्दविद्योपाध्यायात्संभृतश्रुतः । बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ॥४८९॥

भूपतेरात्मना स्पर्धां चक्षमे न स कस्यचित् । आत्मनस्तु बुधैः स्पर्धी शुद्धधीर्बह्वमन्यत ॥४९०॥

तावत्पण्डितशब्देभूद्राजशब्दादपि प्रथा । तैस्तैर्दोषैर्न तु म्लानिं कालान्तरवदाययौ ॥४९१॥

नृपतौ विद्वदायत्ते राज[1]सांमुख्यकाङ्क्षिभिः । गृहा बभूवुर्विदुषां व्याप्ताः सेवागतैर्नृपैः ॥४९२॥

समग्रहीत्तथा राजा सोन्विष्य निखिलान्बुधान् । विद्वद्दुर्भिक्षमभवद्यथान्यनृपमण्डले ॥४९३॥

अध्यक्षो भक्तशालायां शुक्रदन्तस्य मन्त्रिणः । विद्वत्तया थक्किया[1]ख्यस्तेन स्वीकृत्य वर्धितः ॥४९४॥

विद्वान्दीनारलक्षेण प्रत्यहं कृतवेतनः । भट्टोभूदुद्भट[1]स्तस्य भूमिभर्तुः सभापतिः ॥४९५॥

स दामोदरगुप्ताख्यं कुट्टनीमतकारिणम्[1] । कविं कविं[2] बलिरिव धुर्यं धीसचिवं व्यधात् ॥४९६॥

मनोरथः शङ्खदत्तश्चटकः संधिमांस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥४९७॥

स स्वप्ने[1] पश्चिमाशायां लक्षयन्नुदयं रवेः । देशे धर्मोत्तराचार्यं[2] प्रविष्टं साध्वमन्यत ॥४९८॥

सचेताः संस्तवव्यक्तविवक्तृत्वो बभूव सः । भावानां भुज्यमानानामास्वादान्तरविन्नृपः ॥४९९॥

अपश्यद्भिर्महास्वादान्भावान्स्वादुविवेकिभिः । किं ज्ञेयमशनादन्यत्क्ष्मापैरन्धैरि[1]वोक्षभिः ॥५००॥

---

४७८. [1]) $A_2$ indicates by asterisks and the marginal note मण्डलैः साहायकाय, a different reading in which this verse followed after verse 474.—[2]) Thus $A_2$; $A_1$ हिताशनः. ४७९. [1]) Thus $A_1$; $A_3$ °संरोध°. ४८०. [1]) Thus $A_3$; $A_1$ द्रोहाज्जिनेन. ४८१. [1]) Thus corr. by $A_3$ from $A_1$ °चोपहृता. ४८४. [1]) $A_1$ gloss मलरो इति भाषया.—[2]) Doubtful: thus $A_2$; $A_1$ विरलके°; $A_3$ मरलकेशवम्.—[3]) Thus corr. by $A_3$ from $A_1$ स्वा.—[4]) $A_2$ gloss कलमपुरं. ४८५. [1]) Thus corr. by $A_2$ from $A_1$ °पेडाधि°. Cf. महाप्रतीहारपीडा iv. 142.—[2]) Thus $A_1$; $A_3$ °देवीं and °न्नताम्. ४८६. [1]) Thus G R Edd.; A °हितौ. ४८७. [1]) वैज्ञाना supplied by $A_3$ in space left by $A_1$. ४८८. [1]) $A_3$ gloss प्रापय्य.—[2]) Thus $A_3$; $A_1$ °चक्षाणः ४८९. [1]) $A_2$ gloss क्षीरस्वामिनः. ४९२. [1]) Thus corr. by $A_1$ from राज्य°. ४९४. [1]) Thus corr. by later hand from $A_1$ थाकया°. ४९५. [1]) $A_2$ gloss भट्टोद्भट आलङ्कारिकः ४९६. [1]) $A_3$ °कारणम्.—[2]) $A_3$ gloss शुक्रं° ४९८. [1]) Thus $A_3$; $A_1$ सुस्वप्नं.—[2]) Thus according to marginal note of $A_3$: देश धर्मोत्तराचार्यमित्यन्यादर्शे; $A_1$ देशे भर्गोत्तराचार्ये. ५००. [1]) Thus corr. by $A_2$ from $A_1$ °रन्धैरि°.

आरूढस्य चितां कृतानुमरणोद्योगप्रियालिङ्गनं[1] पुण्ड्रेक्षुद्रवपानमुल्बणमहामोहप्रलुप्तस्मृतेः ।
वीतासोरवतंसमाल्यवलयामोदश्च यादृग्भवेज्ज्ञावानां सुभगः स्वभावमहिमा निश्चेतसस्तादृशः ॥५०१॥

मन्त्रविक्रमयोस्तस्य द्वयोर्दर्पणयोरिव । एकैव बिम्बिता मूर्तिः सहस्रगुणतां ययौ ॥५०२॥

आंकुर्वन्विगुणामाज्ञां[1] लङ्केन्द्रांत्पञ्च[2] राक्षसान् । तेनानयेति जगदे दूतो जातु पुरः स्थितः ॥५०३॥

सांधिविग्रहिकः[1] सोथ गच्छन्पोताच्च्युतोम्बुधौ । प्राप पारं तिमिग्रासं तिमिमुत्पाट्य निर्गतः ॥५०४॥

प्रियमर्त्यो रामभक्त्या नृपाज्ञालेखदायिनम् । स्वदेशमनयत्तं रक्षोभिस्तं विभीषणः ॥५०५॥

दूतं वित्तैः पूरयित्वा सरोगाधं च राक्षसैः । चक्रे जयपुरं कोट्टं त्रिविष्टपसमं नृपः ॥५०६॥

बुद्ध[1]त्रयं महाकारं विहारं च विधाय सः । नगरान्तर्जयादेवीं पुण्यकर्मा स निर्ममे ॥५०७॥

तत्पुरे चतुरात्मा च शेषशायी च केशवः । विष्णुलोकस्थितिं त्यक्त्वा ध्रुवं बध्नाति संनिधिम् ॥५०८॥

अन्यत्कर्मान्तरं किंचित्कारयित्वा स राक्षसान् । व्यधात्कारुभिरेवाम्भ इति शंसन्ति केचन ॥५०९॥

स हि स्वप्ने जलान्तर्मे कुरु द्वारवतीमिति । उक्तः कंसारिणा चक्रे विनिर्माणं तथाविधम् ॥५१०॥

श्रीद्वारवत्यधिष्ठानं बाह्यं[1] कोट्टं तथा ह्यसौ । अभ्यंतरं[2] जयपुरं ब्रूतेद्याप्यखिलो जनः ॥५११॥

सन्त्री पञ्चमहाशब्दभाजनं जगतीभुजः । तस्मिञ्जयपुरे कोट्टे जयदत्तो व्यधान्मठम् ॥५१२॥

राजश्वशुरः प्रमोदस्य जामाता मथुरापतेः[1] । आचाभिधो व्यरचयच्छुचिराचेश्वरं हरम् ॥५१३॥

पुनः संभृतसामग्र्यो दिग्जयाय विनिर्ययौ । बलैर्जलधिवेलाद्रीन्द्राघयन्नलघुद्विपैः ॥५१४॥

संप्रविष्टापि पूर्वाब्धिमविच्छिन्ना हिमाचले[1] । भगीरथस्य गङ्गेव रेजे तस्यानुगा चमूः ॥५१५॥

सार्धं प्रचण्डैश्चण्डालैरटन्तः कटकाद्बहिः । तस्यासन्यामिका रात्रौ मुम्मुनिप्रमुखा नृपाः ॥५१६॥

नामान्यद्विनयादित्य इति प्रख्यापयन्नृपः । पूर्वाशां विनयादित्यपुरेणालंकृतां व्यधात् ॥५१७॥

अत्युत्सेकेन महसा[1] साहसाध्यवसायिनाम्[2] । श्रीरारोहति संदेहं महतामपि भूभृताम् ॥५१८॥

भीमसेनाभिधानस्य स दुर्गं पूर्वदिक्पतेः[1] । निःशब्दो व्रतिभिः सार्धं व्रतिलिङ्गी विवेश यत् ॥५१९॥

तं रन्ध्रान्वेषिणं तत्र परिज्ञाय चिरस्थितः । भ्राता जज्जस्य सिद्धाख्यो गत्वा राज्ञे न्यवेदयत् ॥५२०॥

भूपतिं[1] भीमसेनोथ राजाकस्माद्बबन्ध तम् । नहुषाजगरो भीममिव भीमपराक्रमम् ॥५२१॥

तस्मिन्वीरे तथा बद्धे धुर्ये पुरुषकारिणाम् । पौरुषद्वेषिणा जाने दैवेनोन्नमितं शिरः ॥५२२॥

जयापीडस्त्वसंमूढो व्यसनेष्यतिदारुणे । तांस्तान्संचिन्तयन्नासीदुपायानुदयोन्मुखः ॥५२३॥

अत्रान्तरे नरपतेः पौराणामतिदुस्तरा । लूता[1]मयकृता व्यापदुदपद्यत मण्डले ॥५२४॥

---

५०१. [1]) $A_2$ note in margin : आरूढस्येत्यादिस्थाने षण्ढस्योन्मदबालपङ्कजमुखीपीनस्तनालिङ्गनमित्यपि पाठो रम्यः. ५०३. [1]) The original reading of $A_1$, अकुर्वन्वि°, has been corrected into आंकुर्वन्वि° by a later hand, probably $A_2$; $A_2$ explains the latter reading by the gloss विगुणामपि आज्ञामांकुर्वन् आं अङ्गीकारे. $A_3$ gives the interlinear note अकुर्वन्विगुणामित्यन्यादर्शे, and explains this reading in margin : दूतः किं कुर्वन् आज्ञां राजसम्बन्धिनीं विगुणां निष्फलां अकुर्वन् न विरचयन् मानयन्नाज्ञामित्यर्थः.—[2]) Thus corr. by $A_2$ from $A_1$ लङ्केन्द्रान्पञ्च. ५०४. [1]) Thus corr. by later hand from $A_1$ °ग्रहकः. ५०७. [1]) बुद्ध supplied by $A_3$ in space left by $A_1$; found also in G R; C पुर°. ५११. [1]) Thus A R G; C राज्यं.—[2]) $A_3$ gloss अन्दर्कोट् इति भाषया. ५१३. [1]) Thus corr. by $A_2$ from $A_1$ मधुरा°. ५१५. [1]) Thus corr. by $A_3$ from $A_1$ °द्रिं. ५१८. [1]) Thus $A_3$; $A_1$ सहसा.—[2]) Thus corr. by $A_3$ from $A_1$ सहसाध्यवसायिनाम्; $A_3$ gloss साहसेन हिताहितानपेक्षेण कर्मणा अध्यवसायो येषां. ५१९. [1]) Thus $A_3$; $A_1$ °भूपतेः. ५२१. [1]) Thus corr. by $A_3$ from $A_1$ °पतिर्भीम°. ५२४. [1]) $A_2$ gloss उच्छूनो रक्तवर्णः पिटकाकृतिविस्तृतः सञ्चारी च त्वचि रोगविशेषः लूताख्यः लोत् इति प्रसिद्धः.

आमयः स्पर्शसंचारी[1] तत्र व्यापादकश्च सः | देशदोषादतो जन्तुर्लूताव्याप्तो विवर्ज्यते ||५२५||
तदाकर्ण्य जयापीडो जातोपायप्रयुक्तधीः | स्वभृत्येनोपयुक्तानि द्रव्याण्यानीतवान्त्रहः ||५२६||
तैः पित्तोद्रेचकैर्भुक्तैर्ज्वलत्पित्तोवहज्ज्वरम् | वज्रवृक्षपयश्चाङ्गे क्षिप्त्वा सपिटकोभवत् ||५२७||
तं लूताव्याप्तमाकर्ण्य विपक्षो रक्षिणां मुखात् | विपत्स्यते ध्रुवमिति ध्यात्वा देशाद्बहिर्व्यधात् ||५२८||
एवं स्वमतिमाहात्म्यात्संतीर्णो विपदर्णवात् | व्याप्तव्योमाग्रहीद्दुर्गं यशश्च परिपन्थिनः ||५२९||
यः सर्वकालमबुधैः परिहस्यमानो मूलाङ्कुराद्यपि न जातु पुरस्करोति |
व्यापत्तु शास्त्रविटपी स फलं प्रसूय पुंसः किलैकपद एव लुनात्यलक्ष्मीम् ||५३०||
तमैच्छदभिसंधातुं विद्याविक्रमसंयुतः | मायाव्यरमुडिर्नाम राजा नेपालपालकः ||५३१||
अकृतप्रणतिस्[1]तस्य[2] प्रविष्टस्य स्वमण्डलम् | अयात्[3]तुदूरमध्वानं ससैन्योपससार सः ||५३२||
जिगीषोस्[1]तस्य तु तथा तत्तत्पार्थिवनिर्जयः | पृथक्प्रयत्ननिर्वर्त्यो नाभूत्तदनुसारिणः ||५३३||
मग्नं क्वापि क्वचिद्दृश्यं प्रतिदेशं स वैरिणम् | श्येनः[1] कपोतं कक्ष्यान्तरिवान्विष्यन्[2]जगाम सः ||५३४||
ततो निःशेषितापाये तस्मिन्कुर्वन्स दिग्जयम् | आसन्नाब्धेस्तटे सिन्धोः[1] समुपावेशयद्बलम् ||५३५||
प्रतस्थे दिवसैर्द्वित्रैरथ पूर्वार्णवोन्मुखः | कर्षन्वेलानिलस्पर्शोत्सृष्टध्वजपटाश्रमूः ||५३६||
ततस्तस्मिन्सरित्पारे दक्षिणस्मिन्क्ष्मापतेः | तस्थावरमुडिः[1] सैन्यं स्वच्छत्राङ्कं प्रकाशयन् ||५३७||
भूरिभेरीरवोद्गारि प्रबलं वीक्ष्य तद्बलम् | प्रजज्वाल जयापीडः पीतसर्पिरिवानलः ||५३८||
स जानुदघ्नं निर्विघ्नं पश्यन्नग्रे सरिज्जलम् | अपूर्वत्वादभूमिज्ञः क्रुद्धस्ततु[1] व्यगाहत ||५३९||
मध्यं प्राप्ते नृपे पूर्णा वेलया वर्धमानया | अकालेभूदगाधाम्भाः सार्णवाभ्यर्गगा सरित् ||५४०||
नरनागाश्वबहुलं तथा सैन्यं महीपतेः | प्रवृद्धया प्लाव्यमानं क्षणात्संक्षयमाययौ ||५४१||
नृपतिर्वीचिसंमर्द[1]भ्रंशिताभरणांशुकः | बाहुभ्यां लहरीश्छिन्दञ्जलैर्दूरमनीयत ||५४२||
एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्जितैः | सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः ||५४३||
क्षिप्रकारी सदृतिभिः[1] संनद्धैः सरितोन्तरात् | स चाकृष्य जयापीडं बबन्ध विहितोत्सवः ||५४४||
दैवस्याम्बुमुचश्च नास्ति नियमः कोप्यानुकूल्यं प्रति व्यञ्जन्यः प्रियमुत्कटं घटयते जन्तोः क्षणादप्रियम् |
क्षिप्रं दीर्घनिदाघवासरविपत्संतापनिर्वापणं प्रादुष्कृत्य वनस्पतेः प्रकुरुते विद्युद्विसर्गं च यः ||५४५||
स कालगण्डिकातीराश्रयात्युचाश्मवेश्मनि | निचिक्षेप जयापीडमाप्तानां[1] रक्षिणां करे ||५४६||
तथा काश्मीरिको राजा निमग्नो व्यसने पुनः | स किंकर्तव्यतामूढः शुचा गूढमदह्यत ||५४७||
कलावत्तु शशाङ्कोपि तेजस्विष्वर्यमापि तम् | न ददर्श यथा धीमान्स ररक्ष तथा नृपः ||५४८||
अपश्यन्निर्गतः[1] किंचिदालोकन्यस्तलोचनः[2] | आसन्नां तटिनीमासीदुपायांश्च स चिन्तयन् ||५४९||

५२५. [1]) Thus corr. by $A_1$ from सर्वसं°. ५३२. [1]) $A_4$ gloss आरमुडिः.—[2]) $A_4$ gloss जयापीडस्य.—[3]) Thus $A_1$; $A_3$ अगान्तु°; G R have both readings. ५३३. [1]) $A_4$ gloss जयापीडस्य. ५३४. [1]) $A_3$ gloss श्येनः कपोतं भक्षयतीति प्रसिद्धिः.—[2]) Emended; A G R °न्वेष्य°. ५३५. [1]) $A_2$ gloss सरितः. ५३७. [1]) Thus corr. by $A_3$ from $A_1$ तस्थावुरमुडेः. ५३९. [1]) Thus corr. by $A_2$ from $A_1$ °स्ततं. ५४२. [1]) Thus corr. by $A_2$ from $A_1$ °मर्म°. ५४४. [1]) $A_2$ gloss दृतिः जलोत्तरणार्थ भाहा इति प्रसिद्धा. ५४६. [1]) Thus corr. by $A_3$ from $A_1$ °पीडं सप्तानां. ५४९. [1]) Thus corr. by later hand from $A_1$ निर्गतं.—[2]) $A_3$ gloss आलोक्यतेनेनेत्यालोकः वातायनं । तस्मिन् न्यस्ते लोचने येन सः.

अवस्थावेदकास्तत्र[1] ग्रथिताः पृथिवीभुजा । आर्द्रान्तःकरणैः श्लोकाः स्मर्यन्तेद्यापि सूरिभिः ॥५५०॥
तथा तस्मिन्स्थिते[1] मानी देवशर्मैव मन्त्रिषु । चिन्तयन्स्वामिसंमानमनिशं पर्यतप्यत ॥५५१॥
भर्तुः स्वदेहत्यागेन[1] स हितं कर्तुमुद्यतः । दूतैररमुडेश्चक्रे[2] प्रियवाग्भिः प्रलोभनम्[3] ॥५५२॥
जयापीडश्रिया साकं राज्यं कश्मीरमण्डले । दास्यामि तुभ्यमित्यस्य दूतैः स श्रावितोभवत् ॥५५३॥
प्राप्तेषु प्रतिदूतेषु पूर्णायामथ संविदि । गृहीतकटको मन्त्री नेपालविषयं ययौ ॥५५४॥
स कालगण्डिकासिन्धोरर्वाचि कटकं तटे । स्थापयित्वा परं पारं ययौ मितपरिच्छदः ॥५५५॥
सामन्तैरग्रमायातैस्तां सभां संप्रवेशितम् । सत्कृत्यारमुडिः[1] प्रह्वं न्यवेशयत विष्टरे ॥५५६॥
अध्वश्रान्त इति क्षिप्रं प्रतिमुक्तः[1] क्षमाभुजा । तद्विसृष्टोपचारस्तन्निनायावसथे दिनम् ॥५५७॥
स चारमुडिभूभृच्च पीतकोशौ[1] परस्परम् । आसतां निर्जनेन्येद्युः कर्तव्यकृतनिश्चयौ ॥५५८॥
नृपमूचेथ सचिवो जयापीडार्जितं धनम् । अस्ति सैन्ये तदाप्तानां तस्य वा विदितं च तत् ॥५५९॥
दानेन भविता मोक्षस्तवेत्युक्त्वा विमोहयन् । तस्मात्त्वं प्रष्टुमिच्छामि क्व वस्तु न्यस्तमित्यहम् ॥५६०॥
अत एव मया सैन्यं संहतं न प्रवेशितम् । यदेतन्मध्यगाः[1] शक्या न बन्द्धुं[2] न्यासधारिणः ॥५६१॥
तस्मादेकैकमाहूय तेषु बद्धेषु सैनिकाः । कोपमज्ञातहृदया न यास्यन्ति विवक्षवः ॥५६२॥
एवं विमोहितात्तस्मात्प्राज्ञोनुज्ञां[1] स लब्धवान् । बद्धस्य प्रययौ पार्श्वं जयापीडमहीभुजः ॥५६३॥
तदालोकनजं शोकं गोपयन्[1]धैर्यसागरः । गृहं तन्निर्जनं कृत्वा क्षिप्रं पप्रच्छ तं नृपम् ॥५६४॥
अपि त्वया निजं तेजो भित्तिभूतं न हारितम् । तस्मिन्हि सति सिध्यन्ति साहसालेख्यकल्पनाः ॥५६५॥
स तं बभाषे निःशस्त्रो मन्त्रिन्नेवं व्यवस्थितः । अद्भुतं कर्म किं कुर्यां ध्रियमाणेन तेजसा ॥५६६॥
मन्त्री तमूचे तेजश्चेद्राजन्न निसृतं तव । जानीहि तत्क्षणेनैव लङ्घितं विपदर्णवम् ॥५६७॥
अपि वातायनादस्मात्पतित्वा निम्नगाम्भसि । पारं गन्तुं समर्थोसि सैन्यं ह्यत्र निजं तत्र ॥५६८॥
राजा जगाद तं नास्मात्पतित्वोत्थीयतेम्भसः । विना दृतिं दृतिश्चात्र दूरपाताद्विदीर्यते ॥५६९॥
तस्मान्नायमुपायोत्र न च नाम विमानितः । बहु मन्ये तनुत्यागमनिर्मथ्यापकारिणम् ॥५७०॥
ततो[1] निश्चित्य सोमात्यस्तमवादीन्महीपते । बहिः केनाप्युपायेन वहेस्त्वं[2] नालिकाद्वयम्[3] ॥५७१॥
प्रविश्यैकाकिनैवाथ द्रष्टव्यः संभृतो मया । सरिदुत्तरणोपायः सोनुष्ठेयोप्यशङ्कितम् ॥५७२॥
श्रुत्वेति निर्गतो गत्वा पायु[1]क्षालनवेश्म सः । सविलम्बं बहिर्वेलां[2] तदुक्तामत्यवाहयत् ॥५७३॥
एकाकी संप्रविष्टोथ तं ददर्श च्युतं क्षितौ । विपन्नं गलमुद्बध्य दृढया चेलचीरया ॥५७४॥

---

५५०. [1]) $A_3$ gloss बन्धनवेश्मनि. ५५१. [1]) Thus corr. by later hand from $A_1$ °न्स्थितो. ५५२. [1]) न supplied by $A_3$.—[2]) Emended; $A_1$ °ाररमुडैश्चक्रे, changed by later hand to °मुडेश्चक्रे.—[3]) Thus corr. by later hand from $A_1$ °भ्मिर्विलोभनम्. ५५६. [1]) Thus corr. by $A_3$ from $A_1$ °डेः. ५५७. [1]) Thus $A_1$; $A_3$ प्रतिक्षिप्तः. ५५८. [1]) $A_2$ gloss पीतकोशौ कृतद्रौहिकावित्यर्थः; to द्रौहिका° $A_2$ adds the note शपथः. ५६१. [1]) Thus corr. by $A_3$ from $A_1$ यदि तन्म°; $A_3$ gloss एतन्मध्यगाः संहतसैन्यमध्यगाः इत्यर्थः.—[2]) Thus corr. by $A_3$ from $A_1$ बन्धुं. ५६३. [1]) Thus $A_3$; $A_1$ प्राज्ञोप्याज्ञां; R G follow $A_3$. ५६४. [1]) Thus corr. by $A_3$ from $A_1$ दर्शय°. ५७१. [1]) Thus corr. by $A_3$ from $A_1$ इति.—[2]) Thus corr. by later hand from $A_1$ वहस्त्वं; $A_3$ gloss वहेः गमयेत्यर्थः.—[3]) $A_3$ gloss घटिकाद्वयमित्यर्थः. ५७३. [1]) Thus corr. by $A_2$ from $A_1$ पाद°.—[2]) $A_3$ gloss घटिकाद्वयरूपां.

575 सद्यो[1] व्यापादिततनुः श्वासापूरितविग्रहः[2] । अभेद्योहं तव दृतिर्मामारुह्य तरापगाम् ॥५७५॥
आरोढुरूरु[1]बन्धाय स्वोर्वोरुष्णीषपट्टिका[2] । बद्धा मया तां प्रविश्य क्षिप्रमेव पताम्भसि ॥५७६॥
नखनिर्भिन्नगात्रासृग्लिखितामिति संविदम् । दृष्ट्वा चावाचयत्कण्ठनिबद्धांशुकपल्लवे ॥५७७॥ तिलकम् ॥
विस्मयस्नेहयोः पश्चात्पूर्वं स सरितस्ततः । प्रवाहे पतितो राजा परं पारं समासदत् ॥५७८॥
मानसैन्यः प्रविश्याथ क्षणेनैव निनाय सः । तमशेषं सभूपालं नेपालविषयं क्षयम् ॥५७९॥
580 रक्षितोपि न यावत्तमजानन्बन्धनाच्च्युतम् । तावदेव कथाशेषं विषयं तं चकार सः ॥५८०॥
नृत्यत्कबन्धः स्वर्गस्त्रीमुक्तस्रक्तूर्यघोषवान् । भूपतेर्बन्धनान्मोक्षे बभूव समरोत्सवः ॥५८१॥
दावानलोल्बणभुवो गिरयो निदाघे यत्रैव दूरमितरे परिवर्जनीयाः ।
तत्रैव संभवति सान्द्रहिमद्रवार्द्रश्चित्रं तुषारशिखरी नितरां निषेव्यः ॥५८२॥
जज्जादीनां क्षणे[1] यत्र जन्म स्वामिद्रुहामभूत् । तत्रैव मन्त्रिणश्चित्रं कृतिनो देवशर्मणः ॥५८३॥
नाभूद्धि सदृशः[1] सूनुः स पितुर्मित्रशर्मणः । तमोमयो भासुरस्य[2] भानोरिव शनैश्चरः ॥५८४॥
585 रक्षारत्नोपमे तस्मिन्सचिवेस्तमुपागते । प्राप्तामपि श्रियं मेने नृपतिर्हारितामिव ॥५८५॥
तस्य दिग्विजयस्यान्ते मानम्लानिर्विनिर्ययौ । मानसात्पृथिवीभर्तुर्नात्योपक्रिया पुनः ॥५८६॥
चित्रं जितवतस्तस्य स्त्रीराज्ये मण्डलं महत् । इन्द्रियग्रामविजयं बहु मन्यन्त भूभुजः ॥५८७॥
कर्णश्रीपटमाबध्य स्त्रीराज्यान्निर्जिताहृतम् । धर्माधिकरणाख्यं च कर्मस्थानं विनिर्ममे ॥५८८॥
द्वितीयं चलगञ्जाख्यं कर्मस्थानमपि व्यधात् । उपयुक्तं प्रयाणेषु गञ्जे दूरस्थिते निजे ॥५८९॥
590 किमन्यत्तद्भुजावासनिवासिन्या जयश्रियः । चत्वारोम्बुधयोभूवन्विलासमणिदर्पणाः ॥५९०॥
पुनः प्रविश्य कश्मीरान्स भूपैः परिवारितः । चिराय बुभुजे राजा विजयोपार्जितां श्रियम् ॥५९१॥
तं कदाचिन्नृपं स्वप्ने सर्वाशाविजयोर्जितम् । पुमान्दिव्याकृतिः कोपि व्याजहार कृताञ्जलिः ॥५९२॥
सुखं त्वद्विषये राजन्वसन्नस्मि सबान्धवः । नागेन्द्रोहं महापद्मनामा त्वां शरणं श्रितः ॥५९३॥
द्राविडो मान्त्रिकः कश्चिन्मामितो नेतुमुद्यतः । जलाकाङ्क्षिणि वित्तेन विक्रेतुं मरुमण्डले ॥५९४॥
595 तस्माच्चेत्पासि मां तत्ते स्वर्णधातुभुवं गिरिम् । स्वदेशे दर्शयिष्यामि स्फीतोपकृतिकारिणः ॥५९५॥
राजा स्वप्ने निशम्येति दिक्षु संप्रेरितैश्चरैः[1] । कुतोपि प्राप्तमानीय तं पप्रच्छ चिकीर्षितम् ॥५९६॥
दत्ताभयः स नागोक्तं यथावत्सर्वमुक्तवान् । सविस्मयेन भूभर्त्रा स्वयं भूयोप्यपृच्छ्यत ॥५९७॥
भूरियोजनविस्तीर्णात्सरसोभ्यन्तरात्त्वया । नागः प्रभावोत्कृष्टः स निष्क्रष्टुं शक्यते कथम् ॥५९८॥
स तं व्यजिज्ञपद्राजन्नचिन्त्या मन्त्रशक्तयः । तांश्चेद्दिदृक्षसे क्षिप्रमेत्याश्चर्यं विलोक्यताम् ॥५९९॥
600 अथानुगम्यमानः स राज्ञा प्राप्तः सरोन्तिकम् । अभिमन्त्र्योज्झितैर्बाणैर्बद्धाशोशोषयज्जलम् ॥६००॥

---

५७५. 1) $A_2$ gloss सद्यो व्यापादिततनुरित्यादि पताम्भसीत्यन्ता शिक्षा राज्ञः कृते नखनिर्भिन्नस्वशरीररक्तेन लिखिता तेन कृतज्ञेन मंत्रिवरेण स्वकीयकण्ठनिबद्धे वस्त्रखण्डे.—2) $A_2$ gloss अत एव दृतिवदित्यर्थः.—3) $A_1$ originally दृतेर्मा°; to this reading refers the gloss of $A_2$: दृतेः सकाशादप्यभेद्योहमित्यर्थः. On altering the reading to दृतिर्मा°, $A_2$ has struck out the first gloss and added a fresh one: अहमभेद्यो दृतिरस्मि.—4) $A_2$ gloss मां दृतिरूपं. ५७६. 1) Thus corr. by later hand from $A_1$ °रूढ-बन्धाय.—2) $A_2$ gloss उष्णीषपट्टिका वेष्टनाञ्चलद्वयपट्टिकेत्यर्थः. ५८३. 1) Thus corr. by later hand from $A_1$ क्षणं. ५८४. 1) Thus A R G; C नाभून्निसदृशः.—2) Thus $A_1$; $A_3$ भास्वरस्य. ५९६. 1) Thus $A_1$; $A_3$ °प्रेषितैश्च°.

राजापश्यत्ततः पङ्के लुठन्तं मानुषाननम् । वितस्तिदेश्यमुरगं भूरिह्रस्वोरगान्वितम् ॥६०१॥
मन्त्रसंकोचितं राजन्गृह्णाम्यमुमिति ब्रुवन् । मा ग्रहीरिति भूपेन सोभिधाय[1] न्यषिध्यत ॥६०२॥
तूर्णं राजाज्ञया तेन[1] मन्त्रवीर्येथ संहृते । सरोभूत्प्रागवस्थं तत्पुनर्व्याप्तदिगन्तरम् ॥६०३॥
द्राविडं द्रविणं दत्त्वा विसृज्याचिन्तयन्नृपः । दद्यान्नाद्याप्यसौ नागः कथं स्वर्णाकरं गिरिम् ॥६०४॥
ध्यायन्तमेव तं स्वप्ने ततः प्रोवाच पन्नगः । केनोपकारेण गिरिः स्वर्णसूस्तव दर्श्यते ॥६०५॥
स्वदेशोयं विदेशोयमिति बुद्धेः प्रवर्तकः । अन्वयव्यतिरेकाभ्यां स्थित्यभ्यासः शरीरिणाम् ॥६०६॥
शरणं त्वामहमगामवमानभयात्पुनः । शरण्येन सता तत्तु भवतैव प्रदर्शितम् ॥६०७॥
उदन्वानिव योक्षोभ्यो ज्ञायते संश्रितैः प्रभुः । का ह्रीस्ततोन्या सोन्यैर्यत्तेषामग्रेभिभूयते[1] ॥६०८॥
याभिरन्याभिभूताभिरीक्षितस्त्रातुमक्षमः । तासां केनाभिमानेन स्त्रीणां द्रक्ष्याम्यहं मुखम् ॥६०९॥
ये[1]कारणंसधर्माणो व्यामूढस्य भवाम ते । विडम्ब्यमानाः क्रीडायै ते वयं प्राकृता इव ॥६१०॥
अथ वा श्रीमदान्धानामप्रेक्षापूर्वकारिणाम् । यत्किंचनविधायित्वं पार्थिवानां किमद्भुतम् ॥६११॥
मन्यन्ते क्ष्माभुजः क्रीडामुन्नतानां विमाननाम्[1] । यावज्जीवं तु सश्वासं मरणं तां विदन्ति ते ॥६१२॥
उपेक्ष्य[1]पक्षे भूपानां मानः स्वार्थस्य सिद्धये । स तु प्राणानुपेक्ष्यापि ग्राह्यपक्षे मनस्विनाम् ॥६१३॥
महतो येवमन्यन्ते घटन्ते च विमानितैः । मनःस्वरूपाभिज्ञत्वं तेषां केनानुमीयते ॥६१४॥
भवन्त इव तत्रापि न वयं व्यर्थदर्शनाः । ताम्रधातुरसस्यन्दी दर्श्यते तद्गिरिस्तव ॥६१५॥
इत्युक्त्वा संविदं तस्मै स्वप्न एव स तां ददौ । यथा प्रबुद्धः प्रत्यूषे प्राप ताम्राकरं गिरिम् ॥६१६॥
स तस्मात्क्रमराज्यस्थात्ताम्रमाकृष्य निर्ममे । शतं दीनार[1]कोटीनामेकोनं स्वाभिधाङ्कितम् ॥६१७॥
पूर्णं कोटिशतं कुर्याद्यः स मां निर्जयेदिति । दर्पभङ्गाय भूपानां समयं स्थापयन्नृपः ॥६१८॥
समस्या इव स क्ष्माभृत्सावशेषैर्विचेष्टितैः । चिक्षेप तुल्यनिर्माणकुण्डत्वायेति भूभृताम् ॥६१९॥
अथाकस्मान्महीपालः प्रजाभाग्यविपर्ययैः । त्यक्त्वा पैतामहं मार्गं ययौ पित्र्येण सोध्वना ॥६२०॥
किं दिग्जयादिभिः क्लेशैः स्वदेशादर्ज्यतां धनम् । इत्यर्थ्यमानः कायस्थैः स्वमण्डलमदण्डयत् ॥६२१॥
शिवदासादिभिर्लुब्धैर्धनस्थानाधिकारिभिः[1] । प्रविवर्धितवित्तेच्छः सोभूल्लोभवशंवदः ॥६२२॥
काश्मीरिकाणामुत्पन्नं[1] निजाज्ञाव्यवधायकम् । कायस्थवक्त्रप्रेक्षित्वं ततः प्रभृति भूभृताम् ॥६२३॥
मन्त्रस्तस्य महीभर्तुर्योभूत्तत्त्वंनृपग्रहे । वास्तव्यबन्धचिन्तायां स एव स्थैर्यमाययौ ॥६२४॥
यत्सतां प्रशमाधायि पापस्योपदिदेश तत् । जयापीडस्य पाण्डित्यं प्रजापीडनशौण्डताम् ॥६२५॥
स सौदास इवानेकलोकप्राणापहारकृत् । अस्तुत्यकृत्यसौहित्यं स्वप्नेपि न समाययौ ॥६२६॥
कुर्मः किल्विषमेतदेव हृदये कृत्वेति कौतूहलात्स्वैरिण्यः क्षितिपाश्च धिक्चपलतां क्रौर्यं च कुर्युः सकृत् ।
पापाक्रान्तधियो भवन्त्यथ तथा[1] नान्त्यान्स्पृशन्त्योपि ता दूयन्ते न च ते यथा स्वपितरौ घ्नन्तोपि शान्तत्रपाः ॥६२७॥

६०२. [1]) Emended; A सोभ्यधाय. ६०३. [1]) Thus corr. by $A_3$ from $A_1$ याते. ६०८. [1]) Thus corr. by $A_3$ from $A_1$ °भुतये. ६१०. [1]) $A_1$ येऽकारण°. ६१२. [1]) Thus corr. by later hand from $A_1$ विमानिनाम्. ६१३. [1]) $A_2$ gloss त्याज्य. ६१७. [1]) Thus $A_1$; $A_3$ दीन्नार°. ६२२. [1]) Thus corr. by $A_3$ from $A_1$ °काराविभिः. ६२३. [1]) Thus corr. by $A_3$ from $A_1$ काश्मीरका°. ६२७. [1]) Thus $A_3$; $A_1$ यथा.

लोभाभ्यासात्तथा क्रौर्यं स ययौ वत्सरत्रयम् । सह कार्षकभागेन यथाहार्षीच्छरत्फलम् ||६२८||
लुब्धत्वध्वस्तधीर्भूभृत्स्वल्पवित्तलवप्रदान् । सर्वस्वहारिणो मेने कायस्थान्हितकारिणः ||६२९||
सामुद्रास्तिमयो नृपाश्च सदृशा एके हतादम्भसः[1] स्वल्पमादेव कणान्घनस्य जहतो जानन्ति ये दातृताम् ।
सर्वस्मात्स्फुटलुण्ठिताद्वितरतो[2] लेशान्किलान्येपि ये दुष्कायस्थकुलस्य हन्त कलयन्त्यन्तर्हितादायिताम् ||६३०||
सर्वकालं ब्राह्मणानामहो धैर्यमकुण्ठितम् । निस्त्रिंशस्य बभूवुर्ये तस्यापि परिपन्थिनः || ६३१ ||
देशान्तरं प्रयातेभ्यो ये शेषास्ते व्यरंसिषुः । विक्रोशन्तो न मरणाद्धरणान्नापि पार्थिवः ||६३२||
विप्राणां शतमेकोनमेकाहेन[1] विपद्यते । निवेद्यमेतदित्यूचे क्रौर्याक्रान्तोथ पार्थिवः ||६३३||
विपर्यस्तचरित्रस्य तस्य क्रूरस्य भूपतेः । एवं स्तुतिविपर्यासः काव्येष्वपि बुधैः कृतः ||६३४||
नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ||६३५||
भाष्यव्याख्याक्षणे श्लोकैर्वैचक्षण्यहृतैः[1] कृतः । सोयं तस्य विपर्यासो[2] बुधैरेवं प्रवर्तितः[3] ||६३६||
कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः[1] । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ||६३७||
तूलमूल्योपहर्ता[1] च चन्द्रभागातटे स्थितः । विप्राणां शतमेकोनमश्रृणोत्तज्जले मृतम् ||६३८||
ततोग्रहारहरणादेव प्रविरतोभवत् । वास्तव्यानां हृतां भूमिं न तु निःशेषतो जहौ ||६३९||
अथ विज्ञप्तिसमये तूलमूल्यौकसो[1] द्विजाः । तुरुष्कर्जातु तस्याग्रे प्रतीहारकराहताः ||६४०||
मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः । अन्वभावि तदग्रेपि ब्राह्मणैर्न विमानना ||६४१||
सेन्द्रं स्वर्गं सशैलां क्ष्मां सनागेन्द्रं रसातलम् । निर्दग्धुं हि क्षणेनैव विप्राः शक्ताः प्रकोपिताः ||६४२||
नदाकर्ण्यास्त सामन्तत्यक्तपृष्ठः क्षमापतिः । उल्लासितैकभ्रूलेखो दर्पाद्वचनमब्रवीत् ||६४३||
भिक्षाकणभुजां कोयं शठानां वो मदज्वरः । येनर्षय इव ब्रूथ प्रभावख्यापकं[1] वचः ||६४४||
भीमभ्रूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्वथ । इड्डिलाख्यस्तमाह[2] स्म ब्रह्मतेजोनिधिर्द्विजः ||६४५||
राजन्युगानुरूप्येण भावाभावानुवर्तिनः[1] । शासितुस्तेनुसारेण न कस्मादृषयो वयम् ||६४६||
आह स्म विश्वामित्रो वा वसिष्ठो वा तपोनिधिः । त्वमगस्त्योथ वा किं स्या इति दर्पेण तं नृपः ||६४७||
ज्वलन्निव ततः स्फूर्जत्तेजोदुष्प्रेक्ष्यविग्रहः[1] । स फणीवोत्फणस्ताम्यन्कोपान्नृपतिमब्रवीत् ||६४८||
भवान्यत्र[1] हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोपि वा । विश्वामित्रमुखेभ्योहं तत्रैको भवितुं क्षमः ||६४८||
विहस्योवाच तं राजा विश्वामित्रादिकोपलः । हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत् ||६४९||
पाणिना ताडयन्नुर्वीं ततः क्रुद्धोभ्यधाद्द्विजः । मयि क्रुद्धे क्षणादेव ब्रह्मदण्डः पतेन्न किम् ||६५०||
तच्छ्रुत्वा विहसन्राजा कोपाद्ब्राह्मणमब्रवीत् । पततु ब्रह्मदण्डोसौ किमद्यापि विलम्बते ||६५१||
नन्वयं पतितो जाल्मेत्यथ विप्रेण भाषिते । राज्ञः कनकदण्डोङ्गे वितानस्खलितोपतत् ||६५२||
||६५३||

६३०. 1) Thus $A_1$; $A_2$ हतान°.—2) Thus $A_1$; $A_3$ °तान्वि°. ६३३. 1) Thus $A_1$; $A_3$ °काहे चोद्दि°. ६३६. 1) Thus $A_1$; $A_3$ श्लोकं वै°.—2) Thus corr. by $A_3$ from $A_1$ विपर्यासे.—3) Thus corr. by $A_3$ from $A_1$ विवर्तितः. ६३७. 1) $A_3$ gloss निष्ठाशब्द इह नाशवाची. ६३८. 1) Thus corr. by $A_2$ from $A_1$ तूलमूला°. ६४०. 1) Thus $A_2$; $A_1$ तूलमूलौ°. $A_2$ gloss तूलमूलाख्यो ग्रामः ६४४. 1) Thus corr. by $A_3$ from $A_1$ °ख्यापकं. ६४५. 1) Thus corr. by $A_3$ from $A_1$ तूर्णीं.—2) Thus corr. by $A_2$ from $A_1$ इड्डिला°. ६४६. 1) $A_3$ विप्रा भूपानुवर्तिनः इत्यन्यादर्शे. ६४८. 1) Thus $A_1$; $A_3$ दुष्प्रेक्ष°. ६४९. 1) $A_2$ gloss भवान्यत्रेति विश्वामित्रशापाद्धरिश्चन्द्रो भ्रष्टः स्वपदात् वसिष्ठशापात्त्रिशङ्कुर्भ्रष्टः अगस्त्यशापाच्च नहुषो भ्रष्टः इति तद्दृष्टान्तोत्र वृत्तः.

कृतव्रणः स तेनाङ्गे विमर्द[1]क्लिन्नविग्रहः | कीर्यमाणक्रिमिकुलः क्रकचैश्चारितैरभूत् ||६५४||
अनुभाव्य व्यथां भाविनिरयक्लेशवार्णिकाम् | गणरात्रेण तं प्राणाः काङ्क्षितापगमा जहुः ||६५५||
ब्रह्मदण्डकृतं दण्डं भुक्त्वा दण्डधराधिपः | अकाण्डदण्डस्रष्टाथ ययौ दण्डधरान्तिकम् ||६५६||
तस्यानियतचित्तस्य त्रिंशतं परिवत्सरान् | एवं प्रतापिनः सैकान्भूभोगो भूपतेरभूत् ||६५७||
तथा भूभृन्मत्स्या द्रविणकलुषाम्भःकृततृषः स्थितिं[1] स्वामुज्झन्तो विदधति कुमार्गानुसरणम् |
क्रियन्ते कार्तान्तानुगविकृतकैवर्तनिवहैर्यथा ह्येतेकस्मात्स्थिरनिरयजालप्रणयिनः ||६५८||
कृतपापं तमुद्दिश्य विपन्नममृतप्रभा | मृतोद्धाराय तन्माता व्यधत्तामृतकेशवम् ||६५९||
ललितापीडनामाभूत्ततो वसुमतीपतिः | देव्यां दुर्गाभिधायां यो जयापीडादजायत ||६६०||
बभूव रागिणो राज्ये राज्यकार्याण्यपश्यतः | यस्य वाराङ्गनाभोज्यं राज्यं दुर्नयदूषितम् ||६६१||
दुष्कृतेनार्जितं वित्तं पित्रा निरयभागिना | य[1]श्चारणादिषु न्यस्यन्ननुरूपं व्ययं व्यधात् ||६६२||
बन्धकीबन्धुभावेन प्राप्तराजगृहाश्रयाः | तं पौंश्चलीयविद्यानामन्तरङ्गं व्यधुर्विटाः ||६६३||
केशान्स्त्रीदशनच्छिन्नान्वक्षस्तन्नखलाञ्छितम् | वपुषो मण्डनं मेने किरीटकटकोज्झितः ||६६४||
यो यो वेश्याकथाभिज्ञो[1] यो यो नर्मविचक्षणः | स स तत्प्रियतां लेभे न शूरो न च पण्डितः ||६६५||
अतृप्तः स्त्रीभिरल्पाभिरुग्ररागः स पार्थिवः | जडं मेने जयापीडं स्त्रीराज्यान्निर्गतं जितात् ||६६६||
दिग्विजयव्यसनिनः पूर्वभूपाञ्जहास सः | गणिकाभोगसुखितः स्वसामायिकमध्यगः ||६६७||
संकोचकारिणो वृद्धान्नर्मोक्त्योद्वेज्य वारयन् | तस्माद्विटजनो लेभे संप्रीतात्पारितोषकम् ||६६८||
अट्टचेट इव स्पष्टपरिहासविचक्षणः | सोलज्जयन्मन्त्रिवृद्धानास्थाने गणिकासखः ||६६९||
बन्धकीपादमुद्राङ्कं चारु प्रावरणादि सः | गौरवार्हान्दुराचारः सचिवान्पर्यधापयत् ||६७०||
मानी मनोरथो मन्त्री परं परिजहार तम्[1] | अशक्नुवन्नमयितुं मध्यपातपराङ्मुखः ||६७१||
कुकृत्यं योगराहित्यं[1] वैधुर्यं द्रोहवृत्तिता |......[2] दुर्वृत्तस्य प्रभोरन्यत्परिहारान्न भेषजम् ||६७२||
सुवर्णपार्श्वं[1] विप्रेभ्यो ददत्फलपुरं[2] तथा | भूभृत्स लोचनोत्सं च द्वादशाब्दानभूद्विभुः ||६७३||
कल्याणदेव्यां संजातो जयापीडमहीभुजः | संग्रामापीडनामाथ बभूव भुवनेश्वरः ||६७४||
पृथिव्यापीड इत्यन्यन्नाम बिभ्रत्स भूपतिः | समाप्तिं सप्तभिर्वर्षैः साम्राज्यस्य समासदत् ||६७५||
श्रीचिप्पटजयापीडो बृहस्पत्यपराभिधः | ललितापीडजो राजा शिशुर्देश्यस्ततोभवत् ||६७६||
रागग्रहगृहीतस्य ललितापीडभूपतेः | वेश्यायां कल्यपाल्यां यो जयादेव्यामजायत ||६७७||
उत्पलाख्यस्याखुवग्रामकल्यपालस्य[1] तां सुताम् | रूपलुब्धोवरुद्धा[2]त्वमनैषीत्स हि भूपतिः ||६७८||
पद्मोत्पलककल्याणमम्मधर्मैः[1] स मातुलैः | बालकैः पाल्यमानोभूत्पृथिवीभोगभागिभिः ||६७९||

---

६५४. 1) Thus corr. by $A_3$ from $A_1$ विसर्प°. ६५८. 1) Thus corr. by $A_2$ from $A_1$ क्षिर्ति. ६६२. 1) $A_1$ seems to have read यचा°; corrected by $A_3$. ६६५. 1) Thus corr. by $A_3$ from $A_1$ °कथाविज्ञो. ६७१. 1) Thus corr. by $A_3$ from $A_1$ तत्. ६७२. 1) Thus corr. by $A_3$ from $A_1$ योगवाहित्वं.—2) Here seems to be a *lacuna* in the text. ६७३. 1) $A_2$ gloss सुनपाह.—2) $A_2$ gloss परिहासपुरसमीपे. ६७८. 1) $A_3$ gloss कल्यं सुरां पालयतीति कल्यपालः कलवाल् इति भाषया.—2) Thus corr. by $A_3$; two aksharas of $A_1$, corresponding to रुद्धा, are illegible on account of an ink blot. $A_3$ gloss अवरुद्धा उरद्धा इति भाषया. ६७९. 1) Thus $A_1$; $A_3$ °धम्मैः.

तस्य पञ्च महाशब्दाञ्जयायानुत्पलकोऽग्रहीत् । अन्ये जगृहिरेऽन्यानि कर्मस्थानानि[1] मातुलाः ||६८०||
आयत्तीकृतसाम्राज्यैर्भ्रातृभिर्वन्दिताज्ञया । भूभृज्जनन्या विदधे जयादेव्या जयेश्वरः ||६८१||
राज्ञां कृपणवित्तैर्यत्प्रविष्टैर्दूष्यते धनम् । अचिरान्नीयते शान्तिमपूर्वैः कैश्चिदेव तत् ||६८२||
जयापीडस्य यत्किंचित्सूनुना हि व्ययीकृतम् । सूनुस्यालै[1]रशेषं तत्तैः क्रमेण हृतं वसु ||६८३||
भगिनीभगसौभाग्यसंभवैर्विभवैः कृताः । तेभङ्गुराणां भोगानां भोक्तारो भाग्यभागिनः | ६८४||
निरङ्कुशं चेष्टमानाः शनकैस्त्यक्तशैशवात् । ते स्वस्त्रीयान्नृपान्नाशमकुलीनाः शशङ्किरे ||६८५||
अथाभिचारक्रियया मिथः संमन्त्र्य पापिभिः । राज्येच्छया तैः स्वस्त्रीयः स्वामी च स नृपो हतः ||६८६||
भुक्तक्षितौ द्वादशाब्दांस्तस्मिन्व्यापादित तथा । नैच्छन्नेकस्य ते राज्यं परस्परमहंकृताः ||६८७||
तेशामाक्रान्तदेशानां[1] नाममात्रमहीपतीन् । तांस्तान्कर्तुमसामान्यां[2]न्विरोधोऽन्योन्यमुद्ययौ[3] ||६८८||
अथ मेघावलीदेव्यां जातो बप्पियभूपतेः । ज्येष्ठोऽप्यचाक्रिकतया योऽभूद्राज्यविवर्जितः ||६८९||
सोऽयं त्रिभुवनापीडो जयादेव्यामजीजनत् । राजानमजितापीडं तं बलादुत्पलो व्यधात् ||६९०|| युग्मम्[1] ||
शेडा[1]दिगण्यनास्थाननिष्यन्दोत्थान्नृपाय ते । पं[2]च्चमाद्गण्यनास्थानादशनाच्छादने ददुः ||६९१||
एकसंभाषणात्खेदं यात्स्वन्येषु दिने दिने । पञ्च तुल्यमुखानै[1]च्छद्दुःस्थो राजा तदाश्रितः ||६९२||
ते राजन्यजितापीडे राज्योत्पत्त्यपहारिणः । पुरदेवगृहादीनां प्रतिष्ठाकर्म चक्रिरे ||६९३||
सापत्यास्ते बुभुजिरे राज्यं स्वामिविवर्जितम् । निर्जने महिषं शान्तं मिथः सेर्ष्या वृका इव ||६९४||
उत्पलेनोत्पलस्वामी तथोत्पलपुरं कृतम् । पद्मस्य पद्मस्वाम्यास्ते कृतिः पद्मपुरं तथा ||६९५||
वधूर्व्यधत्त पद्मस्य गुणादेवी गुणोज्ज्वला । मठमेकमधिष्ठाने द्वितीयं विजयेश्वरे ||६९६||
धर्मो धर्मोद्यमी हेतुर्धर्मस्वामिविनिर्मितेः । कल्याणवर्मा सत्कर्मा कल्याणस्वामिकेशवे ||६९७||
दीन्नाराणां सहस्राणि पञ्चोपकरणं कृती । एकैकस्याः सुधीर्धेनोः कृत्वा मम्मो महाधनः ||६९८||
पञ्चाशीतिसहस्राणि गवां दत्त्वा प्रकल्पयन् । कुम्भप्रतिष्ठासंभारं यो मम्मस्वामिनं व्यधात्[1] ||६९९||
द्रोहार्जितास्तु वा लक्ष्मीः सुकृतोपार्जिताथ वा । सर्वेषां स्पृहणीयैव तेषां दातृतया तया ||७००||
कृता देवगृहास्तैर्ये तत्पार्श्वेऽन्यसुरास्पदैः । दिङ्मातङ्गसमीपस्थकलभौपम्यमाश्रितम् ||७०१||
एकोननवते वर्षे स्वस्त्रीये शान्तिमागते । निर्विघ्नभोगास्तेऽभूवन्षड्विंशाब्दात्ययावधि ||७०२||
अथ मम्मोत्पलकयोरुदभूद्दारुणो रणः । रुद्धप्रवाहा यत्रासीद्वितस्ता सुभटैर्हतैः ||७०३||
कविर्बुधमनःसिन्धुशशाङ्कः शङ्कु[1]काभिधः । यमुद्दिश्याकरोत्काव्यं भुवनाभ्युदयाभिधम् ||७०४||

६८०. [1]) $A_2$ gloss कर्मस्थानानि कारखान इति प्रसिद्धानि. ६८३. [1]) $A_4$ glosses ललितापीडेन and पद्मोत्पलकादिभिः.
६८८. [1]) Thus corr. by $A_3$ from $A_1$ °देहानां.—[2]) $A_1$ wrote °मसामान्यान्वि°; $A_2$ altered this to °मसम्मत्या; $A_3$ has struck out the reading of $A_2$ and has written above °मसामान्यान्वि°.—[3]) Thus corr. by $A_3$ from $A_1$ °माययौ. ६९०. [1]) युग्मम् added by $A_3$. ६९१. [1]) Thus corr. by a later hand from $A_1$ डेडा°; R Edd. शेडा°; G डेडा°. Cf. viii. 578 (C.).—[2]) $A_2$ gives the marginal note शलस्थूलं नामेल्याणकं मिथान नवमामादि एषां चतुर्णां सम्बन्धी एकोत्पत्तिप्रवेशः स पञ्चमगणनास्थानमिति लोकाम्नायः. ६९२. [1]) Thus $A_1$; $A_2$ °मुखान्यै°. ६९९. [1]) To this verse seems to refer the gloss of $A_2$: मलुनायां.
७०४. [1]) $A_2$ gloss श्रीशङ्कुकाभिधः प्रसिद्ध आलङ्कारिकः यस्य मतं रसनिरूपणे काव्यप्रकाशे चतुर्थोल्लासे श्रीमम्मटाचार्येण निरूपितम्.

मम्मसूनुर्यशोवर्मा संग्रामाग्रे व्यपाहरत् । स यत्र तेजः शूराणां नक्षत्राणामिवार्यमा ॥७०६॥

अथोत्पाटचाजितापीडं संग्रामापीडसंभवः । अनङ्गापीडनामाभूत्कृतो मम्मादिभिर्नृपः ॥७०७॥

मम्मोत्साहासहिष्णुत्वात्संभृतामर्षवैकृतः । तस्य राज्यं द्विषन्नासीत्सुखवर्मोत्पलात्मजः ॥७०८॥

वर्षत्रयेणोत्पलके ततः प्रमयमागते । स[1] चकारोत्पलापीडमजितापीडजं नृपम् ॥७०९॥

तेषामाश्वयुजीराजंसदृशानां महीभुजाम् । भूत्वापि भृत्याः कृतिनो विभूतिं केपि लेभिरे ॥७१०॥ 710

सांधिविग्रहिकस्तस्य रत्नो नाम विभूतिभाक् । तस्मिन्कालेपि यश्चक्रे रत्नस्वामिसुरास्पदम् ॥७११॥

भेजुर्दार्वाभिसारादीन्देशानुत्तम्भ्य भूपताम् । विमलाश्वा ग्रामभुजो नराद्या व्यवहारिणः ॥७१२॥

राज्ञां कार्कोटवंश्यानां क्षीणप्रायमभूत्कुलम् । वंशस्तूत्पलकुल्यानां भुवि वैपुल्यमाययौ ॥७१३॥

सामर्थ्योपनतप्रायपार्थिवत्वो व्यपद्यत । विद्वेषात्सुखवर्माथ शुङ्काख्येन स्वबन्धुना ॥७१४॥

ततः शूराभिधो मन्त्री सुखवर्मात्मजेकरोत् । राज्ययोग्योयमित्यास्थां सगुणेवन्तिवर्मणि ॥७१५॥ 715

एकत्रिंशे स वर्षेथ प्रजाविप्लवशान्तये । विनिवार्योत्पलापीडं तमेव[1] नृपतिं व्यधात् ॥७१६॥

यत्कृते विफलक्लेशा आसन्पितृपितामहाः । पौत्रेण हेलया प्राप्ता सा सिद्धिः पुण्यकर्मणा ॥७१७॥

कुम्भाः पयोनिधिपयोहरणप्रवृत्ता नित्यं वहन्ति किल ये विफलश्रमत्वम् ।
चित्रं क्षणादिह तदेकसमुद्भवेन संदर्शिता निखिलवारिधिपानलीला ॥७१८॥

अभूत तदनु[1] मूर्ध्नि राजलक्ष्मीघटितकटाक्षकृतादिपट्टबन्धे ।
कनकघटमुखान्नवाभिषेकं झटिति पतन्तमवन्तिवर्मदेवः ॥७१९॥

संप्राप्तावुपदेष्टुमिन्दुतपनावुक्तं[1] स्ववंशोद्भवैर्भूपालैर्नवराज्यतन्त्रमिव स श्रोत्रद्वये धारयन् ।
राजा मण्डनकुण्डलद्वयमिषात्स्वच्छातपत्रच्छलाल्लक्ष्मीविष्टरपुण्डरीकघटितच्छायोदयो दिद्युते ॥७२०॥ 720

इति[1] श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां चतुर्थस्तरङ्गः ॥

समाशतद्वये षष्ट्युते मासेषु षट्सु च । निर्दशाहेषु कार्कोटवंशे सप्तदशाभवन् ॥

---

७०९. 1) A$_4$ gloss सुखवर्मा. ७१०. 1) Thus corr. by A$_1$ from °युजे मासस°; A$_2$ gloss आश्वयुजे मासि चश्वर्यर्थं ये निर्गच्छन्ति ते हेयारया इति प्रसिद्धास्तत्सदृशानां.—2) Thus A$_3$; A$_1$ कठिना. ७१६. 1) A$_4$ gloss अवन्तिवर्माणम्. ७१९. 1) Thus corr. by A$_3$ from A$_1$ तदुरु. ७२०. 1) Thus A$_1$; A$_3$ °तपनौ युक्तं. *Colophon.* 1) A$_3$ inserts before this the following note: रा १७ मं ७१६ आदितः राजानः ७० मं १७८५.

## ॥ पञ्चमस्तरङ्गः ॥

काव्येतेषु[1] रुचिः कचेषु फणिनां पुंस्कोकिलस्येव ते गोभिः कण्ठतटस्य हृष्यति पुरो दृक्पश्य चक्षुःश्रुतेः ।
संधानेभिनवे मिथो भगवतोर्जिह्वापृथक्स्पन्दिनी[2] भिन्नार्थां सदृशाक्षरामपि वदन्त्येवं गिरं पातु वः ॥१॥
अवन्तिवर्मा साम्राज्यं प्राप्य पाटितकण्टकः । चकार चरितैश्चित्रं सतां कण्टकितं वपुः ॥२॥
आसतां क्षितिपामात्यौ तौ द्वावपि परस्परम् । आज्ञादाने[1] परिवृढौ भृत्यावाज्ञापरिग्रहे ॥३॥
कृतज्ञः क्षान्तिमान्क्ष्माभृन्मन्त्री भक्तः स्मयोज्झितः । अभङ्गुरोयं संयोगः सुकृतैर्जातु दृश्यते ॥४॥
विवेक्ता प्राप्तराज्यः स क्ष्माभृद्वीक्ष्य नृपश्रियम् । अविलुप्तस्मृतिर्धीमानन्तरेवमचिन्तयत् ॥५॥
गोभुजां वल्लभा लक्ष्मीर्मातङ्गोत्सङ्गलालिता । सेयं स्पृहां समुत्पाद्य दूषयत्युन्नतात्मनः ॥६॥
स नास्ति कश्चित्प्रथमं यः प्रदर्श्यानुकूलताम्[1] । संताप्यते न चरमं नीचप्रीत्येव नानया ॥७॥
चपलाभिः प्रवृद्धेयं स्ववैरश्याभिः सहाम्बुधौ । तदेकचारिणीवृत्तमनया शिक्षितं कुतः ॥८॥
निःस्नेहा नान्वगात्कांश्चित्सुचिरं संस्तुताप्यसौ । परलोकाध्वगान्भूपानपाथेयानबान्धवान् ॥९॥
हेमभोजन[1]भाण्डादि भाण्डागारे यदर्जितम् । कस्मादस्य न नाथास्ते लोकान्तरगता नृपाः ॥१०॥
अन्योच्छिष्टेषु पात्रेषु भुक्त्वैतेषु महीभुजः । कस्मान्न लज्जामवहञ्शौचचिन्तां न वा दधुः ॥११॥
स्थूलेषु राजतस्थालकपालेष्ववलोकितैः । प्रेतभूपालनामाङ्कैः शङ्का कस्य न जायते ॥१२॥
कृष्टाः प्रविष्टे ये कालपाशे कण्ठान्मुमूर्षताम् । अशस्ता अपवित्राश्च ते हाराः कस्य हारिणः ॥१३॥
संदूष्य बाष्पैर्दुःखोष्णैस्त्यक्तान्पूर्वैर्मुमूर्षुभिः । स्पृशन्नेतानलंकारान्न कः संकोचमाप्नुयात् ॥१४॥
या वारिराशिसलिलान्तरसंनिधानसंसेवयापि सततं मलिनैव लक्ष्मीः ।
पात्रेषु रोर[1]शिखिभागिषु सा विमुक्ता वैमल्यमेति हरिणीव हुताशशौचा[2] ॥१५॥

---

१. [1]) $A_3$ gloss: काव्येतेषु इति। एतेषु प्रत्यक्षविषयेषु फणिनां सर्पाणां कचेषु बन्धनेषु ते कापि रुचिः कश्चिदप्यभिलाषोस्ति। जटाजूटकक्ष्यादिबन्धनार्थमत्यन्तं सर्पानभिलषसीति देवीवचनम्। बन्धनस्थानानां कण्ठप्रकोष्ठकक्ष्यादीनां बहुत्वाद्बन्धनानामपि बहुवचनम्। एतेषु कचेषु केशेषु फणिनां सम्बन्धिनी अर्थान्मोहकारिणी कापि रुचिरनिर्वचनीया कान्तिस्तवास्ति तव केशानामञ्जगराणामिव दर्शनेनातीव मोहो जायते इति महादेववचनम्। पुंस्कोकिलस्येव तव कण्ठतटस्य गोभिर्वचनैः चक्षुःश्रुतेः सर्पस्य दृक् नेत्रं हृष्यति मोदते। कोकिलरुतमिव तव कण्ठध्वनिं श्रुत्वा सर्पस्य दृग्हर्षः सर्पाणां चक्षुरेव श्रवणस्थानीयमित्यतो दृक् हृष्यतीत्युक्तम्। गीतप्रियो हि सर्पः। यदुक्तम्। शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गीतरसं फणी। साहित्यामृतसारस्य शङ्करो वेत्ति वा न वेति॥ इति महादेववचनम्॥ देवीवचनं तु। तव कण्ठतटस्य कोकिलस्येव करैः पुरोग्रे नेत्रं हृष्यति। गोभिः किरणैः। कोकिलतुल्यवर्णकण्ठतटनैल्यदर्शनेन सर्पस्य दृग्हर्षः दृग्विकासः कोकिलरुतं श्रुत्वा सर्पाणां नेत्रविकासो जायते शीतसमये तु संकोच इति लौकिकाः॥.—[2]) Thus $A_3$; $A_1$ °स्पर्धिनी. ३. [1]) Thus corr. by $A_3$ from $A_1$ °धाने. ७. [1]) Thus corr. by later hand from $A_1$ °कूल्यताम्. १०. [1]) न supplied by $A_3$. १५. [1]) $A_3$ gloss रोरः दारिद्र्य.—[2]) $A_1$ °शौचे altered by later hand to °शौचा; $A_3$ glosses: अग्निशौचानां मृगाणां अग्निना लोमशुद्धिः अग्निशौचवसनवत्, and हुताशेनाग्निना शौचं शुद्धिर्यस्याः सा हुताशशौचा। हरिणी मृगी इव यथा सा अग्नौ प्रक्षिप्तदेहा सती शुद्धलोमा भवति तद्वत्.

इति निर्धार्य नृपतिर्नीत्वा स्वर्णादि[1] चूर्णताम् । निजैरञ्जलिभिः प्रादाद्द्विजन्मभ्यः करम्भकम्[2] ॥१६॥
साधु भूपेति वक्तव्ये हर्षान्निर्गौरवं द्विजः । साध्ववन्तिन्निति वदन्नेकः प्रापाञ्जलीन्बहून् ॥१७॥
लक्ष्मीं कृत्वार्थिसात्कृत्स्नां कृतिनावन्तिवर्मणा । विभूतिश्चामरच्छत्रमात्रशेषा व्यधीयत ॥१८॥
अनन्तसंपत्संपन्नभूरिगोत्रजविप्लवे । राजश्रीर्दुर्जरा तस्य नवत्वे भूभुजोभवत् ॥१९॥
विप्लुतान्समरे भ्रातॄन्भ्रातृव्यांश्च विजित्य सः । चकार भूरिभिर्वीरै राज्यं विगतकण्टकम् ॥२०॥
राज्यं निष्पाद्य निर्विघ्नमथ वात्सल्यपेशलः । विभज्य बन्धुभृत्येषु बुभुजे पार्थिवः श्रियम् ॥२१॥
भ्राता द्वैमातुरस्तेन शूरवर्माभिधः सुधीः । ज्ञातिप्रियेण वितते यौवराज्येभ्यषिच्यत ॥२२॥
खाधूयां[1]हस्तिकर्णे[2]ख्यातावग्रहारौ प्रदाय[3] यः । शूरवर्मस्वामिनं च गोकुलं च विनिर्ममे ॥२३॥
संपूर्णः पूर्णमहिमा[1]मर्त्य[2]माहात्म्यमन्दिरम् । पञ्चहस्ता[3]मदश्चक्रे मठं सुकृतकर्मठः ॥२४॥
भ्राता व्यधत्त नृपतेरपरः समराभिधः । केशवं चतुरात्मानं समरस्वामिनं[1] तथा ॥२५॥
द्वौ शूरावरजौ धीरविन्नपाख्यौ निजाख्यया । व्यधत्तां विबुधावासौ द्वावन्यौ गणनापती ॥२६॥
भूत्वा वातू[1]लतांच्छन्नप्रभावानुभवौ भुवि । गतौ[2] सविग्रहावेव हरावासाग्र्यसभ्यताम् ॥२७॥ युग्मम् ॥
राजदौवारिकः श्रीमाञ्शूरस्यासीन्महोदयः । महोदयस्वामिनो[1] यः प्रतिष्ठां समपादयत् ॥२८॥
रामटाख्यमुपाध्यायं ख्यातव्याकरणश्रमम् । व्याख्यातृपदकं चक्रे स तस्मिन्सुरमन्दिरे ॥२९॥
अमात्येन महीभर्तुः श्रीप्रभाकरवर्मणा । कृतं प्रभाकरस्वामिनाम्नो विष्णोर्निकेतनम् ॥३०॥
आयातेन शुकैः सार्धं[1] दत्ता गृहशुकेन यः । मुक्ताः प्राप्य प्रतिष्ठायां चक्रे ख्यातां शुकावलीम्[2] ॥३१॥
विच्छिन्नप्रसरा विद्या भूयः शूरेण मन्त्रिणा । सत्कृत्य विदुषः सभ्यान्देशेस्मिन्नवतारिता ॥३२॥
युग्यैः क्षितिभुजां योग्यैरुह्यमाना महर्द्धयः । बुधाः प्रवृद्धसत्कारा विविशुर्भूपतेः सभाम् ॥३३॥
मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः[1] । प्रथां रत्नाकरश्[2]चागात्साम्राज्येवन्तिवर्मणः ॥३४॥
आस्थाने कृतमन्दारो वन्दी शूरस्य मन्त्रिणः । संकल्पस्मृतिमाधातुमिमामार्यां सदापठत् ॥३५॥
अयमवसर उपकृतये प्रकृतिचला यावदस्ति संपदियम् । विपदि सदा[1]भ्युदयिन्यां पुनरुपकर्तुं कुतोवसरः ॥३६॥
कृतः सुरेश्वरीक्षेत्रे बहुगेहविधायिना । शिवयोर्मिश्रयोस्तेन प्रासादः सोव्ययस्थितिः ॥३७॥
शूरेश्वरं[1] प्रतिष्ठाप्य स्ववेश्मेव समुन्नतम् । चक्रे शूरमठं धीमान्स भोगाय तपस्विनाम् ॥३८॥
स्वकृते पत्तनवरे तेन शूरपुराभिधे । क्रमवर्त[1]प्रदेशस्थो ढक्को[2]भूद्विनिवेशितः ॥३९॥
सुरेश्वरीप्राङ्गनतश्चक्रे भूतेश्वरं हरम् । मठं शूरमठान्तश्च शूरजो रत्नवर्धनः ॥४०॥
काव्यदेव्यभिधा शूरवधूः शुद्धान्वया व्यधात् । सदाशिवं सुरेश्वर्यां काव्यदेवीश्वराभिधम् ॥४१॥

१६. 1) $A_2$ gloss आदिशब्देन मौक्तिकादेः परिग्रहः.—2) $A_2$ glosses हम्बलं and करम्बं व्यामिश्रं खिचडू इति भाषया. २३. 1) $A_2$ gloss धुधखोहा.—2) $A_2$ gloss व्याघ्राश्रमे वागहामे.—3) $A_3$ विधाय. २४. 1) Thus $A_1$; $A_3$ सपूर्णपुण्यमहिमा.—2) Thus $A_1$; $A_3$ मन्त्वमा°.—3) $A_2$ gloss पाञ्जथ्. २५. 1) $A_2$ gloss शाल्यानग्रामे समरभोग्. २७. 1) तू written above the line by $A_3$; corresponding letter of $A_1$ smeared over. $A_3$ gloss इमौ वातुलावुन्मत्ताविति स्वस्य तद्भावमिव विधाय लोकविषये गोपितनिजप्रभावावित्यर्थः.—2) Thus corr. by $A_3$ from $A_1$ गुरौ. २८. 1) $A_2$ gloss मडवाश्रमे. ३१. 1) सार्धं supplied by $A_3$ in space left by $A_1$.—2) Thus corr. by later hand from $A_1$ ख्यातशुका°. ३४. 1) $A_2$ gloss आनन्दवर्धनः काव्यालङ्कारध्वनिग्रन्थकारः.—2) $A_2$ gloss रत्नाकरः हरविजयकारः. ३६. 1) Thus corr. by $A_3$ from $A_1$ समाभ्यु°. ३८. 1) $A_2$ gloss शूरपुरे. ३९. 1) $A_2$ gloss कामिलनकोटस्थः.—2) $A_2$ gloss द्रङ्गः.

निर्मत्सरोवन्तिवर्मा सोदरेभ्योनपायिनीम् । शूराय च सपुत्राय नृपतिप्रक्रियां ददौ ॥४२॥
छन्दानुवर्ती भूपालो दैवतस्येव मन्त्रिणः । आ बाल्याद्वैष्णवोप्यासीच्छैवतामुपदर्शयन् ॥४३॥
क्षेत्रे विश्वैकसाराख्ये[1] मृतानामपवर्गदे । भूरिभोगास्पदं राज्ञा[2] तेनावान्तिपुरं कृतम् ॥४४॥
अवन्तिस्वामिनं तत्र प्राग्राज्याधिगमात्कृती । विधाय प्राप्तसाम्राज्यश्चक्रेवन्तीश्वरं तदा ॥४५॥
त्रिपुरेश्वरभूतेशविजयेशेषु भूभृता । स्नानद्रोण्या रूप्यमय्या तेन पीठत्रयं कृतम् ॥४६॥
शूरस्यापि नरेन्द्रं तं ध्यायतः स्वाधिदैवतम् । तत्प्रियार्थमुपेक्ष्योभूद्धर्मः प्राणाः सुतोपि वा ॥४७॥
तथा चार्चयितुं जातु[1] यातो भूतेश्वरं नृपः । विभवानुगुणे स्वस्मिन्पूजोपकरणेर्पिते ॥४८॥
ददर्श पीठे देवस्य पूजकैरुपपादितम् । वन्यमुत्पलशाकाख्यं तिक्तशाकमवस्थितम् ॥४९॥
तत्रस्थाः क्ष्माभुजा पृष्टास्तन्निवेदनकारणम् । व्यजिज्ञपन्क्षितिन्यस्तजानुप्राञ्जलयस्ततः ॥५०॥
डामरो धन्वनामास्ति लहरे[1] विषये बली । शूरस्य मन्त्रिणो देव सेवको यः सुतोपमः ॥५१॥
हृतेषु तेन ग्रामेषु निरवग्रहशक्तिना । निवेद्यमेतद्देवास्मै भूतेशाय निवेद्यते ॥५२॥
अकाण्डशूलजनितां पार्थिवः कथयन्व्यथाम् । श्रुतमश्रुतवत्कृत्वा त्यक्तपूजोथ निर्ययौ ॥५३॥
पूजां संत्यज्य गमनं शूलं चाकस्मिकं प्रभोः । सहेतुकं विदञ्छूरो वृत्तान्तान्वेषकोभवत् ॥५४॥
ज्ञाततत्त्वस्ततस्तूर्णं भूतेशाभ्यर्णवर्तिनः । क्रुद्धः समातृचक्रस्य[1] भैरवस्याविशद्गृहम् ॥५५॥
निषिद्धजनबाहुल्याद्भूत्वा[1] विरलपार्श्वगः । प्राहिणोद्धन्वमानेतुं ततो दूतान्पुनः पुनः ॥५६॥
स क्षितिं पत्तिपृतनासंमर्देन प्रकम्पयन् । अप्रकम्पतनुः प्राप क्रूरः शूरान्तिकं शनैः[1] ॥५७॥
तस्य प्रविष्टमात्रस्य शस्त्रिणः शूरचोदिताः । मुण्डं सजीवितस्यैव चिच्छिदुर्भैरवामतः ॥५८॥
आसन्ने सरसि क्षिप्त्वा रुधिरोद्गारि तद्वपुः । क्ष्मापतेः क्षालितामर्षो धीरः शूरो विनिर्ययौ ॥५९॥
तस्य श्रुत्वा शिरश्छिन्नं स्वपुत्रस्येव मन्त्रिणा । क्षीण[1]मन्युः क्षितिपतिः सवैलक्ष्य इवाभवत् ॥६०॥
शूरोथ पृष्टकुशलो निर्व्यथोस्मीति भाषिणम् । उत्थाप्य तल्पात्तं देवं पूजाशेषमकारयत् ॥६१॥
इत्थं समस्तकृत्येषु भावज्ञः स महीपतेः । अनुक्त्वैव हितं तत्तत्प्राणांस्त्यक्त्वाप्यसाधयत् ॥६२॥
परस्परमनुत्पन्नमन्युकालुष्यदूषणौ । न दृष्टौ न श्रुतौ वान्यौ तादृशौ राजमन्त्रिणौ ॥६३॥
श्रीमेघवाहनस्येव साम्राज्येवन्तिवर्मणः । अशेषप्राणिनामासीदमारी दश वत्सरान् ॥६४॥
जलं जहद्भिः शिशिरं तटानेत्याकुतोभयैः । तत्कालं सेवितः पृष्ठे पाठीनैः शरदातपः ॥६५॥
अनुग्रहाय लोकानां भट्टश्रीकल्लटादयः । अवन्तिवर्मणः काले सिद्धा भुवमवातरन् ॥६६॥
चरित्रे बहुवक्तव्ये येषामेकस्य पावनः । अयं प्रासङ्गिकः कश्चिद्वृत्तान्तो वर्णयिष्यते ॥६७॥
देशः प्रबलतोयोयं महापद्मसरोजलैः । कुलिनीभिश्च शबलः स्वल्पोत्पत्तिः सदाभवत् ॥६८॥
ललितादित्यभूभर्तुरुद्योगेन बलीयसा । किंचिदाकृष्टसलिलः प्रापोत्पत्तिं मनाक्ततः ॥६९॥

---

४४. [1]) $A_2$ gloss विश्वैकसाराख्ये भारसो इति ग्रामे.—[2]) Thus corr. by later hand from $A_1$ राजा. ४८. [1]) Thus corr. by later hand from $A_1$ जातो. ५१. [1]) $A_3$ gloss लाड़ इति प्रसिद्धे राष्ट्रे. ५५. [1]) $A_2$ separates स from the following and gives the gloss शूरः to स. ५६. [1]) Thus $A_1$; $A_3$ °बाहुल्यो भूत्वा. ५७. [1]) Thus $A_3$; $A_1$ पुरः. ६०. [1]) Thus corr. by $A_2$ from $A_1$ क्षण°.

जयापीडे क्रमाद्याते स्वल्पवीर्येषु राजसु । सलिलोपप्लवैरासीत्पुनरेवावृता क्षितिः ॥७०॥
दीन्नाराणां दशशती पञ्चाशत्यधिका[1]भवत् । धान्यखारीक्रये[2] हेतुर्देशे दुर्भिक्षविक्षते ॥७१॥
अवन्तिवर्मणः पुण्यैर्जन्तूञ्जीवयितुं ततः । स्वयमन्नपतिः श्रीमान्सुय्यः क्षितिमवातरत् ॥७२॥
यस्याविज्ञातसंभूतेस्तुर्ये[1] कालेपि निश्चितम् । अयोनिजत्वं कृतिनश्चरितैर्भुवनाद्भुतैः ॥७३॥
पुरा रथ्यारजःपुञ्जं संमार्जन्ती पिधानवत् । सुय्या[1]भिधाना चण्डाली मृद्भाण्डं प्राप नूतनम् ॥७४॥
तस्मिन्पिधानमुद्धृत्य सापश्यन्मध्यशायिनम् । बालं कमलपत्राक्षं धयन्तं स्वकराङ्गुलीः ॥७५॥
मात्रा कयापि त्यक्तोसौ सुन्दरो मन्दभाग्यया । अथेति चिन्तयन्त्यासीत्सा स्नेहात्प्रस्नुतस्तनी ॥७६॥
अदूषयन्त्या[1] स्पर्शेन धात्र्याः शूद्रस्त्रियो गृहे । तया विहितवृत्तिः स शिशुर्वृद्धिमनीयत ॥७७॥
स सुय्यनामा मतिमान्प्रवृद्धः शिक्षिताक्षरः । कस्याप्यासीद्गृहपतेरर्भकाध्यापको गृहे ॥७८॥
व्रतस्नानादिनियमैस्तं सतां हृदयंगमम् । गोष्ठीषु विशदप्रज्ञं विदग्धाः पर्यवारयन् ॥७९॥
तेषां कथाव्यवस्थासु निन्दतां जलविप्लवम् । धीरस्ति मे निरर्थस्तु किं कुर्यामिति सोब्रवीत् ॥८०॥
उन्मत्तस्येव वदतस्तस्य तन्नियमाद्वचः । निशम्य भूभृच्चारेभ्यश्चिरमासीत्सविस्मयः ॥८१॥
ततस्तमानीय नृपः किं ब्रूष इति पृष्टवान् । धीरस्तीत्यादि राजाग्रेप्यवोचत्सोप्यसंभ्रमः[1] ॥८२॥
वातूलोसाविति निजैरुक्तोप्यथ महीपतिः । धियं दिदृक्षुर्विदधे तस्यायत्तं निजं धनम् ॥८३॥
कोशाद्दीन्नारभाण्डानि बहून्यादाय हेलया । ययौ मडवराज्यं स नावमारुह्य रंहसा ॥८४॥
ग्रामे तत्र प्रवृद्धाम्बुनिमग्ने नन्दकाभिधे । एकं निक्षिप्य दीन्नारभाण्डं व्यावर्तत द्रुतम् ॥८५॥
सत्यं वातूल एवासौ सभ्येष्वपि वदत्स्वपि । वार्तां निशम्य तां राजा तन्निष्ठान्वेषकोभवत् ॥८६॥
क्रमराज्यं स संप्राप्य देशे यक्षदराभिधे[1] । अञ्जलिभ्यां निचिक्षेप दीन्नारान्सलिलान्तरे ॥८७॥
यत्र तीरद्वयालम्बिशैलनिर्लुठिताः शिलाः । चक्रुर्वितस्तां निष्पीड्य पयः प्रतिपथोन्मुखम् ॥८८॥
दुर्भिक्षोपहता ग्राम्या दीन्नारान्वेषिणस्तदा । शिलाः प्रवाहादुद्धृत्य वितस्तां समशोधयन् ॥८९॥
एवं दिनानि द्वित्राणि पयो युक्त्या विकृष्य तत् । वितस्तामेकतः स्थानात्कर्मकृद्भिरबन्धयत् ॥९०॥
पाषाणसेतुबन्धेन सुय्येनाद्भुतकर्मणा । सप्ताहमभवद्रुद्धा निखिला नीलजा सरित् ॥९१॥
अधः प्रवाहं संशोध्य लुठद्दृषत्प्रतिक्रियाम् । कृत्वा बद्धैः शिलाबन्धैः सेतुबन्धमपाटयत् ॥९२॥
चिरकालनिरोधेन सोत्कण्ठेवाम्बुधिं प्रति । ततः प्रावर्तत जवाद्गन्तुं सागरगामिनी ॥९३॥
जम्बालाङ्का स्फुरन्मीना भूर्बभौ सलिलोज्झिता । व्यक्तकार्ष्ण्या सनक्षत्रा निर्मेघेव नभःस्थली ॥९४॥
यत्र यत्र विवेदौघवेधं सलिलविप्लवे । तत्र तत्र वितस्तायाः प्रवाहान्नूतनान्व्यधात् ॥९५॥
मूलस्रोतोग्र्यनिष्ठ्यूतभूरिस्रोता बभौ सरित् । एकभोगाश्रयानेकफणेवासितपन्नगी ॥९६॥
वामेन सिन्धुस्त्रिग्राम्या वितस्ता दक्षिणेन तु । यान्त्यौ ये समगं[1]साते प्राग्वैन्यस्वामिनोन्तिके ॥९७॥
वर्तेतेद्य महानद्योः कल्पापायेप्यनत्ययः । संगमो नगरोपान्ते स सुय्योपक्रमस्तयोः ॥९८॥

---

७१. [1]) Thus $A_1$; $A_3$ पञ्चाशदधि°.—[2]) Thus corr. by $A_3$ from $A_1$ °खारेः. ७३. [1]) $A_2$ gloss चतुर्थे युगे. ७४. [1]) Thus $A_1$; $A_3$ पूयाभि°. ७७. [1]) Thus corr. by later hand from $A_1$ °न्त्याः. ८२. [1]) Thus corr. by $A_3$ from $A_1$ °सम्भ्रमः. ८७. [1]) $A_2$ gloss द्वारगलाख्ये. ९७. [1]) समगं supplied by $A_3$ in space left by $A_1$.

अद्याप्यां[1]स्तां फलपुरपरिहासपुरस्थितौ । विष्णुस्वामी संगमस्य वैन्यस्वामी च तीरयोः ॥९९॥
सुन्दरीभवनाभ्यर्णप्राप्तस्यायतनस्य तु । योगशायी हृषीकेशः सुय्यस्याभ्यर्चितस्तटे ॥१००॥
दृश्यन्तेऽद्यापि सरितां पूर्वस्रोतस्तटोद्भवाः[1] । निषादाकृष्टनौरज्जुरेखाङ्का जीर्णपादपाः ॥१०१॥
स्फुरत्तरङ्गजिह्वाः स नदीर्मार्गेमजिम्हत् । तास्ताः स्वेच्छानुसारेण मान्त्रिकः पन्नगीरिव ॥१०२॥
बद्ध्वा शैलमयान्सेतून्वितस्तां सप्तयोजनीम् । महापद्मसरोवारि स चकार नियन्त्रितम् ॥१०३॥
महापद्मसरःकुण्डाद्वितस्ता येन योजिता । जवान्निर्याति[1] कोदण्डयन्त्रादिषुरिवाध्वना ॥१०४॥
उद्धृत्य सलिलादुर्वीमेवमादिवराहवत् । अनेकजनसंकीर्णान्ग्रामान्नानाविधान्व्यधात् ॥१०५॥
पालीभिरम्भः संरोध्य यान्कुण्डसदृशान्व्यधात् । कुण्डलानीति सर्वान्नसमृद्धान्ब्रुवते जनाः ॥१०६॥
उत्खातकीलनिवहान्नद्योऽद्यापि शरत्कृशाः । व्यञ्जन्ति जलगन्धेभबन्धनस्तम्भसंनिभान् ॥१०७॥
दीन्नारभाण्डानौ[1]ज्झीत्स यदगाधजलान्तरे । नन्दके निर्गतजले स्थलान्तात्तदलभ्यत ॥१०८॥
अदेवमातृकान्ग्रामान्परीक्ष्य विविधाः क्षितीः । संविभेजे विभक्तेन नादेयेन स वारिणा ॥१०९॥
असिञ्चच्च जलैर्ग्रामान्ग्रामान्मृदमुपाहृताम् । या यावता क्षणेनागाच्छोषं तां तावता हृदि ॥११०॥
कालेन मत्वा सेकार्हां प्रतिग्रामं जलस्रुतेः । परिमाणं विभागं च परिकल्प्य निरत्ययम् ॥१११॥
चकार चानुलाद्याभिः सिन्धुभिः सर्वतो दिशः । सत्फलोदारकेदारसंपत्संपन्नविभ्रमाः ॥११२॥ तिलकम् ॥
न कश्यपेनोपकृतं न यत्संकर्षणेन वा । हेलया मण्डलेमुष्मिंस्तत्सुय्येन सुकर्मणा ॥११३॥
भूमेर्जलादुद्धरणं द्विजक्षेत्रे तथार्पणम् । सेतुबन्धोऽश्मभिस्तोये यमनं कालियस्य च ॥११४॥
चतुर्षु सिद्धमि[1]ति यद्विष्णोः सत्कर्मजन्मसु । सुय्यस्य तत्पुण्यराशेरेकस्मिन्नेव जन्मनि ॥११५॥ युग्मम्[2] ॥
यस्मिन्महादुर्भिक्षेषु दीन्नाराणां शतद्वयी । धान्यखारे[1]ः प्राप्तिहेतुरा सर्गादभवत्पुरा ॥११६॥
ततः प्रभृति तत्रैव चित्रं कश्मीरमण्डले । षट्त्रिंशता[1] धान्यखारेर्दीन्नारैरुदितः क्रयः ॥११७॥
निर्गतायां[1] महापद्मसलिलात्स्वर्गसंनिभम् । वितस्तायास्तटे चक्रे स्वनामाङ्कं स पत्तनम् ॥११८॥
स्वकृता स्थापिता तेन सरसि व्याप्तदिक्तटे । आसंसारं स्थितामारि[1]मर्यादा झषपक्षिणाम् ॥११९॥
सुय्या[1]कुण्डलनामानं ग्रामं कृत्वा द्विजातिसात् । सुय्यामु[2]द्दिश्य तन्नाम्ना सुय्या[3]सेतुं स निर्ममे ॥१२०॥
तेनोद्धृतासु सलिलाद्भूषु ग्रामाः सहस्रशः । अवन्तिवर्मप्रमुखैर्जयस्थल[1]मुखाः कृताः ॥१२१॥
ईदृशैर्धर्म्यवृत्तान्तैः प्रवर्तितकृतोदयः । अवन्तिदेवः पातिस्म मान्धातेव वसुंधराम् ॥१२२॥
प्राणप्रयाणसोद्योगरोगग्रस्तस्ततो ययौ । क्षेत्रं स त्रिपुरेशाद्रिनिष्ठज्येष्ठेश्वराश्रितम् ॥१२३॥
आत्मनस्तत्र निश्चित्य विपत्तिं चिरगोपिताम् । प्राणान्ते प्राञ्जलिः शूरो वैष्णवत्वमदर्शयत् ॥१२४॥
तेनान्ते भगवद्गीताः शृण्वता भावितात्मना । ध्यायता वैष्णवं धाम निरमुच्यत जीवितम् ॥१२५॥

---

९९. [1]) Emended; $A_1$ अध्यद्या°, altered by later hand to अधप्या°. १०१. [1]) Thus G and Edd.; A °द्रवः. १०४. [1]) Thus G and Edd.; A °र्यान्ति. १०८. [1]) Emended; A °भाण्डान्नौ°. ११२. [1]) Supplied by $A_2$. ११५. [1]) Thus corr. by $A_2$ from $A_1$ यत्सिद्ध°.—[2]) युग्मम् supplied by $A_2$. ११६. [1]) Thus corr. by $A_1$ from खारी. ११७. [1]) $A_2$ gloss द्वादशदीनाराणां वाहगन्ये इति कश्मीरदेशभाषया परिगणने षट्त्रिंशद्दीनाराः त्रिवाहगन्य इति ज्ञेयाः. ११८. [1]) Thus corr. by $A_3$ from $A_1$ निर्गता वा.—[2]) $A_2$ gloss सुय्यपुराख्यम्. ११९. [1]) Thus corr. by $A_3$ from $A_1$ स्थिरासार°. १२०. [1]) Thus corr. by later hand from $A_1$ सुय्यकु°.—[2]) Emended; A सय्या°.—[3]) Thus corr. by later hand from $A_1$ सय्या°. १२१. [1]) $A_2$ gloss जियन्.

आषाढशुक्लपक्षस्य तृतीयस्यां क्षमापतिः[1] । वर्षे एकोनषष्टे स क्ष्मावृषास्तमुपाययौ ॥१२६॥

तस्मिन्प्रशान्ते प्रत्येकं विभवोत्सिक्तचेतसाम् । तुल्यमुत्पलवंश्यानां राज्येच्छा भूयसामभूत् ॥१२७॥

ततश्चक्रे प्रतीहारः प्रयत्नाद्रत्नवर्धनः । नृपं शंकरवर्माणमवन्तिनृपतेः सुतम् ॥१२८॥

कर्णपो विन्नपामात्यस्तनूजं[1] शूरवर्मणः[2] । तद्वेषात्सुखवर्माख्यं यौवराज्येऽप्ययोजयत् ॥१२९॥

अतस्तयोरभूद्वैरं क्षितीशयुवराजयोः । यस्मिन्क्षणे क्षणे राज्यमासीद्दोलामिवाश्रयत् ॥१३०॥

शिवशक्त्यादयो वीराः स्वामिकार्योज्झितासवः । यत्राभूवन्स्वसत्त्वस्य परीक्षाक्षणलाभिनः ॥१३१॥

कुर्वतां स्वामिशत्रूणां दानमानप्रतिश्रवम् । सत्त्वैकाभ्यासाच्च ते यस्मादानुकूल्यमशिश्रयन् ॥१३२॥

पिण्डस्पृहां परित्यज्याहंकृताः शिक्षिताः क्वचित् । तावन्न वीततमसः श्ववृत्तिमनुजीविनः ॥१३३॥

कथंचिदथ निर्जित्य युवराजं[1] महौजसम् । प्राज्यः स्वविजयोंकारश्चक्रे शंकरवर्मणा ॥१३४॥

सम्राट्समरवर्माद्यैर्वितीर्णसमरोत्सकृत् । कीर्तिं श्रिया प्रणयिनीं लब्धयाधिविवेद सः ॥१३५॥

अथ निर्जित्य दायादांल्लब्ध्वा लक्ष्मीं क्षितीश्वरः । जिष्णुर्दिग्विजयं कर्तुं श्रीमानासीन्महोद्यमः ॥१३६॥

तस्य कालबलाद्देशे प्रक्षीणजनसंपदि । लक्षाणि नव पत्तीनां द्वारान्निष्क्रामतोऽभवन् ॥१३७॥

स्वपुरस्योपकण्ठेऽपि योऽभूत्कुण्ठितशासनः । स एव रत्नोत्तंसेषु राज्ञामाज्ञां न्यवेशयत् ॥१३८॥

गच्छन्नाम्नायविच्छेदसंप्रदायः ककुब्जये । स्वप्रज्ञया समुन्नीतो राज्ञा शंकरवर्मणा ॥१३९॥

तत्सेना नरनाथानां पृतनाभिः पदे पदे । कुलापगेव कुल्याभिर्विशन्तीभिरवर्ध्यत ॥१४०॥

दार्वाभिसार[1]राजेन[2] त्रस्यता[3] समुपाश्रिताः । अद्रिद्रोण्यो न वाहिन्यस्तत्सेनानादमादधुः[4] ॥१४१॥

जनोल्वणैर्हरिगणैर्गृह्णन्हरिगणं क्षणात् । अनासादितदुर्गं स चक्रे दुर्गान्तरातिथिम् ॥१४२॥

लक्षाणि नव पत्तीनां वारणानां शतत्रयी । लक्षं च वाजिनामासीद्यस्य सेनापुरःसरम् ॥१४३॥

स गूर्जरं[1]जयव्यग्रः स्वपराभवशङ्किनम् । त्रैगर्तं[2] पृथिवीचन्द्रं निन्ये तमसि हास्यताम् ॥१४४॥

पुत्रं भुवनचन्द्राख्यं नीविं[1] प्रागेव दत्तवान् । स यभूत्प्रणतिं कर्तुं तस्याभ्यर्णमुपागतः ॥१४५॥

अथ तत्कटकं भ्राम्यद्भूरिमण्डलनायकम् । वीक्ष्य संमुखमायान्तं महार्णवमिवोल्बणम् ॥१४६॥

समागमक्षणे यस्माच्छङ्कमानः स्वबन्धनम् । पलाय्य प्रययौ दूरं निर्वाणौजोविजृम्भितः ॥१४७॥ तिलकम्॥

यमप्रतिमसौन्दर्यमद्याप्याहुः पुराविदः । तमेवाद्राक्षुरुल्लसता नृपाः कालमिवोल्बणम् ॥१४८॥

उच्चस्थानाल्लस्थानस्य संख्ये गूर्जरभूभुजः । बद्धमूलां क्षणाल्लक्ष्मीं शुचं दीर्घामरोपयत् ॥१४९॥

तस्मै दत्त्वा टक्कदेशं[1] विनयादङ्गुलीमिव । स्वशरीरमिवापासीन्मण्डलं गूर्जराधिपः ॥१५०॥

हृतं भोजाधिराजेन स साम्राज्यमदापयत् । प्रतीहारतया भृत्यीभूते थक्कियकान्वये ॥१५१॥

---

१२६. [1]) Thus corr. by $A_3$ from $A_1$ °पतेः. १२९. [1]) Thus $A_3$; $A_1$ °पापत्य°.—[2]) $A_4$ gloss अवन्तिवर्मभ्रातुः. १३४. [1]) $A_4$ gloss सुखवर्माणम्. १३१. [1]) Thus $A_1$; altered by later hand to °विच्छेदं. १४१. [1]) $A_2$ gloss दर्वाभिसारः दानगलो इति भाषया.—[2]) $A_4$ gloss नरवाहननाम्ना.—[3]) $A_3$ भ्राम्यता.—[4]) $A_4$ gloss दार्वाभिसारनृपस्य सेनाः. १४४. [1]) $A_2$ gloss गूर्जरेति अत्र गूर्जरः लघुगोज्यराद इति प्रसिद्धो देशः.—[2]) $A_2$ gloss त्रिगर्तो नगरकोट्टः तदधीशः. १४५. [1]) $A_1$ writes in margin the gloss: नीविः। नेय इति देशभाषया प्र, which $A_2$ continues with सिद्धः यः स्वप्रतिनिधिः न्यूनबलेन माण्डलिकेनाधिकबलस्य राज्ञः प्रतीत्यर्थं समर्प्यते ॥. १४७ [1]) नि supplied by $A_3$ in space left by $A_1$. १५०. [1]) $A_4$ gloss तक्कदेशः अद्रिनदीतटे शकरशो नाम भुट्टदेशाद्दूरं वर्तमानो योजनविंशतिकेन.

दरत्तुरुष्काधिपयोर्यः केसरिवराहयोः । हिमवद्विन्ध्ययोरासीदार्यावर्त इवान्तरे ॥१५२॥

[1]उदभाण्डपुरे तस्थुर्यदीये निर्भया नृपाः । पक्षच्छेदव्यथात्रस्ता महार्णव इवाद्रयः ॥१५३॥

नक्षत्रेष्विव भूपेषु नभसीवोत्तरापथे । यस्यैव विपुला ख्यातिर्[1]मार्ताण्डस्येव मण्डलम् ॥१५४॥

स श्रीमांल्लल्लियः[1] शाहिरलखानाश्रयः क्रुधा । निराकरिष्णोः[2] साम्राज्यात्तस्य सेवां न लब्धवान् ॥१५५॥

एवं दिग्विजयं कृत्वा प्राप्तः स[1] निजमण्डलम् । प्रदेशे पञ्चसत्राख्ये स्वनाम्ना[2] विदधे पुरम् ॥१५६॥

तस्य[1] श्रीस्वामिराजस्य तनयोदक्पथप्रभोः[2] । पूर्णिमेव क्षपाबन्धोः सुगन्धाख्याभवत्प्रिया ॥१५७॥

तया समं पुरवरे सुरराजोपमो नृपः । तस्मिञ्शंकरगौरीश[1]सुगन्धेशौ विनिर्ममे ॥१५८॥

द्विजस्तयोर्नायकाख्यो गौरीशङ्करसद्मनोः । चातुर्विद्यः कृतस्तेन वाग्देवीकुलमन्दिरम् ॥१५९॥

परकाव्येन कवयः परद्रव्येण चेश्वराः । निर्लोठितेन स्वकृतिं पुष्णन्त्यद्यतने क्षणे ॥१६०॥

स्वल्पसत्त्वो नरपतिः स्वपुरख्यापनाय सः । सारापहारमकरोत्परिहासपुरस्य यत् ॥१६१॥

ख्यातिहेतुः पट्टवानं पशूनां क्रयविक्रयौ । इत्यादि यत्पत्तनेऽस्ति तत्तस्मिन्हि पुरेऽभवत् ॥१६२॥

राज्यप्रदेन नृपते रत्नवर्धनमन्त्रिणा । श्रीरत्नवर्धनेशाख्यो व्यधीयत सदाशिवः ॥१६३॥

चित्रं नृपद्विपाः पूतमूर्तयः कीर्तिनिर्झरैः । भवन्ति व्यसनासक्तिपांसुस्नानमलीमसाः ॥१६४॥

अथ क्रमेण नृपतिर्लोभाभ्यासेन भूयसा । आधीयमान[1]चित्तोऽभूत्प्रजापीडनपण्डितः ॥१६५॥

आरब्धैर्व्यसनैर्भूम्ना क्षीणकोशः क्षणे क्षणे । देवादीनां स सर्वस्वं जहारायासयुक्तिभिः ॥१६६॥

कर्मस्थाने पुरगृहग्रामादिधनहारिणा । तेनाट्टपतिभागाख्यगृहकृत्याभिधे कृते ॥१६७॥

धूपचन्दनतैला[1]दिविक्रयोत्थं समाददे । द्रविणं देववेश्मभ्यः क्रयमूल्य[2]कलाच्छलात्[3] ॥१६८॥

प्रत्यवेक्षां मुखे दत्त्वा विभक्तैरधिकारिभिः । चतुःषष्टिं सुरगृहान्मुमोषे[1]तरदञ्जसा ॥१६९॥

ग्रामान्देवगृहग्राह्यान्राजा प्रतिकरेण सः । स्वयं स्वीकृत्य चोत्पत्तिं क्ष्मां कार्षक इव व्यधात् ॥१७०॥

तुलां कृत्वा त्रिभागोनां वर्षदेयां स पर्षदे । भुक्ति[1]कम्बलमूल्यादि दम्भा[2]दभ्यधिकं ददौ ॥१७१॥

दिगन्तरस्थो ग्रामीणानूढभारानानागतान् । तद्देशार्घैर्भारमूल्यं वर्षमेकमदण्डयत् ॥१७२॥

वर्षेपरस्मिन्निखिलान्भारमूल्यं निरागसः । तथैव संख्यया ग्राम्यान्प्रतिग्राममदण्डयत् ॥१७३॥

इत्येषा रूढभारोढिः प्रथमं तेन पातिता । दारिद्र्यदूती ग्रामाणां या त्रयोदशधा स्थिता ॥१७४॥

स्कन्दकग्रामकायस्थमासवृत्त्यादिसंग्रहैः । अन्यैश्च विविधायासैर्व्यधाद्ग्रामान्स निर्धनान् ॥१७५॥

तुलापहारोपचयग्रामदण्डादिसंग्रहैः । इत्येष तेन संवाहो गृहकृत्ये प्रवर्तितः ॥१७६॥

व्यधत्त पञ्च दिविरान्[1]स तस्मिन्भिन्नकर्मणि । षष्ठं तथा गञ्जवरं शाकचं लवटाभिधम् ॥१७७॥

---

१५३. [1]) This verse is added in margin by $A_3$; found in G R. १५४. [1]) $A_1$ विपुलख्याति मा°; $A_3$ has altered this to विपुला ख्यातिर्मा°, but has subsequently restored the reading of $A_1$. G follows $A_1$, R reads as $A_3$. १५५. [1]) Thus corr. by $A_3$; $A_1$ °ल्लियः.—[2]) Thus corr. by $A_1$ from °रिष्णुः; R G °रिष्णोः. १५६. [1]) $A_3$ gloss शङ्करवर्मा.—[2]) $A_2$ gloss शङ्करपोर्. १५७. [1]) $A_3$ gloss शङ्करवर्मणः.—[2]). $A_3$ gloss कन्या. १५८. [1]) Emended; A गौरेश°. १६५. [1]) Thus corr. by $A_3$ from $A_1$ अधेयमान°. १६८. [1]) Thus $A_1$; $A_3$ °नचेला°.—[2]) Thus corr. by later hand from $A_1$ °मूल्ये.—[3]) $A_2$ gloss कलालाभः. १६९. [1]) Thus $A_3$; $A_1$ सुमोचेत°. १७१. [1]) Thus $A_1$; $A_3$ भुक्त°.—[2]) दम्भा supplied by $A_3$ in space left by $A_1$. १७७. [1]) Thus $A_1$. Cf. vi. 130; vii. 111, 119; misread शिविरान्स in R G Edd.

आत्मनो निरयं मूढः सोङ्गीकृत्येत्युपक्रियाम् । भाविनामकरोद्राज्ञां पापी यत्रा[1] नियोगिनाम्[2] ॥१७८॥

निमित्तं मण्डलेमुष्मिन्सविद्यानामनादरे । राज्ञां प्रतापहानौ च नान्यः शंकरवर्मणः ॥१७९॥

मुख्येन गुणिनां राज्ञा धनहान्या प्रथापहाः । मूर्खेण येन कायस्था दास्याः पुत्राः प्रवर्तिताः ॥१८०॥

तथा कायस्थभोज्या भूर्जाता तत्प्रत्यवेक्षया । यथा संजायतेवर्णो[1] हरणादिव भूभुजाम् ॥१८१॥

तस्मिन्घोरे प्रजादुःखे कृपार्द्रः पृथिवीपतिम् । पुत्रो गोपालवर्माख्यः कदाचिदिदमब्रवीत् ॥१८२॥

प्रदातुस्तात भवतः पूर्वं न्यासीकृतः स्थितः । वरो यः सत्यसंधस्य सोधुना प्रार्थ्यते मया ॥१८३॥

कायस्थप्रेरणादेतैर्दैवेनाद्य प्रवर्तितैः । आयासैः श्वासशेषैव प्राणवृत्तिः शरीरिणाम् ॥१८४॥

न च नामास्ति तातस्य काचिल्लोकद्वयोचिता । मनागपि हितप्राप्तिरेतया जनपीडया ॥१८५॥

अदृष्टविषयां वार्तां गहनां विवृणोति कः । दृष्टेप्यनिष्टादन्यन्न कर्मणानेन दृश्यते ॥१८६॥

एकतो व्याधिदुर्भिक्षप्रमुखा विपदोखिलाः । प्रजानामेकतस्त्वेका लुब्धता वसुधापतेः ॥१८७॥

भूभुजोभ्यस्तलोभस्य श्रीः कैश्चिन्नाभिनन्द्यते । अकालकुसुमस्येव फलसंभावनोज्झिता ॥१८८॥

दानं च सूनृता सूक्तिर्विश्वसंवननं प्रभोः । लोभः पूर्वं तयोरेव विनाशाय महोद्यमः ॥१८९॥

प्रतापमायतिं शोभां हेमन्ताहस्य वारिदः । स्मृतिशेषां करोत्येव लोभश्च पृथिवीभुजाम् ॥१९०॥

दायादा व्ययभीरुतापरिहतारब्धैर्भवन्त्युन्नता भृत्याः प्रत्युपकारकातरमतेः कुर्युर्न केपि प्रियम् ।
राशीभूतधनस्य जीवितहतौ शश्वद्यतेरन्निजा भूभर्तुः क्रियते द्विषेव रभसाल्लोभेन किं नाप्रियम् ॥१९१॥

राजसंवाहनामायं नवायासो जनासुहृत् । तदेष लोभप्रभवः प्रजानाथ निवार्यताम् ॥१९२॥

श्रुत्वेति राजपुत्रस्य सौजन्येनोज्ज्वलं वचः । स्मितधौताधरो राजा शनैर्वचनमब्रवीत् ॥१९३॥

तवाकृत्यविसंवादि वचः सौजन्यपेशलम् । स्मारयत्यद्य मामेतच्चित्तवृत्तिं पुरातनीम् ॥१९४॥

कुमारभावे पूर्वं मे तवेवार्द्रान्तरात्मनः । प्रजावत्सलता वत्स पर्याप्ता पर्यवर्धत ॥१९५॥

सोहं घर्मे महद्धर्मे शीते दत्त्वाच्छमं[1]शुकम् । पदातिरपपादत्रः पित्रा संचारितोभवम् ॥१९६॥

मृगव्यादौ हयैः सार्धमटन्तं[1] कण्टकक्षतम् । अन्तर्बाष्पं मां विलोक्य तमसूयिषुरग्रगाः ॥१९७॥

स तानुवाच सामान्यो भूत्वाहं राज्यमाप्तवान् । काले काले सेवकानां जाने सेवापरिश्रमम् ॥१९८॥

ईदृग्दुःखमयं भुक्त्वा ज्ञास्यत्यन्यव्यथां ध्रुवम् । प्राप्तैश्वर्यो भवेन्मूढो गर्भेश्वरतयान्यथा ॥१९९॥

उपायैरीदृशैर्योहं कृतः पित्रा सुशिक्षितः[1] । तेनापि प्राप्तराज्येन मयैवं पीडिताः प्रजाः ॥२००॥

गर्भवासव्यथां जातः शरीरी विस्मरेद्यथा । प्राप्तराज्यस्तथा राजा नियतं पूर्वचिन्तनम्[1] ॥२०१॥

त्वयैव तस्मादेकोद्य वरो मह्यं प्रदीयताम् । प्राप्तराज्यः प्रजापीडां मा कार्षीस्त्वमतोधिकाम् ॥२०२॥

सास्त्वयमिति तेनोक्तः कृतान्योन्यस्मितैर्विटैः । राजाप्तैर्वीक्षितश्चासीत्कुमारो ह्रीनताननः ॥२०३॥

त्यागभीरुतया तस्मिन्गुणिसङ्गपराङ्मुखे । आसेवन्तावरा वृत्तीः कवयो भल्लटादयः ॥२०४॥

निर्वेतनाः सुकवयो भारिको लवटस्त्वभूत् । प्रसादात्तस्य दीन्नारसहस्रद्वयवेतनः ॥२०५॥

१७८. [1]) Thus A; *varia lectio* in R G पापीयस्त्वा.—[2]) Thus corr. by $A_3$ from $A_1$ वियोगि°. १८१. [1]) $A_2$ gloss अपयशः. १९६. [1]) Thus $A_3$; $A_1$ °दत्त्वोश्रमं°. १९७. [1]) Thus corr. by $A_3$ from $A_1$ °टन्तः. २००. [1]) Thus corr. by $A_3$ from $A_1$ °क्षिताः. २०१. [1]) $A_3$ °चिन्तितम्.

कल्यपालकुले जन्म तत्तेनैव प्रमाणितम् । क्षीवोचितापभ्रंशोक्तेर्देवी वाग्यस्य नाभवत् ॥२०६॥
वेष्टितश्मश्रुरुष्णीषो घ्राणस्याग्रे प्रदेशिनी । ध्यानैकाग्रा दृगित्यासीत्सुखराजस्य[1] मन्त्रिणः ॥२०७॥
योयमार्योचितो वेषो दुर्नयासेविनः प्रभोः । छन्दानुवृत्त्या स प्राप नटस्येव विडम्बनाम् ॥२०८॥ युग्मम्॥
सोनुगैः सह निर्द्रोहं जघान द्रोहशङ्कया । शूरं दार्वाभिसारेशं शर्वर्यां नरवाहनम् ॥२०९॥
प्रजाभिशापे पतिते नृपस्योन्मार्गवर्तिनः[1] । त्रिंशद्विंशाः[2] सुतास्तस्य व्यपद्यन्तामयं विना ॥२१०॥
वंशः श्रीर्जीवितं दारा नामापि पृथिवीभुजाम् । क्षणादेव क्षयं याति प्रजाविप्रियकारिणाम् ॥२११॥
इत्युक्तं वक्ष्यते चाग्रे व्यक्तमेतत्तु चिन्त्यताम् । प्रनष्टं तस्य नामापि यथा क्रूरेण कर्मणा ॥२१२॥
नाम्ना पत्तनमि[1]त्येव प्रख्यातं स्वपुरं कृतम् । कस्यान्यस्याभिधाध्वंसि यथा शंकरवर्मणः ॥२१३॥
स्वस्त्रीयः सुखराजस्य तेन द्वाराधिपः कृतः । वीरानका[1]भिधे स्थाने प्रमादादासदद्[2]वधम् ॥२१४॥
तत्कोपात्स स्वयं राजा दत्तयात्रो मदोर्जितः । वीरानकं समुन्मूल्य प्रविवेशोत्तरापथम् ॥२१५॥
सिन्धुकूलाश्रयान्देशाञ्जित्वा भूरीन्भयातुरैः । कृतानतिर्महीपालैः प्रत्यावृत्तोभवत्ततः ॥२१६॥
उरशां विशतस्तस्य वास्तव्यैरौरशैः समम् । निकेतहेतोः सैन्यानामकस्मादुदभूत्कलिः ॥२१७॥
गिरिशृङ्गाधिरूढेन श्वपाकेन निपातितः । वेगवाही शरस्तस्य प्रमादादविशद्गलम् ॥२१८॥
मुमूर्षुराप्तान्कटकं संरक्ष्य नयतेति सः । उक्त्वा कर्णीरथारूढः[1] स्थानात्तस्माद्विनिर्ययौ ॥२१९॥
हीनदर्शनसामर्थ्यः परिज्ञाय शनैर्गिरा । क्रन्दन्त्या वपुरालिङ्ग्य[1] स्थितायाः क्षामभाषितः ॥२२०॥
पुत्रं गोपालवर्माख्यं न्यासीकृत्य च रक्षितुम् । शिशुदेश्यं महादेव्याः सुगन्धाया अबान्धवम् ॥२२१॥
फाल्गुणे कृष्णसप्तम्यां वत्सरे सप्तसप्ततौ । उत्खायमानविशिखो मार्ग एव व्यपद्यत ॥२२२॥ तिलकम्॥
सुखराजादयः[1] सैन्यं रक्षन्तः परभूमिषु । वृत्तान्तै[2]र्गोपयन्तस्तं यान्त एवाभवन्पथि ॥२२३॥
तं यन्त्रसूत्रैस्ते मूर्ध्नो नम्रतोन्नम्रतावहैः । प्रतिप्रणामं प्राप्तानां सामन्तानामकारयन् ॥२२४॥
षड्भिर्दिनैर्निजे स्थाने प्राप्ते बोल्यासका[1]भिधे । चक्रिरे गतसंत्रासास्ततस्तस्यान्तसत्क्रियाम् ॥२२५॥
तिस्रः सुरेन्द्रवत्याद्या राज्ञ्यो राजानमन्वयुः । वेलावित्तः[1] कृतज्ञश्च जयसिंहाह्वयः कृती ॥२२६॥
द्वौ लाडो वज्रसारश्च तं भृत्यावनुजग्मतुः । इति षड्भिश्चितारूढैः सहसाक्रियताग्निसात् ॥२२७॥
ततो जुगोप गोपालवर्मा धार्मिकतोज्ज्वलः । सुगन्धया पाल्यमानः सत्यसंधो वसुंधराम् ॥२२८॥
मध्ये लालितकादीनां[1] दुर्वृत्तानां वसन्नपि । अनतिक्रान्तबाल्योपि दुःसंस्कारान्न सोग्रहीत् ॥२२९॥
भूपालजननी भोगैर्वैधव्येधिकमुन्मदा । सा प्रभाकरदेवाख्यमचीकमत मन्त्रिणम् ॥२३०॥
तया निर्भरसंभोगप्रीतया स व्यधीयत । सौभाग्यपदशृङ्गारमौलिचक्रत्रयाङ्कितः ॥२३१॥
कोशाध्यक्षेण रागिण्यास्तस्या लुण्ठितसंपदा । उदभाण्डपुरे[1] तेन शाहिराज्यं व्यजीयत[2] ॥२३२॥

२०७. [1]) Thus corr. by $A_3$ from $A_1$ °रागस्य. २१०. [1]) न supplied by $A_3$.—[2]) $A_1$ writes below this word ९०. २१३. [1]) $A_2$ gloss पट्टन्. २१४. [1]) $A_2$ gloss द्वारविद्यायां वीराणकं.—[2]) $A_4$ gloss सुखराजस्वस्त्रीयः. २१७. [1]) $A_2$ gloss उडू. २१९ [1]) Thus $A_2$; $A_1$ °रूढान्स्था°. २२०. [1]) Thus corr. by later hand from $A_1$ °लिङ्गया. २२३. [1]) $A_3$ gloss मन्त्रिणः.—[2]) Thus $A_1$; $A_3$ वृत्तान्तं गो°. २२५. [1]) Thus A R G; $A_2$ gloss वराहवलसमीपे द्वारवत्यां. २२६. [1]) Emended: A R वालावित्तः; G वालाविभुः. Cf. वेलावित्तः vi. 73, 106, 324. २२९. [1]) $A_3$ gloss लालितकाः पञ्चातयः. २३२. [1]) Thus corr. from $A_1$ उदाभाण्ड° by $A_2$ which adds the gloss हैभङ्ग; R G read as $A_2$. Cf. उदभाण्डपुरे v. 153.—[2]) Thus $A_1$; $A_3$ व्यधीयत; G R follow $A_3$.

Ram Tej Shastri Pandey – "कल्हणविरचिता राजतरङ्गिणी" Chokhamba – (1985)



आज्ञातिक्रमिणः शाहेः कृत्वा कमलुकाभिधाम्[1] । तोरमाणाय[2] स प्रादाद्राज्यं लाल्लियसूनवे ॥२३३॥
प्रत्यावृत्तोथ नगरं विवेश विजयोर्जितः । शौर्यशृङ्गारवसतौ साभिमानः स्वविग्रहे ॥२३४॥
स राजजननीजारः साहंकारो[1] जयार्जनात् । मान[2]क्षतिमधिक्षेपैर्वीराणां व्यधितान्वहम् ॥२३५॥
क्षुद्रेण कामिना वेश्यावेश्मनीव नृपास्पदे । तेनावृते संप्रवेशो नाभूदन्यस्य कस्यचित् ॥२३६॥
शनैर्विज्ञातवार्तस्य धनमाना[1]पहारकृत् । सोभूदक्षिगतोत्यर्थं राज्ञो गोपालवर्मणः ॥२३७॥
विद्यते यत्र गञ्जेस्मिंस्तत्सर्वं शाहिविग्रहे । गतमित्यब्रवीद्भूपं स कोशगणनोद्यतम् ॥२३८॥
अथ गञ्जाधिपो[1] राजभीतः खार्खोदवेदिनम् । रामदेवाह्वयं बन्धुमभिचारमकारयत् ॥२३९॥
तयाभिचारक्रियया भुक्तभूर्वत्सरद्वयम् । गोपालवर्मनृपतिर्जातदाहो व्यपद्यत ॥२४०॥
व्यक्तीभूतकुकर्मा स राजदण्डभयाकुलः । रामदेवोवधीत्पापः स्वयमेव स्वविग्रहम् ॥२४१॥
रथ्यागृहीतो गोपालवर्मभ्राताथ संकटः । बभूव प्राप्तराज्यः स दशभिर्दिवसैर्व्यसुः ॥२४२॥
अथ वंशक्षये वृत्ते राज्ञः शंकरवर्मणः । प्रजाप्रार्थनया राज्यं सुगन्धा[1] विदधे स्वयम्[2] ॥२४३॥
गोपालपुरं[1]गोपालमठगोपालकेशवान् । सा पुरं च स्वनामाङ्कं विदधे धर्मवृद्धये ॥२४४॥
गोपालवर्मणो जाया नन्दानिन्द्यान्वयोद्भवा । शिशुरप्यभवन्नन्दामठं[1]केशवधारिणी ॥२४५॥
अन्तर्वत्न्याः क्षणे तस्मिन्पत्न्या गोपालवर्मणः । जयलक्ष्म्यां बबन्धास्थां श्वश्रूः संतानकाङ्क्षिणी ॥२४६॥
तस्यां विपन्नापत्यायां प्रसवान्तेतिदुःखिता । साभूदन्वयिने राज्यं कस्मैचिद्दातुमुद्यता ॥२४७॥
तस्मिन्काले महीपालनिग्रहा[1]नुग्रहक्षमम् । तत्र तन्त्रि[2]पदातीनां कृतसंहत्यभूत्कुलम् ॥२४८॥
ततः समाश्रितैकाङ्गा स्वयं संवत्सरद्वयम् । सुगन्धा विदधे राज्यं सा[1] मित्रत्वेन तन्त्रिणाम्[2] ॥२४९॥
योग्याय दातुं साम्राज्यं कस्मैचित्सा किलैकदा । मन्त्राय मन्त्रिसामन्तां[1]स्तन्व्यैकाङ्गानढौकयत् ॥२५०॥
अवन्तिवर्मवंशान्ते नप्तारं शूरवर्मणः । गग्गायाः स्वकुटुम्बिन्याः संजातं सुखवर्मणा ॥२५१॥
अनुव्रतो मे संबन्धिस्नेहादेवं भवेदिति । राज्ये निर्जितवर्माख्यं कर्तुं तस्या मनोभवत् ॥२५२॥ युग्मम् ॥
तया तदुक्तं विषयव्यसनित्वेन जागरात् । रात्रौ दिवाशयतया योप्यनुत्थानदूषितः ॥२५३॥
नाम पङ्गुरिति[1] प्राप राज्ये का तस्य योग्यता । इत्युदीर्याभवन्घ्नन्तो यावत्केचन मन्त्रिणः ॥२५४॥
संहतैर्भेदनिर्यातैस्तावन्निर्जितवर्मजः । दशवर्षः कृतो राजा पार्थस्तन्त्रिपदातिभिः ॥२५५॥ तिलकम् ॥
ते[1] गञ्जाधिपवाक्यानां सुगन्धोत्पाटनात्कृतम् । प्रायश्चित्तममन्यन्त मानक्षतिविधायिनाम् ॥२५६॥
सा राज[1]धान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । कृता[2]धिकारा हारस्य पतितैर्बाष्पबिन्दुभिः ॥२५७॥
शरणं प्रत्यभाद्भृत्यो यो यस्तस्याः क्रमागतः । तं तमैक्षिष्ट निर्यान्ती विपक्षैः सह संगतम् ॥२५८॥
वर्षे एकान्न[1]नवते संभूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरं[2]स्थिताम् ॥२५९॥

२३३. [1]) Thus corr. by later hand from $A_1$ °धम्.—[2]) Thus $A_2$; $A_1$ तोमराणाय. २३५. [1]) Thus $A_2$; $A_1$ °जननीसङ्गात्साभिमानो.—[2]) Thus corr. by $A_3$ from $A_1$ मनः°. २३७. [1]) Thus corr. by $A_3$ from $A_1$ °मालाप°. २३९. [1]) $A_4$ gloss प्रभाकरः. २४३. [1]) $A_2$ gloss गोपालवर्मसङ्कटयोर्माता सुगन्धा.—[2]) Thus corr. by $A_2$ from $A_1$ पुरम्. २४४. [1]) $A_2$ gloss गुरीपुरम्. २४५. [1]) $A_2$ gloss नन्दीमठं. २४८. [1]) Thus corr. by $A_3$ from $A_1$ विग्रहा°.—[2]) Thus $A_2$; $A_1$ तत्र. २४९. [1]) Thus emended; A G R समित्र°.—[2]) $A_3$ *v. l.* मन्त्रिणाम्; struck out. २५०. [1]) Thus $A_3$; $A_1$ °न्तात्तन्व्यै°. २५४. [1]) $A_2$ gloss निर्जितवर्मा. २५६. [1]) $A_2$ gloss कोष्ठरक्षाः. २५७. [1]) Thus corr. by later hand from $A_1$ राज्य°.—[2]) Thus $A_3$; $A_1$ हृता°. २५९. [1]) Thus $A_1$; $A_3$ एकोन°.—[2]) $A_2$ gloss वराहमूले.

तामापतन्तीमाकर्ण्य पार्थानुग्रहका मदात् । चैत्रान्ते तन्त्रिणः सर्वे निर्ययुः समरोन्मुखाः ॥२६०॥
ते जित्वा नवते वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान्व्यूढसंघातान्बबन्धुस्तां पलायिताम् ॥२६१॥
निष्पालकविहाशान्तस्तैर्बद्धा सा व्यपद्यत । अनित्यपतनोच्छ्राया विचित्रा भाग्यवृत्तयः ॥२६२॥
अस्मिन्धनजनक्षैण्यनिमित्तं मण्डलोत्तमे । सर्वतोदिक्कमुत्तस्थावथानर्थपरंपरा ॥२६३॥
जनकः पालको भूत्वा पङ्गुर्बालस्य भूपतेः । सामात्योपीडयल्लोकमुल्कोचग्रहतत्परः ॥२६४॥
भूभुजो ग्रामकायस्था इवान्योन्यविपाटनम् । दत्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ॥२६५॥
यद्राजैः[1] कन्यकुब्जाद्या विलब्धास्तत्र मण्डले । तान्त्रिणां हुण्डिकादानाद्भूभुजां जीविकाभवत् ॥२६६॥
विष्णुः पुराणाधिष्ठाने[1] मेरुवर्धनमन्त्रिणा[2] । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ॥२६७॥
तदात्मजाः[1] क्षणे तस्मिन्गहनद्रोहचाक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायासैर्धनार्जनम् ॥२६८॥ युग्मम् ॥
सार्धं सुगन्धादित्येन[1] गूढं शंकरवर्धनः । तेषां ज्येष्ठो बद्धसख्यो[2] मुमोष नृपमन्दिरम् ॥२६९॥
क्षीणप्रजे क्षणे तस्मिन्क्षारपात इव क्षते । उदीपैः[1] प्लाविताशेषशरच्छालिरजृम्भत ॥२७०॥
खार्यां सहस्रक्रेयायां दुर्लभे भोजनेभवत् । वर्षे त्रिनवते[1] घोरे दुर्भिक्षेण जनक्षयः ॥२७१॥
शवैश्चिरप्रविष्टाम्बुसंसेकोच्छूनविग्रहैः । वितस्ता सर्वतश्छन्ना दुर्लक्ष्य[1]सलिलाभवत् ॥२७२॥
विश्वतोस्थिमये जाते[1] नैविड्यात्क्षितिमण्डले । सर्वभूतभयादायि श्मशानैक्यमजायत ॥२७३॥
महार्ह[1]धान्यसंभारविक्रयप्राप्तसंपदः । मन्त्रिणः क्ष्मापतेः प्रापुस्तान्त्रिणश्च धनाढ्यताम् ॥२७४॥
आधेयः[1] क्ष्माभुजः सोभून्मन्त्री यस्तादृशीः प्रजाः । विक्रीय वाहयन्नासीत्तन्त्रिणां हुण्डिकाधनम् ॥२७५॥
अटव्यां वृष्टि[1]संपाते वातवर्षैरुपद्रुतम् । बहिः सर्वं जनं पश्यन्कश्चित्प्राप्तोष्णमन्दिरः ॥२७६॥
यथा तथा जनं दुःस्थं वीक्ष्य कापुरुषश्चिरम् । राजधानीस्थितः पङ्गुः स्वसुखं बह्वमन्यत ॥२७७॥युग्मम्॥
तुञ्जीनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन्क्षणे नीताः संक्षयं राजराक्षसैः ॥२७८॥
प्रापुश्चिरमवस्थानं पार्थिवा न तदा क्वचित् । धारासंपातसंभूता बुद्बुदा इव दुर्दिने ॥२७९॥
पार्थः पितरमुत्पाद्य कदाचित्प्राभवत्स्वयम् । कदाचित्स तमुत्पाद्य तान्त्रिचक्रिकयाप्यभूत् ॥२८०॥
अप्रीणयत्पङ्गुवधूवडवामण्डलं युवा । सुगन्धादित्य[1]बीजाश्वो व्यवाय[2]विधिसेवया ॥२८१॥
राज्यां[1] बप्पटदेव्याः स निर्दयैः सुरतोत्सवैः । खण्डयामास कण्डूतिं साप्यस्यार्थैषणां धनैः ॥२८२॥
भगिनीभगसौभाग्यबद्धराज्याः स्वयं ददुः । यां पङ्गवे मनोज्ञाङ्गीं मेरुवर्धनसूनवः ॥२८३॥
सुगन्धादित्यमौत्सुक्यात्सापि देवी मृगावती । स्वयं संबुभुजेभ्यर्थ्य कान्ता कामितकामिनी ॥२८४॥
पर्यायेणाभवद्भृत्यः स तयोर्भोगवृद्धये । दरिद्रयोषितोरेकं भुक्तिपात्रमिवान्वहम् ॥२८५॥

---

२६४. [1]) $A_2$ gloss निर्जितवर्मा. २६६. [1]) Thus $A_1$; altered by later hand to यद्राज्यैः. २६७. [1]) $A_2$ gloss पांयद्रठन् इति प्रसिद्धे ग्रामे.—[2]) $A_4$ gloss पङ्गुश्वशुरेण. २६८. [1]) $A_2$ gloss निर्जितवर्मजाः तदात्मजाः चक्रवर्मा शूरवर्मा । शम्भुवर्धनः शंकरवर्धनः मेरुवर्धनपुत्राः २६९. [1]) $A_2$ gloss मन्त्रिणा.—[2]) $A_4$ सुगन्धादित्येन सह. २७०. [1]) Thus corr. by later hand from $A_1$ उद्धीपः; $A_4$ gloss द्योपो (Kaśmîrî). २७१. [1]) $A_4$ gives the full date *Saptarshi* ३९९३. २७२. [1]) Thus $A_1$; altered by later hand to दुर्लक्ष°. २७३. [1]) जाते supplied by $A_3$ in space left by $A_1$. २७४. [1]) $A_3$ महार्घ°. २७५. [1]) Thus $A_1$; $A_3$ आदेयः. २७६. [1]) Thus corr. by $A_3$ from $A_1$ दृष्टि°. २८१. [1]) $A_3$ gloss मन्त्री.—[2]) $A_3$ gloss व्यवायः मैथुनम्. २८२. [1]) $A_4$ gloss चक्रवर्ममातुः. २८५. [1]) $A_4$ gloss तयोर्बप्पटदेवीमृगावत्योः पङ्गुपत्न्योः.

पुत्रयो राज्यलाभाय स्पर्धयाभ्यां स्वमन्त्रिणे । दत्ता निधुवनश्रद्धा धनदानै[1]: सदक्षिणा ॥२८६॥
अथ पार्थं समुत्पाद्य तत्पिता पङ्गुराश्रितः । तन्त्रिभिः सप्तनवते वर्षे पौषेभिषेचितः ॥२८७॥
माघेष्टानवते वर्षे सोभिषिच्य शिशुं सुतम् । चक्रवर्माभिधं राज्ये क्षीणपुण्यो व्यपद्यत ॥२८८॥
पैतृकं वाञ्छतो राज्यं पार्थस्यानुचरा व्यधुः । एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः ॥२८९॥
मातुर्बप्पटदेव्याः स कंचित्कालं शिशुर्नृपः । मातामह्याः क्षिद्धिकायाः[1] पाल्यस्त्वासीत्समा दश ॥२९०॥
बाल्यादव्यक्तदौःशील्ये तस्मिंस्तत्पालनं तयोः । निर्दोषमासीदण्डस्थफणिलालनसंनिभम् ॥२९१॥
जातः पङ्गोर्मृगावत्यां[1] नवमेब्देथ तन्त्रिभिः[2] । चक्रवर्माणमुत्पाद्य शूरवर्मा नृपः कृतः ॥२९२॥
निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः । अदत्त्वा तन्त्रिणां देयं तस्योत्पाटनहेतुताम् ॥२९३॥
अदुर्वृत्तोपि स क्ष्माभृद्विना भूरिधनार्पणम् । गुणवानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः ॥२९४॥
वर्षे गते तमुत्पाद्य दृष्टोत्पत्तितया नृपम् । बह्वर्थदं पुनः पार्थं व्यधुतन्त्रिपदातयः ॥२९५॥
अभूत्साम्बवती वेश्या साम्बे[1]श्वरविधायिनी । पार्थप्रिया तन्त्रिचक्रसंग्रहे ज्ञातचक्रिका ॥२९६॥
कालापेक्षी चक्रवर्मा ततोप्यैच्छद्धनं बहु । एकादशाब्दस्याषाढे कृतो भूयोपि तन्त्रिभिः ॥२९७॥
पार्थादीन्यैः समुत्पाद्य भुक्तं चक्रिकया पुरा । तैस्तैः स्थानैश्च ये तेभ्यो[1] जीवनाद्युपलेभिरे ॥२९८॥
पिता[1] भ्राता[2] च यैरस्य[3] राज्यादुत्पाटितोभवत् । संबन्धिभ्योपि यैर्द्विगुर्धं कन्यां[4] दत्त्वेतरे[5]तरम् ॥२९९॥
अकरोद्दृष्टदोषाणां तेषामेव स नष्टधीः । मेरुवर्धनपुत्राणामधिकारसमर्पणम् ॥३००॥ तिलकम् ॥
कृतोक्षपटलाधीशस्तेन शंकरवर्धनः । गृहकृत्येप्यसत्कृत्यो दाम्भिकः शंभुवर्धनः ॥३०१॥
पौषे तस्यैव वर्षस्य धनाभावात्स तन्त्रिणाम् । अदत्तहुण्डिकादेयः पलायिष्ट भयाकुलः ॥३०२॥
स्थिते मडवराज्यान्तस्तस्मिञ्शंकरवर्धनः । राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छंभुवर्धनम् ॥३०३॥
आवर्जितैः स निखिलैरधिकोत्कोचचर्चया । वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत् ॥३०४॥
तीर्थस्थितः स्वकुलजांस्तिमिरत्ति भुङ्क्ते मौनी बकस्तिमिमुपेत्य वनान्तवासी ।
व्याधो निहन्ति तु बकं प्रभवन्ति ते ते पात्राण्युपर्युपरि वञ्चनचञ्चुतायां[1] ॥३०५॥
भ्रष्टश्रीश्चक्रवर्माथ निशि श्रीढक्कवासिनः । एकदा डामराग्र्यस्य संग्रामस्याविशद्गृहम् ॥३०६॥
ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः । प्रणम्य ग्राहयामास संभ्रमान्निजमासनम् ॥३०७॥
राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहायकार्थिनम् । तं विपत्पेशलं प्रह्वो विचिन्त्योवाच डामरः ॥३०८॥
तन्त्रिणां वा तृणानां वा राजन्का गणना रणे । त्वत्सेवनार्थं सामर्थ्यं कस्मिन्न मम कर्मणि ॥३०९॥
प्राप्तोत्साहः पुनर्नूनमस्मानेव[1] हनिष्यसि । विस्मरन्त्युपकारं हि कृतकार्या महीभुजः ॥३१०॥
ऊर्ध्वारोहे य आलम्बहेतुर्भूभृच्छिनत्ति तम् । कुठारिकस्तरुस्कन्धमिवाधोगमनोन्मुखः ॥३११॥
धीधैर्याद्दिप्रकर्षेण येनोपक्रियते नृपः । प्राप्तोदयः स तेनैव शङ्क्यं वेत्त्युपकारिणम् ॥३१२॥

---

२८६. [1]) $A_2$ reads धनधान्यैः. २९०. [1]) Thus corr. by later hand from $A_1$ क्षह्लि°. २९२. [1]) $A_4$ gloss मेरुवर्धनपुत्र्यां.—[2]) Thus $A_3$; $A_1$ मन्त्रिभिः. २९६. [1]) $A_2$ gloss साम्बोरणग्रामे. २९८. [1]) $A_4$ gloss अत्र सर्वत्र यच्छब्देन मेरुवर्धनपुत्रपरामर्शः.—[2]) $A_4$ पार्थादिभ्यः. २९९. [1]) $A_4$ gloss पङ्गुः.—[2]) $A_4$ gloss पार्थः शूरवर्मा वा.—[3]) $A_4$ gloss चक्रवर्मणः.—[4]) $A_4$ gloss मृगावतीं.—[5]) $A_4$ gloss पङ्गवे. ३०५. [1]) Emended; A चुञ्चु°. ३१०. [1]) Thus corr. by $A_3$ from $A_1$ °स्मान्नेव.

अस्मिन्स्थिते विपद्भूदिति संचिन्त्य वर्ज्यते । मूढैः परिवृढैरापत्सेवको मङ्गलेच्छुभिः ॥३१३॥
संपद्यापत्सहायस्य विस्मृतोपक्रिया नृपाः । मध्ये प्रमादस्खलितमुत्पन्नं हृदि कुर्वते ॥३१४॥
आमयार्तिरिपुत्रासक्षुदादौ दृष्टवैकृतान् । लब्धोदया ह्रीभयेन क्ष्मापा घ्नन्त्यनुयायिनः ॥३१५॥
राज्ञः[1] सतोपि नाश्वासो यस्येभस्येव कर्णयोः । अविशुद्ध[2]प्रकृतयो ध्वनन्ति मधुपा इव ॥३१६॥
दिवसे संनिधानेन पिशुनप्रेरणा प्रभोः । ईर्ष्यालुना स्वैरिणीव रक्षितुं यदि पार्यते ॥३१७॥
राजन्नजन्युपाध्यायो देवी यच्छिक्षयेद्रहः । तत्र प्रजागरः कर्तुमसर्वज्ञैर्न शक्यते ॥३१८॥
कथंचिदह्नि हृदये कुशलैर्विनिवेशिता । शिक्षा गोर[1]खरेणेव राज्ञा विस्मार्यते निशि ॥३१९॥
न के लोभं[1] समुत्पाद्य जिह्वया स्निग्धदीर्घया । पिपीलका इव ग्रस्ताः क्ष्मापालैः शल्यकैरिव ॥३२०॥
जानाति हन्तुं हन्तव्यमासन्नं न तु दूरगम् । एको बकः परं[1] सत्यं द्रोहवृत्तिर्महीपतिः ॥३२१॥
न नाम कण्टकाकीर्णः कौटिल्यं लक्ष्यतां नयेत् । कालापेक्षी क्षितिपतिः शरीरमिव जाहकः[1] ॥३२२॥
नमन्नपि हरिर्हन्याद्दाश्लिष्यन्नपि पन्नगः । विहसन्नपि वेतालः स्तुवन्नपि महीपतिः ॥३२३॥
अद्रोहवृत्त्या तस्मात्त्वं द्रक्ष्यस्यस्मांन्सदा यदि । ससैन्यस्ते तदेषोहं प्रातरेव पुरःसरः ॥३२४॥
तदाकर्ण्याब्रवीद्राजा लज्जास्मितसिताधरः । स्वात्मेव यूयं संरक्ष्या मम पूर्वोपकारिणः ॥३२५॥
ततो निक्षिप्य चरणं रक्ताक्ते मेषचर्मणि । कोशं[1] चक्रतुरन्योन्यं ससखड्गौ नृपडामरौ ॥३२६॥
अथ संघटितासंख्यचण्डडामरमण्डलः । चक्रवर्माकरोद्यात्रां प्रत्यूषे नगरोन्मुखः ॥३२७॥
तस्मिन्क्षणे पुरस्कृत्य योद्धुं शंकरवर्धनम् । विनिर्ययुः सिताष्टम्यां चैत्रे तन्त्रिपदातयः ॥३२८॥
कालानुवृत्तिप्रच्छन्नं तेषां संभावनोज्झितम् । स तत्वरे पुरस्कर्तुं चक्रवर्मा स्वविक्रमम् ॥३२९॥
अथ प्रवृत्ते संग्रामे घोरे पद्मपुराद्बहिः । जघान प्रेरितहयः पूर्वं शंकरवर्धनम् ॥३३०॥
हते सेनाधिपे तत्र शतधा तन्त्रिवाहिनी । प्रययौ पवनाघातप्रेरिता[1] नौरिवार्णवे ॥३३१॥
पृष्ठानुसरणोद्युक्तो[1] नृपस्तेषामपाहरत् । गतिं तुरगवेगेन शिरःश्रेणिं तथासिना ॥३३२॥
भ्रमतः समरे बभ्रुर्वीरपट्टाञ्चलच्छटाः[2] । चक्रवर्ममृगेन्द्रस्य सटापटलविभ्रमम् ॥३३३॥
किमन्यत्पञ्चषाण्यासन्सहस्राणि रणाङ्गने । पतितानि क्षणादेव हतानां तत्र तन्त्रिणाम् ॥३३४॥
तन्त्रिणो रणसंरम्भपरिश्रान्ताः क्ष्मातले । गृध्रपक्षकृतच्छाये शायिताश्चक्रवर्मणा ॥३३५॥
विशुद्धवंश्यैर्गुणिभिर्निहतै[1]ः संश्रितैः समम् । अभूषयद्वीरशय्यां शूरः शंकरवर्धनः ॥३३६॥
उदयं संहता एव संहता एव च क्षयम् । प्रयान्तः स्पृहणीयत्वं तन्त्रिणः कस्य नागमन् ॥३३७॥
माननीयानधृष्यांश्च महावंश्यान्महीपतीन् । अहीनिव खिलीकृत्य भिक्षयन्तः क्षणे क्षणे ॥३३८॥

---

३१६. [1]) $A_3$ note न विशुद्धा प्रकृतिर्येषां ते। अविशुद्धप्रकृतयः सूचकाः यस्य राज्ञः कर्णयोर्विषये ध्वनन्ति। तस्य सतोपि साधोरपि स्वयं नाश्वासः। इभस्येव। यथा हस्तिनः कर्णयोर्मलिनाः मधुपा ध्वनन्ति ॥.—[2]) $A_2$ gloss कुटिलाः. ३१९. [1]) $A_3$ गोपख°. ३२०. [1]) $A_3$ भोगं. ३२१. [1]) Thus corr. by later hand from $A_1$ परं. ३२२. [1]) Thus $A_1$ and R; misread in G and Edd. जार्यकः; $A_3$ gloss जार्यको घूकमार्जारखट्टाकैरण्डकासु चेति विश्वः. ३२६. [1]) $A_3$ gloss दिव्यमित्यर्थः। उभौ मैत्रीसम्बन्धार्थं रक्ताक्ते मेषचर्मणि (gloss भस्त्रायां) परस्परं पादप्रक्षेपं कुरुत इति शपथसंप्रदायः दिव्ये च कोशः पुष्पादिकुड्मलासिपिधानयोरिति मङ्खः. ३३१. [1]) $A_3$ विशीर्णा. ३३२. [1]) Thus corr. by later hand from $A_1$ °सारणो°. ३३३. [1]) $A_2$ gloss अधारयन्.—[2]) $A_2$ gloss शिरस्त्रबन्धनार्थं दत्तो यो वीरपट्टः डोपट्ट इति प्रसिद्धः तस्य अञ्चलच्छटाः फिते इति प्रसिद्धाः. ३३६. [1]) Thus $A_1$; altered by later hand to °हतः.

अनयन्क्रीडया व्रीडां माद्यन्तो जीविकाकृते । प्रागाहितुण्डिकाः क्रूरा इव ये गर्द्दवृत्तयः ॥३३९॥

ते तन्त्रिणः क्षणाद्दग्धा गूढवैरविषाग्निना । विमाननाविविग्नेन चक्रवर्ममहाहिना ॥३४०॥ तिलकम् ॥

अथ द्वितीये दिवसे भग्नानामपि तन्त्रिणाम् । वीरः संघटनां यावदकरोच्छंभुवर्धनः ॥३४१॥

तावन्मिलितसामन्तसचिवैकाङ्कलालितः । सैन्यैर्नानापथायातैर्नदद्भिर्व्याप्तदिक्पथः ॥३४२॥

वल्गन्मध्येश्ववाराणां नृत्यतेवाग्र्यवाजिना । वल्गाङ्केनोद्वहंल्लम्बं शिरस्त्रं वामपाणिना ॥३४३॥

सस्वेदेतर[1]हस्ताग्रवेष्टनोल्लासनस्पृशः । खड्गस्य बिम्बितार्कस्य भाभिर्द्योतितकुण्डलः ॥३४४॥

कवचोत्सेधसंर[1]ब्धकण्ठायासेन ताम्यता । बद्धभ्रू[2]कुटिबन्धेन वदनेन भयावहः ॥३४५॥

तर्जयन्कृतहुंकारांल्लुण्ठ[1]कांल्लुण्ठितापणान् । शिरोक्षिसंज्ञया त्रस्तवास्तव्यकृतसान्त्वनः ॥३४६॥

भेरीरवैः श्रुतिं भिन्दन्पौराशीर्घोषरोधिभिः । संग्रामजयशोभाङ्कश्चक्रवर्माविशत्पुरम् ॥३४७॥ कुलकम् ॥

तस्मिन्सिंहासनं प्राज्यमाक्रामति[1] जयोर्जिते । बद्धा कुतश्चिदानिन्ये भूभटः शंभुवर्धनम् ॥३४८॥

राज्ञः पुरस्तात्तं शस्त्रपातभीमीलितेक्षणम् । भक्तिं प्रदर्शयन्पापश्चण्डाल इव सोवधीत् ॥३४९॥

उज्झतां धर्ममर्यादां भृत्यानां जनकोपमान् । हन्तुं नरेन्द्रान्द्रोहेण प्रारंभः शंभुवर्धनैः[1] ॥३५०॥

प्राप्य निष्कण्टकं राज्यं चक्रवर्मनृपः क्रमात् । अजायत धृतोत्सेको नृशंसविषमक्रियः ॥३५१॥

स्वविक्रमकथास्तोत्ररोमन्थप्रियताहतः । सोभवद्विटवन्द्यादिचाटुकारविधेयधीः ॥३५२॥

आत्मानं दैवतमिव स्तुतिमोहितचेतसः । जानतः प्राभवंस्तस्य विवेकविगुणाः क्रियाः ॥३५३॥

तस्मिन्प्रसङ्गे रंगाख्यः प्रख्यातो डोम्बगायनः । वैदेशिकोभवद्राज्ञा वितीर्णावसरो बहिः ॥३५४॥

प्राप्तान्सचिवसामन्तान्निन्यस्यन्तो यथाक्रमम् । प्रतीहारा नृपस्याग्रमनयन्त विविक्तताम् ॥३५५॥

विबभौ धवलोष्णीषा सभा दीपप्रभोज्ज्वला । शेषशय्येव मणिभिः कृतालोका फणोद्भवैः ॥३५६॥

कृतावरोधधम्मिल्लमालान्दोलनकेलिभिः । प्रदोषपवनैश्चक्रे शिशिरैर्घ्राणतर्पणम् ॥३५७॥

जातगीतदिदृक्षाणां गवाक्षावलयो बभुः । आसवामोदिभिर्वक्त्रैरवरोधमृगीदृशाम् ॥३५८॥

हारकङ्कणकेयूरपारिहार्यादिशोभिना । स्ववृन्देनानुयातोथ प्राविशड्डोम्बगायनः ॥३५९॥

हंसी नागलता चास्य सुते ललितलोचने । चक्रतुः कौतुकोद्ग्रीवां सभां चित्रार्पितामिव ॥३६०॥

तयोर्विलासवलितैश्चलितापाङ्गविभ्रमैः । द्वितीयपुष्पप्रकरो व्यकीर्यत सभान्तरे ॥३६१॥

गायनैर्जय जीवेति कृतकोलाहलैरभूत् । सदः सशब्दं कुर्वद्भिस्तत्तन्नृ[1]पगुणग्रहम् ॥३६२॥

भुक्तोत्तरोचितोदञ्चत्पञ्चमस्थानचारिणः । वंशे रागविशेषस्य दत्ते स्थाने[1] ततः शनैः ॥३६३॥

अविक्रियशिरःकम्पभ्रूनेत्रभ्रमशोभितः । अभिन्न इव गायन्त्यो[1]र्गीतध्वनिरजृम्भत ॥३६४॥

अथ ताम्बूलरोमन्थत्यागनिश्चलमूर्तिना । जातं राजकुरङ्गेण प्रमोदास्पन्ददृष्टिना ॥३६५॥

गायन्त्यौ[1] भावमा[2]लक्ष्य तस्य स्निग्धमगायताम् । अधिकोद्रेचिताभिख्यं विलासस्मितविभ्रमैः ॥३६६॥

---

३४४. [1]) Thus $A_1$; $A_3$ स वामेतर°. ३४५. [1]) $A_3$ संरुद्ध°.—[2]) $A_3$ वक्रभ्रु°. ३४६. [1]) Thus corr. by $A_3$ from $A_1$ °लुब्धकां°. ३४८. [1]) Thus $A_3$; $A_1$ °क्राम्यति. ३५०. [1]) $A_3$ °वर्धनात्. ३६२. [1]) Thus G Edd.; A °स्तस्तत्नृप°. ३६३. [1]) $A_3$ ताने. ३६४. [1]) Thus corr. by later hand from $A_1$ गायन्त्योर्गी°. ३६६. [1]) Thus corr. by later hand from $A_1$ गायन्त्यौ.—[2]) $A_3$ gloss आशयं.

राज्ञस्तयोश्च संसक्तचित्तयोरितरेतरम् । दृग्व्यापारैः स्वसंवेद्यैः संलाप इव पप्रथे ॥३६७॥

नृपं हारितचित्तं तं विज्ञायैकः प्रियो विटः । ततः[1] प्रसङ्गे प्रोवाच प्रीतिवृद्धिकरं वचः ॥३६८॥

देव गीतमिदं यातं संप्राप्यैते मनोरमे । कर्पूरपारीपतितं मैरेयमिव हारिताम्[1] ॥३६९॥

गायन्त्योर्[1]मार्[2]जितामेतां रागाइ[3]न्तचतुष्किकाम् । अनयोः प्रतिमाव्याजाच्चुम्बतीव निशाकरः ॥३७०॥

करन्यस्तकपोलान्तमुद्गायन्त्याविमे ध्रुवम् । कटाक्षैः कुरुतो व्योम्नि वैमानिकविमोहनम् ॥३७१॥

जानत्या स्वाश्रयां चर्चामनयोरेकयानयोः । असूयास्मितगर्भोयं कटाक्षः पश्य पातितः ॥३७२॥

गायन्त्येकाननतमुखी कर्णव्यालोलकुण्डला । विपरीतरतोद्रेककृतारम्भेव शोभते ॥३७३॥

सफलं तस्य तारुण्यमीदृश्यो निर्जने स्त्रियः । औत्सुक्याद्विरहे यस्य गायन्त्येवंविधैः स्वरैः ॥३७४॥

उपपत्तिपरित्यक्तशास्त्रानुष्ठानमोहितैः । एकसार्थप्रयातेभ्यः कथमेको विवर्ज्यते ॥३७५॥

नेत्रस्य रूपं श्रोत्रस्य ध्वनिं संस्पृशतो न चेत्[1] । तदङ्गस्या[2]न्यकान्ताङ्गं स्पृशतो दुष्कृतं कुतः ॥३७६॥

अभिलाषाङ्कुरः सिक्त इव तैर्विटभाषितैः । राज्ञः स्वभावलोलस्य शतशाखत्वमाययौ ॥३७७॥

ये[1] विस्तारितवर्ण[2]संकररुचः संदर्श्य गोत्रान्तकृ[3]द्बद्धावस्थितिचापलङ्घनमलं पार्श्वे ध्वनन्त्युद्धताः ।
नीयन्ते[4] विपथावपातपरतां लब्धोदयैस्तैः क्षणात्सिंहा वारिधरैरमी च रभसाद्भू[5]पालसिंहा विटैः ॥३७८॥

वस्तु क्षणादनुपपत्त्युपपत्तियुक्तं कृत्वा जडान्यदि विमोहयितुं समर्थाः ।
न स्युर्विटा अथ कुतर्कपथस्थिताश्च नित्योद्गसेषु[1] निरयेषु मृगाधरेयुः ॥३७९॥

संतोष्य हारकेयूरकुण्डलैर्डोम्बमण्डलम् । अमार्गत्यागरा[1]धेयैः शुद्धान्तमगमन्नृपः ॥३८०॥

कान्तोस्याः क्षितिवल्लभोयम[1]भिधेत्युर्वीपतेरेकतो[2] ब्रूते सावतिचण्डताण्डवयुतं डो[3]म्बः स्वनामान्यतः ।
मध्ये[4] यत्किमपीति[5] गीतरचना[6] काव्यं यदेतद्विदो[7] यल्लक्ष्मीं[8] क्षपयन्ति[9] तान्धिगबुधान्कीर्त्यर्थिनः पार्थिवान् ॥३८१॥

वेश्यानुरागस्य महेन्द्रचापधाम्नो हरिद्रारसरञ्जनस्य । उपाङ्गगीतस्य च हारिणोपि सौन्दर्यमस्थैर्यहतप्रकर्षम् ॥३८२॥

दर्शनाभ्याससंवृद्धचक्षूरागः क्षमापतिः । विना श्वपाककन्ये ते न पुनः प्राप निर्वृतिम् ॥३८३॥

गायन्त्यौ शयनोपान्ते शनैर्विहितचुम्बनम् । नृपं रतिसुखाभिज्ञं तं हठात्ते प्रचक्रतुः ॥३८४॥

समागमेन नव्येन तयोर्वैयात्यशोभिना । चक्रे क्षपितसामर्थ्यः स लज्जोद्वहनाक्षमः ॥३८५॥

रत्यन्तसुलभोद्भेदैर्निःसृतैः स्वेदबिन्दुभिः । भाग्योष्मसंक्षयजडं वपुस्तस्य व्यधीयत ॥३८६॥

रागान्धेन कृता हंसी महादेवी महीभुजा । भेजे राजवधूमध्ये वाल्व्यजनवीजनम् ॥३८७॥

---

३६८. [1]) $A_2$ तत्र. ३६९. [1]) $A_3$ gloss हरति मन इति हारी तस्य भावः तत्ता तां यातमिति सम्बन्धः. ३७०. [1]) Thus corr. by $A_3$ from $A_1$ गायन्त्योः.—[2]) Thus $A_3$; $A_1$ क्रमाइ°.—[3]) $A_2$ gloss दन्तपङ्क्तिचतुष्टयं. ३७६. [1]) $A_3$ gloss दुष्कृतं.—[2]) $A_3$ gloss त्वगिन्द्रियस्य. ३७८. [1]) $A_3$ gloss वारिधराः विटाश्च.—[2]) $A_2$ gloss वर्णाः नीलपीताद्याः ब्राह्मणाद्याश्च.—[3]) $A_3$ gloss गोत्रान्तकृति इन्द्रे बद्धा अवस्थितिर्येन स चासौ चापः धनुः इन्द्रचापः तस्य लङ्घनं । गोत्रान्तकृद्भिः कुलक्षयकारिभिः पापिभिः बद्धा स्थितिर्यस्य । तत् चापलं प्रदर्श्य ध्वनन्ति इति च घनं निविडं इति चापलविशेषणं.—[4]) Thus corr. by later hand from गायन्ते.—[5]) $A_3$ कुपथाव°.—[6]) $A_3$ तरसा भू°. ३७९. [1]) $A_3$ gloss नित्यभून्येषु. ३८०. [1]) $A_3$ gloss अपात्रत्यागे कर्णः. ३८१. [1]) $A_3$ gloss अयं क्षितिवल्लभः राजा अस्याः कस्याश्चित्कान्तः अस्यां विषये अयं राजा लग्नः इत्यभिधा कथितमेकतः.—[2]) $A_3$ gloss डोम्बेनोच्चारिता उर्वीपतेः अभिधा नामधेयं एकतः इत्यस्ति इति कथमिति कान्तोस्या इति.—[3]) $A_3$ gloss उर्वीपतिः.—[4]) $A_3$ डाम्बस्य नामा°.—[5]) $A_3$ मध्येन्यत्किम°.—[6]) $A_3$ gloss यत्किमपीति । यत्किञ्चिदालजालप्रायं लौकिकं गीतं । तस्य रचना एव काव्यं.—[7]) $A_3$ gloss एतत् गीतिरचनाकाव्यं विदन्ति एतद्विदः.—[8]) $A_3$ gloss येषां पार्थिवानां लक्ष्मीः यल्लक्ष्मीः तां.—[9]) $A_3$ gloss अपहरन्ति.

तस्या यैर्भुक्तमुच्छिष्टं ते यथा चक्रवर्मणः । नृपान्तराणामन्येषामप्यभूवन्सभासदः ॥३८८॥

मन्त्रिणामक्षपटलप्रख्यमुख्याधिकारदा । प्रवृद्धिहेतुतां प्राप डोम्बसेवनचक्रिका ॥३८९॥

मौर्ख्यात्सचिवतां केचिच्छ्वपाका न व्यधुः स्वयम् । केचित्त्वकुर्वन्नीतिज्ञा राजकार्याणि मन्त्रिवत् ॥३९०॥

मन्त्रिणस्तस्करा राज्ञी श्वपाकी श्वपचाः प्रियाः । किं न लोकोत्तरमभूद्भूपतेश्चक्रवर्मणः ॥३९१॥

ऋतुस्नातार्तवाङ्कानि श्वपाकी स्वांशुकान्यदात् । तदाच्छादनतृप्तेच्छा मन्त्रिणः प्राविशन्सभाम् ॥३९२॥

कैश्चित्क्षितिभुजा वैरमङ्गीकृत्यापि तत्क्षणम् । यैर्नाशि श्वपचोच्छिष्टं तेभूवन्सोमपैः समाः ॥३९३॥

मण्डलेस्मिन्प्रभावोग्रा न देवा न्यवसन्ध्रुवम् । तद्वेश्मानि तदा नो चेच्छ्वपाकी प्राविशेत्कथम् ॥३९४॥

तां रणस्वामिनं द्रष्टुं तिलद्वादश्यहे गताम् । सामन्तेभ्यः साभिमाना नान्वयुर्डामराः परम् ॥३९५॥

राजकौटुम्ब्यतृप्तानां डोम्बानां निर्गता मुखात् । राज्ञामिवाज्ञा दुर्लङ्घ्या न केनाप्युदलङ्घ्यत ॥३९६॥

राज्ञा प्रदत्ते रङ्गाय हेलुग्राममग्रहारवत् । लिलेख पट्टोपाध्यायो न यदा दानपट्टकम् ॥३९७॥

तदाक्षपटलं गत्वा रङ्गः कोपात्तमब्रवीत् । रङ्गस्स हेलु दिण्णेति दासीसुत न लिख्यते ॥३९८॥

लिलेख सोथ संत्रासाद्रङ्गभ्रूभङ्गतर्जितः । को न राजनि दुर्वृत्ते भवेन्नीतिव्यतिक्रमः ॥३९९॥

अन्त्यागमनपापस्य पापः पृच्छन्स निष्कृतिम् । विटैर्हास्यावहान्यत्र प्रायश्चित्तानि कारितः ॥४००॥

हिमेनैव हिमं शाम्येद्दुष्कृतेनैव दुष्कृतम् । सोनुशिष्टो विटैरेवं दधत्पामरसारताम् ॥४०१॥

पवित्रास्पर्शतोस्पृश्यास्पर्शपापं जिहीर्षुणा । तेनादूष्यत विप्रस्य योषिन्मासोपवासिनः ॥४०२॥

ततोपि पापिनोभूवन्केपि तस्मिन्क्षणे द्विजाः । तस्मादप्यग्रहारान्ये जगृहुर्गृहभोजिनः ॥४०३॥

चक्रे चक्रमठं सोपि पापः पाशुपताश्रयम् । तस्मिन्हतेर्धनिष्पन्नं तद्वधूर्यमयोजयत् ॥४०४॥

पूर्वोपकारान्विस्मृत्य डामरान्स निरागसः । नृपतिः श्वपचाकामी विश्वस्तांश्छद्मनावधीत् ॥४०५॥

हन्तुं व्याजेन विश्वस्ताः केचिड्डामरतस्कराः । तस्थुस्तस्यान्तिके द्रोहच्छिद्रानेहःप्रतीक्षिणः ॥४०६॥

श्वपाकीशयनावासासन्नावस्करमन्दिरे । शौचस्थितं तं निःशस्त्रं ते रात्रौ प्रापुरेकदा ॥४०७॥

अथ तैः प्राप्तसमयैरकस्मात्तस्य सर्वतः । क्षिप्रं न्यपात्यताशेषशातशस्त्रपरंपरा ॥४०८॥

सुप्तस्तटाद्ध्रदे भ्रष्ट इव निद्रालसेक्षणः । प्रबुद्धः शस्त्रपातैः स व्यमुचद्भैरवान्रवान् ॥४०९॥

निःशस्त्रः शस्त्रमन्विष्यन्क्षरत्क्षतजनिर्झरः । अनुद्रुतोरिभिर्धावञ्छय्यावेश्म विवेश तत् ॥४१०॥

अप्राप्तहेतिं क्रन्दन्त्या श्वपाक्यालिङ्गिताङ्गकम् । तत्कुचोत्सङ्गलग्नाङ्गं जघ्नुस्तेनुप्रविश्य तम् ॥४११॥

स्वैरेव प्रेरिता दारैस्ते तस्य नृपतेः किल । मुमूर्षोर्जानुनी स्वैरं शिलयां समचूर्णयन् ॥४१२॥

त्रयोदशाब्दे ज्यैष्ठस्य शुक्लाष्टम्यां क्षपाक्षणे । श्वपाकभोग्यः स श्वेवावस्करे तस्करैर्हतः ॥४१३॥

उन्मत्तावन्तिनामाथ पार्थसूनुर्दुराशयः । अभ्यषिच्यत वैधेयैः सचिवैः शर्वटादिभिः ॥४१४॥

श्वपाकीकामुके पापे निहते निशि तस्करैः । प्रजानां पाप्मना सोभूत्पापात्पापतरो नृपः ॥४१५॥

---

३८९. 1) $A_2$ gloss गणनार्थं गणनाधिपतिस्थानस्य अक्षपटलस्य अहले इति भाषया नाम शिष्टदेश इति केचित्. ३९२. 1) $A_2$ gloss रजः. ३९५. 1) $A_3$ gloss केवलं. ३९७. 1) Thus corr. by later hand here and in following verse from $A_1$ हलु°. 1) $A_3$ gloss रङ्गस्य हेलुः दत्ता. ३९९. 1) Thus corr. by $A_3$ from $A_1$ के.—2) Thus corr. by $A_3$ from $A_1$ भवन्नी°. ४०१. 1) $A_3$ दधर्षापरमातरमित्यन्यादर्शे. ४०५. 1) Thus corr. by $A_3$ from $A_1$ °र्वेश्यो°; $A_3$ gloss मठं. ४१२. 1) Thus A; G R Edd. शिलायां. ४१३. 1) Thus G Edd.; A ज्येष्ठस्य.

स्थगिता तत्कथापापस्पर्शभीत्या सरस्वती । कथंचिच्चतुरश्चेव सेयं प्रस्थाप्यते मया ||४१६||
आसीत्पितृकुलं तस्य भक्ष्यं दुर्नृपरक्षसः । और्वाभिधस्य हव्याशविशेषस्येव जीवनम् ||४१७||
तस्यासंष्टक्कराघातसटांकारकरोटिकाः । घ्राणस्कन्दादिवायज्ञाः सभायां मुख्यमन्त्रिणः ||४१८||
तेमात्याश्चारणत्वेन निर्लज्जास्तमरञ्जयन् । कालान्तरेण यैरेव भूमिपालैर्भविष्यते ||४१९||
पर्वगुप्तोभवत्तस्य सर्वेभ्योप्यधिकं प्रियः । आस्थाने नर्तनं कुर्वन्नपाकृतकटीपटः ||४२०||
आ तन्त्रिविप्लवाद्दृष्ट्वा कीटप्रायान्महीपतीन् । पर्वगुप्तः सर्वदाभूद्राज्यावाप्तिकृतोद्यमः ||४२१||
तदा निगूढराज्येच्छः सख्यं मुख्यैः स मन्त्रिभिः । पीतकोशैः प्रविदधे पञ्चभिर्भूभटादिभिः ||४२२||
भूभटः शर्वटश्छोजः कुमुदः सोमृताकरः । पर्वगुप्तेन संबन्धं चक्रिरे कोशपीथिनः ||४२३||
गवाक्षासरसि प्राप्तश्रीजलोवागलद्विजः । संग्रामडामरगृहे यो रक्कः ख्यातपौरुषः ||४२४||
पदातिमात्रो भूपेन दृष्टशौर्यः स संयुगे । महोदरो महाकायः प्रापितो मुख्यमन्त्रिताम् ||४२५||
यादृशी तेन ददृशे देवी श्रीः सरसोन्तरे । तादृग्रक्कं[1]जथादेवीत्यभिधानेन निर्ममे ||४२६||
राज्यं निष्कण्टकं कृत्वा धूर्तेनापजिहीर्षुणा । प्रेरितः पर्वगुप्तेन भूभृच्चक्रे कुलक्षयम् ||४२७||
तेन लुण्ठितसर्वस्वः पार्थस्तस्थौ कलत्रवान् । श्रीजयेन्द्रविहारान्तः श्रमणैर्दत्तभोजनः ||४२८||
शिशून्शंकरवर्मादीन्भ्रातृन्द्वारान्निरोध्य सः । तत्र स्थिताननशनैरुत्क्रान्तासूनकारयत् ||४२९||
उद्यतः पितरं हन्तुं मन्त्रिणोनुमतप्रदान् । बद्धपट्टान्व्यधाद्बद्धनिगडानितरान्पुनः ||४३०||
एकदा मन्त्रिसामन्ततन्त्रिकायस्थसैनिकाः । पार्थं तदाज्ञामासाद्य निशायां पर्यवेष्टयन् ||४३१||
म्लानक्षीणाम्बरां पत्नीं रुद्धद्वारां निपात्य[1] ते । आलिङ्ग्यमानां क्रन्दद्भिस्तर्णकैरिव दारकैः ||४३२||
केशानालम्ब्य कर्षन्तः शर्करोत्पाटिताङ्गकम् । विपन्नं गोकुलाद्दान्तमिव निर्हृत्य तं गृहात् ||४३३||
क्षुत्क्षामरूक्षं क्रन्दन्तं निजघ्नुर्नग्नविग्रहम् । चण्डाला इव निःशस्त्रं कुमुदाद्या नृपप्रियाः ||४३४||
पितरं निहतं श्रुत्वा राजा संजातकौतुकः । प्रातः स्वसचिवैः सार्धं गत्वा हृष्टोथ दृष्टवान् ||४३५||
अत्राङ्गस्य प्रहारोयं मद्दत्त इति वादिनः । तस्याग्रे राजपुरुषाः शशंसुर्निजविक्रमम् ||४३६||
न्यक्कृत्य स्वीकृतो राज्ञा तदा तद्रञ्जनोद्यतः । अचूचुदत्पर्वगुप्तो देवगुप्ताभिधं सुतम् ||४३७||
पार्थस्य निहतस्याङ्गे सोक्षिपत्क्षुरिकां ततः । रञ्जितो येन भूपालो जातहासोभवच्चिरम् ||४३८||
डामरैर्लुण्ठितो देशः प्रणाशे चक्रवर्मणः । उत्थाप्य पापान्कायस्थांस्तेन भूयोपि दण्डितः ||४३९||
संप्रेरितः कुसचिवैः शस्त्राभ्यासं चकार सः । पाटयन्क्षुरिकाघातैः कोटवीस्तन[1]कोटरम् ||४४०||
गर्भिणीनां च जठरं गर्भान्द्रष्टुमपाटयत् । काठिन्यस्य परीक्षार्थमङ्गं कर्मकृतामपि ||४४१||
प्रतिग्रहाग्रहाद्वाराद्यद्वा वधभयाद्द्विजाः[1] । प्रत्यगृह्णन्नग्रहारांस्तस्मादपि नृपाधमात् ||४४२||
क्रूरपापानुरूपेण क्षयरोगेण पार्थिवः । ततोनुबाध्यमानोभूदपर्यन्तव्यथातुरः ||४४३||
व्यथया तस्य तादृश्या प्रजा एव न केवलम् । तुतुषुर्निजशुद्धान्तमहिष्योपि चतुर्दश ||४४४||

---

४२६. [1]) Thus corr. by $A_3$ from $A_1$ तावग्रक्क°. ४३२. [1]) Thus corr. by later hand from $A_1$ निपत्य. ४४०. [1]) Thus corr. by later hand from $A_1$ कोटवी°. ४४२. [1]) Thus corr. by later hand from $A_1$ द्विजः.

अथान्तःपुरदासीभिर्यः कुतश्चिदुपाहृतः । क्षितिपालात्मजातोयमिति प्रख्यापितो मृषा ॥४४५॥
तं शिशुं शूरवर्माख्यं विनिवेश्य नृपासने । हस्ते निक्षिप्य सामन्तसचिवैकाङ्गतन्त्रिणाम् ॥४४६॥
कम्पनाधिपतेर्बद्धद्वेषः कमलवर्धनात् । बिभ्यन्मडवराज्यस्थाड्डामरोत्पाटनक्षमात् ॥४४७॥
आसन्ननिरयप्राप्तिः[1] पितृहा पार्थिवाधमः । भुक्त्वा पञ्चदशाब्दस्य प्रजापुण्यैः क्षयं ययौ ॥४४८॥ चक्रलकम् ॥
पितृघातिसुतो राजा जयस्वामिविरोचनम् । आषाढशुक्लसप्तम्यां शिशुर्द्रष्टुं विनिर्ययौ ॥४४९॥
नवा विरेजे राजश्रीर्बालस्य पृथिवीपतेः । कृपाणवेणिललिता छत्रचामरहासिनी ॥४५०॥
अत्रान्तरे जवायातैश्चारैरावेदितश्रुतः । सामन्तैर्नगरोपान्तं प्राप्तः कमलवर्धनः ॥४५१॥
एकाङ्गतन्त्रिसामन्तस्यालहारकसादिभिः । नगरं प्रविशन्भ्रान्तः समं सैन्यैररुध्यत ॥४५२॥
विरुद्धडामरानीकान्युद्धा मार्गेषु निर्गतः । श्रान्तोप्यसौ वैरिसेनामजयद्विक्रमोर्जितः ॥४५३॥
सहस्रमश्ववाराणां विद्राव्य तुरगैर्मितैः । राजधानीमसंरुद्धः प्रविवेश ततः क्षणात् ॥४५४॥
तं लब्धजयमाकर्ण्य सैन्यैस्त्यक्तं पलायितैः । एकाकिनं क्वाप्यनयज्जननी शिशुभूपतिम् ॥४५५॥
प्राक्कर्मभिर्मोहितो वा प्रेरितो वा कुमन्त्रिभिः । नाभूत्सिंहासनारूढो मूढः कमलवर्धनः ॥४५६॥
तदानीं स्वगृहान्यातो राज्यकामोन्यवासरे । संघट्टयन्द्विजान्सर्वानचूचुददनीतिवित् ॥४५७॥
प्रौढं शक्तं च कुरुत क्ष्मापं कंचित्स्वदेशजम् । मामेव कुर्युः सामर्थ्यादिति मूढः स चिन्तयन् ॥४५८॥
एकाकिनीं रहः क्षीवां लब्ध्वा दुर्लभयोषितम् । अप्रौढोनुपभुज्यान्यदिने दूत्यार्थयेत यः ॥४५९॥
विभूतिं रभसावाप्तां यश्च संत्यज्य तत्क्षणम् । नीत्या कामयतेन्येद्युः शोच्यस्ताभ्यां परोस्ति कः ॥४६०॥ युग्मम् ॥
अथोत्पल[2]कुले छिन्ने स्थूलकम्बलवाहिनः । अभूदुक्षनिभा विप्राः समगंसत गोकुले ॥४६१॥
धूमनिर्दग्धकूर्चानां राज्ञस्तांस्तांश्चिकीर्षताम् । राज्यव्यवस्थोपन्यासस्तेषां चिरमवर्धत ॥४६२॥
वैमत्येन मिथस्तेषां नान्यः कोप्यभ्यषिच्यत । कूर्चा[1] आपणनिष्ठ्यूतैः स्वकूर्चष्ठीवनैः परम् ॥४६३॥
राज्यार्हान्वेषिभिर्विप्रैः प्राप्तः[1] स्वस्मृतिकॢप्तये । अवार्यतेष्टकाघातैर्मुग्धः कमलवर्धनः ॥४६४॥
पञ्चशाणि दिनान्येव यावत्तस्थुर्द्विजातयः । काहलाकांस्यतालादिवाद्यकोलाहलाकुलम् ॥४६५॥
उत्पताकध्वजच्छत्रशोभि युग्यार्पितासनम् । अशेषं पारिषद्यानां तावत्तत्रामिलद्बलम् ॥४६६॥ युग्मम् ॥
स्वपत्नीं बन्धकीभूतामिवान्यवशवर्तिनीम् । वीक्ष्य राजश्रियं शोचन्नासीत्कमलवर्धनः ॥४६७॥
पितृघातिक्षुत्सज्ञपुत्रराज्यार्थिनी ततः । प्राहिणोद्राजपुरुषान्पार्श्वं प्रायोपवेशिनाम् ॥४६८॥
विश्वावर्तपुरग्रामे वीरदेवाभिधस्य यः । कुटुम्बिनः कामदेवनामा सूनुरजायत ॥४६९॥
स शिक्षिताक्षरो लब्ध्वा मेरुवर्धनमन्दिरे । बालाध्यापकतां स्नानशीलादिगुणभूषितः ॥४७०॥
क्रमाद्गञ्जाधिकार्यासीदथ तस्यात्मजः शनैः । लेभे गञ्जाधिकारित्वं राज्ञः शंकरवर्मणः ॥४७१॥

---

४४८. [1]) Thus corr. by $A_3$ from $A_1$ °प्राप्तेः. ४४९. [1]) Thus corr. by $A_3$ from $A_1$ अषाडे. ४५१. [1]) श्चारै supplied by $A_3$. ४५७. [1]) Thus $A_1$; $A_3$ संघट्टय. ४५९. [1]) G *sec. manu* अप्रौढो नोपभुक्तेन्यदिने दूत्यार्थयेत्तु यः. ४६१. [1]) $A_3$ अथोत्पल°.—[2]) $A_3$ gloss उत्पलो नाम कल्यपालः तेन चिप्पटजयापीडं स्वकीयं निहत्याभिचारक्रियया स्वकीयभ्रातुःपुत्रः अजितापीडः राज्ये स्थापितः । ततः प्रभृति कल्यपालकुलराज्यं । उन्मत्तावन्तिपर्यन्तं प्राप्य कल्यपालकुलस्य च्छेदः । अत एवोक्तं । उत्पलकुले छिन्ने इति ।. ४६३. [1]) Thus $A_1$; $A_3$ कूर्चभा°. ४६४. [1]) $A_3$ प्राप्तैः. ४६६. [1]) तासनम् supplied by $A_3$ in space left by $A_1$.

यः प्रभाकरदेवोऽपि सुगन्धाच्छन्नकामुकः । लक्ष्म्या सरस्वतीद्वेषादेशविप्लवतोऽथ वा ॥४७२॥
विद्वान्यशस्करो नाम तत्पुत्रोऽत्यन्तदुर्गतः । सख्या फल्गुणकाख्येन समं देशान्तरं गतः ॥४७३॥
सुस्वप्नदर्शनैः पीठदेव्याशीर्भिश्च हर्षुलः । तस्मिन्प्रसङ्गे सोत्साहः प्रत्यावृत्तो निजां भुवम् ॥४७४॥
पितृघातिवधूदूतैर्यातैर्बोधयितुं द्विजान् । मध्ये गृहीतो वाग्मित्वात्प्रविवेश तदन्तिकम् ॥४७५॥ कुलकम् ॥
दृष्ट्वैव तं दैववशादेकमत्यस्पृशो द्विजाः । ध्वनिं राजायमेवास्त्वित्युच्चकैरुदचारयन् ॥४७६॥
अथाभ्यषिच्यत क्षिप्रं विप्रैरेत्य यशस्करः । क्ष्माधृतिप्रौढसामर्थ्यैः सानुमानिव तोयदैः ॥४७७॥
दग्धं वेणुवनं परस्परमहासंघर्षजेनाग्निना तन्मूलोद्धृतिरम्भसा क्षणधृतोद्रेकेण संपादिता ।
वात्यावेगविपाटितं विटपिनं प्राप्तं कुतश्चिद्दृढां रूढिं नेतुमहो महाद्रिकुहरे धात्रा न किं सूत्रितम् ॥४७८॥
भृत्यप्रेरणया वंशं पार्थजः स्वं न चेद्दहेत् । तत्पुत्रोत्पाटनं कुर्यान्न चेत्कमलवर्धनः ॥४७९॥
अनुच्चकुलजातस्य दारिद्र्यस्याटतः क्षितिम् । तद्यशस्करदेवस्य राज्यप्राप्तिः कथं भवेत् ॥४८०॥
पद्भ्यां व्रजन्निरनुगो ददृशे जनेन यस्तत्क्षणं निखिललोकसमानमूर्तिः ।
साम्राज्यरम्यममुमीक्षितुमास्त नारीदृङ्नीरजस्तबकितो नरनाथमार्गः ॥४८१॥
नृपतिवसतिं प्रत्यागच्छन्यशस्करभूपतिः पुरमृगदृशामाशीर्मध्ये वचोऽपि विवक्षितम् ।
स्तिमितवलितापाङ्गं शृण्वन्निमीलदहंकृतिः कृतपरिकरस्तज्ज्ञैर्जज्ञे प्रजापरिपालने ॥४८२॥
प्रतिमितरविदीपोद्भासिभृङ्गातपत्रप्रत्ययरजतपात्रात्सूत्रितारात्रिकाश्रीः ।
अथ मुखरितमाशीर्मङ्गलैरङ्गनानामवनिहरिणधामा राजधाम प्रपेदे ॥४८३॥

इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां पञ्चमस्तरङ्गः ।
ऽप्यधिकायां समाशीतौ मासेषु च चतुर्ष्वगात् । कल्यपालाष्टकं रथ्याहतस्त्रीसचिवा अपि ॥

---

४७३. ¹) Thus $A_3$; $A_1$ °तौ गतः. ४७७. ¹) $A_3$ gloss क्ष्मायाः भूमेः धृतिः धारणं तास्मिन् प्रौढं सामर्थ्यं यस्य सः. ४७८. ¹) ह° supplied by $A_3$.—²) $A_3$ दैवेन किं सूचितमित्याशयोऽन्यत्र पाठः. ४८०. ¹) $A_3$ gloss नीचकुलोत्पन्नस्य. ४८१. ¹) Thus $A_3$; $A_1$ °कीर्तिः. ४८३. ¹) $A_3$ glosses भवनौ भूमौ हरिणधामा चन्द्रः and राजासनं.

## ॥ षष्ठस्तरङ्गः ॥

नेदं पर्णसमीरणाशनतपोमाहात्म्यमुक्षोरगौ पश्यैतावत एव संप्रति कृतौ तन्मात्रवृत्ती[1] बहिः[2] । प्रेम्णैवार्धमिदं चराचरगुरोः प्रापेयमात्मस्तुतीरेवं देववधूमुखाच्छ्रुतिसुखाः[3] शृण्वन्त्यपर्णावतात् ॥१॥

इच्छन्नलङ्घनीयत्वमथ कक्ष्यां विलङ्घयन् । प्रतीहारान्द्विजा दूरं वार्यन्तामिति सोन्वशात् ॥२॥

वेत्रिवित्रास्यमानांस्तु तान्कृताञ्जलिरब्रवीत् । राज्यप्रदाश्च पूज्याश्च यूयं नो दैवतैः समाः ॥३॥

राज्यदानाभिमानेन वर्तिष्यत मदोद्धताः । यत्कार्यकालादन्यत्र नागन्तव्यं मदन्तिकम् ॥४॥

तदाकर्ण्याखिलो लोकस्तमधृष्यममन्यत । व्यस्मरत्सहसंवासस्संभूतमपि लाघवम् ॥५॥

खिलीभूताः पूर्वराजव्यवस्थाः प्रतिभाबलात् । उन्नीतवान्स सुकविः प्राक्तविप्रक्रिया इव ॥६॥

अचौराभूत्तथा भूमिर्यथा रात्रौ वणिक्पथाः । अतिष्ठन्विवृतद्वारा मार्गाश्चाविघ्निताध्वगाः ॥७॥

प्रत्यवेक्षापरे तस्मिन्नासीत्सर्वापहारिणाम् । कृष्यध्यक्षत्वमुत्सृज्य कृत्यं नान्यन्नियोगिनाम् ॥८॥

ग्राम्याः कृषिपराधीना नापश्यन्राजमन्दिरम् । विप्राः स्वाध्यायसंसक्ता नाकुर्वञ्शस्त्रधारणम् ॥९॥

न विप्रगुरवः साम गायन्तो मदिरां पपुः । न तापसाः पुत्रदारपशुधान्यान्यढौकयन् ॥१०॥

न मूर्ख[1]गुरवो मत्स्यापूपयागविधायिनः । चक्रिरे स्वकृतैर्ग्रन्थैस्तर्कागमपरीक्षणम् ॥११॥

नादृश्यन्त च गेहिन्यो गुरुदीक्षोत्थदेवताः । कुर्वाणा भर्तृशीलश्रीनिषेधं मूर्धधूननैः ॥१२॥

कार्तान्तिको भिषक्सभ्यो गुरुर्मन्त्री पुरोहितः । दूतः स्थेयो[1] लेखको वा न तदाभूदपण्डितः ॥१३॥

[1]प्रायोपवेशाधिकृतैर्बोधितेन महीभृता । प्रायोपविष्टो निकटं प्रापितः कश्चिदब्रवीत् ॥१४॥

अहमाढ्योभवं पूर्वं वास्तव्योत्र महीपते । निष्किंचनत्वं शनकैरगच्छं दैवयोगतः ॥१५॥

उत्तमर्णैः पीडितस्य प्रवृद्धर्णस्य तस्य मे । निश्चयोभूदृणं छित्वा परिभ्रान्तुं दिगन्तरे ॥१६॥

अथ विक्रीय सर्वस्वमृणं शोधयता मया । महाधनाय वणिजे विक्रीतं निजमन्दिरम् ॥१७॥

भार्यामुद्दिश्य भर्तव्यामेक एव तु वर्जितः । सोपानकूपो विक्रीतान्महतो वेश्मनस्ततः ॥१८॥

निदाघे पुष्पताम्बूलीपर्णाघ्रातिशीतले । न्यस्यद्भिर्मालिकै[1]र्दत्तात्सा जीवेद्भाटकादिति[2] ॥१९॥

ततो दिगन्तराद्भ्रान्त्वा विंशत्या वत्सरैरहम् । लब्धाल्पवित्तः संप्राप्तो जन्मभूमिमिमां पुनः ॥२०॥

अन्विष्यता मया साध्वी स्ववधूर्ददृशेथ सा । विवर्णदेहा जीवन्ती प्रेष्यात्वेनान्यवेश्मसु ॥२१॥

किं दत्तजीविकापि त्वमीदृशीं वृत्तिमाश्रिता । मयेति सा सदुःखेन पृष्टा स्वोदन्तमब्रवीत् ॥२२॥

---

१. [1]) $A_3$ gloss पर्णवातजीविनौ.—[2]) $A_3$ gloss एतौ चराचरगुरुणा बहिः कृतौ इत्यन्वयः.—[3]) Thus $A_1$; $A_3$ °सुखाच्छृण्व°. ११. [1]) Thus corr. by later hand from $A_1$ मूर्खा गु°. १३. [1]) $A_3$ gloss विवादपरिनिर्णेता स्थेयः. १४. [1]) $A_3$ gloss मृतावन-शने प्रायो बाहुल्ये सदृशे त्रिषु इति कोशः. १९. [1]) $A_3$ gloss पौष्पिकैः.—[2]) $A_3$ gloss भाटी इति भाषया । प्रत्यहं वेतनं भाटी.

सोपानकूपं संप्राप्ता त्वयि याते दिगन्तरम् । लगुडैस्ताडयित्वाहं वणिजा तेन वारिता ॥२३॥
तदन्या कास्त मे वृत्तिरित्युक्त्वा विरराम सा । तदाकर्ण्य निमग्नोहमन्तरे शोककोपयोः ॥२४॥
कृतप्रायोपवेशोथ स्थेयैस्तैस्तैः पदे पदे । प्रत्यर्थिनो दत्तजयैः किमप्यस्मि पराजितः ॥२५॥
जडत्वाद्वेद्मि न न्यायं न विक्रीतो मया पुनः । सोपानकूप इत्यस्मिन्नर्थे प्राणा इमे पणः ॥२६॥
सोहं विपद्ये क्षीणार्थो द्वारि शास्तुस्तव ध्रुवम् । वृजिनादस्ति चेद्भीतिर्वस्तु निर्णीयतां स्वयम् ॥२७॥
राजेति तेन विज्ञप्तो दत्त्वा[1] धर्मासनं स्वयम् । संघट्याखिलान्स्थेयानासीत्तत्त्वं विचारयन् ॥२८॥
स्थेयास्तमूचुर्बहुशो विचार्यायं पराजितः । शाठ्यादगणयन्न्यायं दण्ड्यो लिखितदूषकः ॥२९॥
सोपानकूपसहितं विक्रीतं गृहमित्यथ । राजा विक्रयपत्रस्थान्स्वयं वर्णानवाचयत् ॥३०॥
ततोधिगतमित्येव सभ्येषु निगदत्स्वपि । अन्तरात्मा जगादेव नृपतेरर्थिनो जयम् ॥३१॥
मुहूर्तमिव संचिन्त्य राजान्याभिरभूच्चिरम् । कथाभिरतिचित्राभिर्मोहयन्सभ्यमण्डलम् ॥३२॥
कथान्तराले सर्वेभ्यो गृह्णन्रत्नानि वीक्षितुम् । हसन्प्रत्यर्थिनो हस्तादुपादत्ताङ्गुलीयकम् ॥३३॥
क्षणादेवाखिलैः[1] स्थेयमित्थमेवेति सस्मितम् । वचो ब्रुवाणः प्रययौ पादक्षालनकैतवात् ॥३४॥
अभिज्ञानाय तत्रस्थः स वितीर्याङ्गुलीयकम् । भृत्यमेकं वणिग्वेश्म प्राहिणोद्दत्तवाचिकम् ॥३५॥
स वणिग्गणनाध्यक्षं ययाचे साङ्गुलीयकः । यत्राब्दे पत्रमुत्पन्नं गणनापत्रिकां[1] ततः ॥३६॥
निर्णेयं तया कृत्यमस्ति भाण्डपतेरिति । श्रुत्वादाद्गणनाध्यक्षस्तां गृहीताङ्गुलीयकः ॥३७॥
दीनाराणां[1] दशशतीं तस्यां भूभृदवाचयत् । व्ययमध्येधिकरणलेखकाय[2] समर्पिताम् ॥३८॥
तस्मै मितधनार्हाय बहुमूल्यार्पणान्नृपः । रेफे[2] सकारं वणिजा कारितं निश्चिकाय सः ॥३९॥
सभायां तत्प्रदर्श्याथ पृष्ट्वा दत्त्वाभयं च तम् । आनीय लेखकं सभ्यान्संजातप्रत्ययान्व्यधात् ॥४०॥
सभ्यैरभ्यर्च्यमानेन राज्ञा सार्धं वणिग्गृहम् । वितीर्णमर्थिने देशात्प्रत्यर्थी च प्रवासितः ॥४१॥
कृताह्निकं भोक्तुकामं तं दिनान्ते च भूपतिम् । अकालावेदनाद्भिभ्यत्क्षत्ता जातु व्यजिज्ञपत् ॥४२॥
देवः समाप्तकृत्योद्य विज्ञप्तौ श्वस्तव क्षणः । इत्युक्त्वा दर्शने प्राणत्यागी विप्रो बहिः स्थितः ॥४३॥
दत्तप्रवेशादेशोथ रुद्धस्वेदेन भूभुजा । द्विजः प्रविष्टः पृष्टश्च[1] तीव्रार्तिरिदमब्रवीत् ॥४४॥
सुवर्णरूपकशतं भ्रान्त्वा देशान्तरेर्जितम् । गृहीत्वा श्रुतसौराज्यः स्वदेशमहमागतः ॥४५॥
त्वयि राजनि निश्चौरैरध्वभिर्विशतः सुखम् । क्षोभवल्लवणोत्से मे दिनान्ते श्राम्यतः स्थितिः ॥४६॥
दीर्घाध्वलङ्घनक्रान्तस्तत्राहमकुतोभयः । मार्गारामतरोर्मूले त्रियामामत्यवाहयम् ॥४७॥
वेतनं ग्रन्थिबद्धं तदुत्थास्योरपतन्मम[1] । अरघट्टे समीपस्थे कक्षयोगादलक्षिते ॥४८॥

---

२८. 1) Thus A; G has *sec. manu* the conjectural reading गत्वा. ३४. 1) Thus $A_3$; $A_1$ °दिवा°. ३६. 1) $A_2$ gloss गणत् वतूर इति भाषया वही इति मध्यदेशीयाः. ३८. 1) $A_2$ gloss दीनाराः द्यार् इति कश्मीरभाषया.—2) $A_2$ gloss यत्सन्निधौ अर्थिप्रत्यर्थिनावुभौ भूमेः क्रयविक्रयं कुरुतः । येन चावस्तरमानं क्रियते सोधिकरणलेखकः । अवस्तरपरिमाणलेखपत्रकारी सराफ इति भाषया. ३९. 1) $A_2$ gloss अधिकरणलेखकाय दीनारदशशतीदानात्.—2) $A_2$ gloss गृहविक्रयिणा वणिजा विक्रयपत्रे लिखितं । सोपानकूपरहितं विक्रीतं गृहमिति । ततस्तेन लुब्धेन वणिजा प्रत्यर्थिना रेफविषये सकारः कारितः अधिकरणलेखकहस्तेन । उत्कोचं दीनारदशशत्याख्यं दत्त्वा कूपसहितं गृहं विक्रीतमिति लेखितं । ततोनन्तरं राज्ञानुमितं लेखपत्रविचारणार्थं किमर्थं दीनारदशशती । बहुमूल्यत्वादिति । रेफस्य सकार एव कुतोनेन इति ॥. ४१. 1) $A_3$ gloss विज्ञप्तिकराय. ४२. 1) $A_3$ gloss द्वारस्थः. ४४. 1) Thus corr. by later hand from $A_1$ पृष्टोथ. ४८. 1) Thus corr. by $A_3$ from $A_1$ °तद्रुवि.

तस्मिन्दुरवरोहेतिनिर्वेद्युत्वाज्जहद्वपुः । सोहं हारितसर्वस्वः शोचन्नुद्धश्चिरं जनैः ॥४९॥
एकोध्यवसितः कोपि साहसे[1] पुरुषोब्रवीत् । मह्यं दापितवित्तार्य[2] किं ददासीति मां ततः ॥५०॥
तमस्म्यवोचं विवशस्तस्यार्थस्यास्मि कः प्रभुः । तुभ्यं यद्रोचते मह्यं तत्तो दीयतां त्वया ॥५१॥
अवरुह्याधिरूढोथ रूपकेभ्यो द्वयं मम । स प्रादात्स्पष्टमेवाष्टानवतिं स्वीचकार तु ॥५२॥
व्यवहारा वचोनिष्ठा[1] एव राज्ञि यशस्करे । निन्दन्व्यवस्थां तां लोकैर्न्यक्कृतोस्मीति वादिभिः ॥५३॥
उपचारोक्तिसारल्य[1]च्छलहारितवेतनः । सोहं जहाम्यसून्द्वारे दुर्व्यवस्थापकस्य ते ॥५४॥
पुंसस्तस्य स राज्ञाथ पृष्टः प्रकृतिनामनी । वदनप्रत्यभिज्ञै[1]व ममास्तीत्यभ्यभाषत ॥५५॥
प्रातस्तवेप्सितावाप्तिं करिष्यामीति भूभुजा । प्रतिज्ञाय कथंचित्स स्वपार्श्वे कारितोशनम् ॥५६॥
लवणोत्सौकसां दूताहूतानां स विशां ततः । स्थितमन्तर्द्विजोन्येद्युस्तं राज्ञेदर्शयन्नरम् ॥५७॥
पृष्टः स राज्ञा विप्रेण यथैवोक्तं तथैव तत् । सर्वमूचे वाक्प्रतिष्ठं व्यवहारमुदीरयन् ॥५८॥
सत्यवाक्पारतन्त्र्यस्य वस्तुवृत्तस्य चान्तरम् । अलक्षयन्तः प्रैक्षन्त दोलाकुलधियो धराम् ॥५९॥
धर्मासनस्थो राजाथ रूपकाणामभाषत । तमष्टानवतेः पात्रं विप्रमन्यं द्वयस्य तु ॥६०॥
अनुयोक्तृज्जगादापि दुःसंचिन्त्या महात्मनः । धर्मस्याधर्ममुद्वृत्तं निहन्तुं धावतो गतिः ॥६१॥
सायं हुताशं प्रविशन्नम्मयं[1] चेन्दुमण्डलम् । स्वतेजसा संविभजन्प्रदीपैर्ज्योत्स्नयाप्यसौ ॥६२॥
तदुत्थाय यथा भानुर्निहन्ति ध्वान्तमुद्धतम् । अनन्यकर्मा धर्मोयं तथाधर्मं व्यपोहति ॥६३॥ युग्मम् ॥
दुःसंलक्ष्यस्तु धर्मोसावधर्मं बाधतेञ्जसा । तिष्ठन्नित्य[1]मधिष्ठाय दाह्यं काष्ठमिवानलः ॥६४॥
ददाति यद्भवान्दत्तां तदित्याद्युक्तमुज्झतः । तुभ्यं रोचत इत्यादि वचोस्य निसृतं तदा ॥६५॥
रुचितास्य बभूवाष्टानवतिर्लोभिनोस्य ताम् । नादादस्मायरुचितं रूपकाणां द्वयं ददत् ॥६६॥
इत्यादिसूक्ष्मेक्षिकया धर्माधर्मान्तरं विदन् । प्रत्यवेक्षापरः क्ष्माभृद्व्यधात्कृतयुगोदयम् ॥६७॥
इत्थं जनं स विनयन्हास्योभून्निजदुर्नयैः । परस्योपदिशन्पथ्यमपथ्याशीव रोगहृत् ॥६८॥
श्रोत्रियेणैव[1] तेनापि मृदम्भःशौचशालिना । डोम्बोच्छिष्टभुजो भृत्याः[2] पार्श्वान्न परिजह्रिरे ॥६९॥
यथोत्तरं संश्रितार्थैरन्योन्यं पृष्ठपातिभिः । नगराधिकृतै[1]श्चक्रे चतुर्भिः सोर्थ[2]संग्रहम् ॥७०॥
लेभिरे निधनं तस्मात्सत्यंकारात्पदातयः । श्रीरणेश्वरपीठाग्रन्यस्तखड्गादपि प्रभोः ॥७१॥
स ज्येष्ठे भ्रातरि मृते तथाभून्मुदित[1]श्चिरम् । तदुपज्ञं[2] यथा प्राज्ञैस्तत्रोत्प्रैक्षि[3] रसा[4]र्पणम् ॥७२॥
नीतस्य मण्डलेशत्वं वेलावित्तस्य[1] भूभुजा । देवीः कामयमानस्य चक्रे गजनिमीलिका[2] ॥७३॥
रागाच्छुद्धान्तकान्तानां मूर्धानमधिरोपिता । लड्डा नामाभवत्तस्य वेश्या वैवश्यकारिणी ॥७४॥

---

५०. 1) Thus $A_1$; $A_3$ °सी.—2) $A_3$ दापितलब्धाय. ५३. 1) $A_3$ gloss वचसि वाक्य एव निष्ठा येषां । न तु न्यायविचारणे इति व्यवस्थां निन्दन्. ५४. 1) Thus corr. by later hand from $A_1$ °सारल्येच्छ°. ५५. 1) $A_4$ gloss वदनमेव केवलं तदीयं विदितं मम न तु नामप्रकृती इत्यर्थः. ६२. 1) $A_3$ gloss आप्यं. ६४. 1) Thus corr. by $A_3$ from $A_1$ तिष्ठनिष्टम°. ६९. 1) Thus $A_1$; $A_3$ °येणैव —2) Thus corr. by $A_3$ from $A_1$ °भृत्यान्पा°. ७०. 1) $A_2$ gloss हट्टरक्षिभिः.—2) Thus corr. by $A_3$ from $A_1$ सोथसं°. ७२. 1) Thus $A_3$; $A_1$ °भूदुदित°.—2) Thus corr. by $A_3$ from $A_1$ तदुपज्ञै; Edd. °ज्ञैर्यथा.—3) Emended; A R G °त्प्रोक्षि.—4) $A_3$ gloss भुवः. ७३. 1) $A_3$ gloss एतन्नामकसचिवस्य; एतन्नामक struck out again.—2) $A_3$ gloss उपेक्षा कृता इत्यर्थः.

अवकाशः सुवृत्तानां हृदयान्तर्न योषिताम् । इतीव विहितौ धात्रा सुवृत्तौ तद्बहिः कुचौ ।।७५।।
उत्तमाधमसंसक्तौ जानन्सदृशवृत्तिताम् । नारीणां शुचिबाह्यानामङ्गनात्वं[1] व्यधाद्विधिः ।।७६।।
सा लालितापि राज्ञा यद्बह्वा ललितलोचना । चण्डालयामिकै[1]र्नागायामिनीषु समागमम् ।।७७।। युग्मम् ।।
सुभगंकरणं किंचिच्चण्डालतरुणेऽभवत् । तं यत्प्रभावविवशा भेजे राजवधूरपि ।।७८।।
सा वा चण्डालकुलजा स वा कार्मण[1]कर्मवित् । अन्यथा संगमः[2] किं स्यादसंभाव्यस्तथाविधः ।।७९।।
सोऽभूत्केन प्रकारेण तया सह समागतः । इत्येष लेभे वृत्तान्तः प्रतिभेदं न कुत्रचित् ।।८०।।
केवलं प्रत्यभात्तां[1]दृक्पापिनोः प्रेम तत्तयोः । दृग्व्यापारेक्षणात्क्षिप्रं हाडिनाम्नोऽधिकारिणः ।।८१।।
तमर्थमथ तथ्येन वीक्ष्य प्रणिधिभिर्नृपः । प्रायश्चित्तानुचरणक्षामः कृष्णाजिनं दधौ ।।८२।।
कुपितोऽपि स यन्नैनां न्यवधी[1]द्रागमोहितः । तेनैवागात्पुरोभागिवितर्कातङ्कपात्रताम् ।।८३।।
डोम्बोच्छिष्टानुगासङ्गादशुचित्वं यशस्करे । संक्रान्तं कुष्ठिसंस्पर्शात्कुष्ठं दुःखमिवाभवत् ।।८४।।
सामान्येन सता कैश्चित्सदृशैः शुभकर्मभिः । जन्मान्तरीयैः साम्राज्यं मया प्रापीति चिन्तयन् ।।८५।।
साम्राज्यकामो नृपतिर्भा[1]विष्वपि स जन्मसु । युक्त्या प्रादान्निरातङ्कां राज्यलक्ष्मीं द्विजन्मने ।।८६।।
भूभुजा दानशौण्डेन पैतृके स्थण्डिले कृतः[1] । छात्राणामार्यदेश्या[2]नां तेन विद्यार्थिनां मठः ।।८७।।
मठाधिपतये तत्र छत्रचामरहासिनीम् । स नरेन्द्रश्रियं[1] प्रादादङ्गान्तःपुरवर्जिताम् ।।८८।।
वितस्तापुलिने राजा नानोपकरणान्वितान् । ब्राह्मणेभ्यः सोऽग्रहारान्[1]पञ्चपञ्चाशतं ददौ ।।८९।।
अथ जातोदरव्याधिर्मज्ज्ञातो नायमित्यसौ । जानन्संग्रामदेवाख्यं परिवर्ज्य निजात्[1]मजम् ।।९०।।
समर्प्य सचिवैकाङ्गसामन्तानभ्यषेचयत् । रामदेवात्मजं राज्ये वर्णटं प्रपितृव्यजम् ।।९१।।
शक्ये राज्यादपाकर्तुं शिशावनभिषेचिते । निराशाः समपद्यन्त तदा राज्यजिहीर्षवः ।।९२।।
स पर्वगुप्तकौटिल्यप्रयुक्तेरुदयोन्मुखः । विपाकका[1]लस्तत्राह्नि भङ्गोन्मुख इवाभवत् ।।९३।।
राजधानीस्थितस्यापि वर्णटो राज्यदायिनः । आरोग्यवार्तयाप्यासीन्मुमूर्षोरनिरीक्षकः ।।९४।।
ततः सानुशयो राजा ताम्यन्प्रैर्यत मन्त्रिभिः । राज्यं संग्रामदेवा[1]य दातुमाश्वासकारिभिः ।।९५।।
राजाज्ञया निशामेकां बद्धोट्टस्तम्भमण्डपात् । बहिर्दत्तार्गलात्प्रातर्वर्णटो निरवर्त्स्यत[1] ।।९६।।
भयात्प्रजागराद्वापि तद्भृत्यानां विवेकिनाम् । आस्थानमण्डपं प्राप पायुक्षालनभूमिताम् ।।९७।।
एकाहराजपुरुषस्तं[1]दासिं विजयेश्वरे । व्रीडाड्डिवप्रसादाख्यो राजबीजी समर्पयत् ।।९८।।
अथाभिषिच्य संग्रामदेवं तीव्रीभवद्व्यथः । स राजधान्या निर्गत्य मर्तुं निजमठं ययौ ।।९९।।
धीः केशश्मश्रुवपने शिरःशाटकवर्जनम् । काषायग्रहणोद्वेगः शस्त्रत्यागग्रहश्च यः ।।१००।।
राजभृत्यैः प्रतिज्ञातः स तस्मिन्निश्चितक्षये । जीवत्येव कृतज्ञत्वव्यञ्जकैः परिवर्जितः ।।१०१।। युग्मम् ।।

७६. [1]) Thus corr. by $A_3$; reading of $A_1$ illegible; $A_3$ in margin °ङ्गनाख्यां. ७७. [1]) $A_2$ gloss प्रहरजागरूकेण. ७९. [1]) $A_3$ gloss वशीकरण.—[2]) Thus corr. by $A_3$ from $A_1$ सम्भवः. ८१. [1]) Thus corr. by $A_3$ from $A_1$ °भार्याद्दृ°. ८३. [1]) $A_3$ न्यग्रहींद्र°. ८६. [1]) Thus $A_3$; $A_1$ °कामोपि नृपो भा°. ८७. [1]) Thus $A_3$; $A_1$ स्थितः.—[2]) Thus corr. by $A_3$ from $A_1$ °देशानां. ८८. [1]) Thus $A_3$; $A_1$ नरेन्द्राश्रितां. ८९. [1]) $A_3$ gloss काष्ठिलतीर्थविषये यशस्करस्याग्रहारा अभवन्नित्याहः लोकाः. ९०. [1]) Thus corr. by $A_3$ from $A_1$ नृपा°. ९३. [1]) Thus corr. by $A_3$ from $A_1$ विपाकपाकस्त°. ९५. [1]) Thus corr. by $A_3$ from $A_1$ °देवस्य. ९६. [1]) Thus $A_1$; $A_3$ निरवास्यत; perhaps to be emended निरवत्स्यत. ९८. [1]) $A_4$ gloss एकाहं राजभूतस्य वर्णटस्य पुरुषो भृत्यः.

द्वे सहस्रे सुवर्णस्य सार्धे बद्ध्वा[1] पटाञ्चले । यो निर्जगाम राजासौ मुमूर्षुर्निजमन्दिरात् ॥१०२॥
पञ्चभिः पर्वगुप्ताद्यैर्यौतकं तस्य मन्त्रिभिः । हृतं सजीवितस्यैव विभक्तान्योन्यमग्रतः ॥१०३॥ युग्मम् ॥
विवेष्टमानः शय्यायां व्याधिदग्धान्तरो नृपः । तिष्ठन्मठाङ्गनकुटीगर्भे ध्वान्तान्धकारिते ॥१०४॥
अजातसंविद्दुःशोषे पश्यन्द्रोहपराग्निजान् । प्राणैरहानि द्वित्राणि न यदा निरमुच्यत ॥१०५॥
तदा सुहृद्बन्धुभृत्यवेलावित्तैः कृतत्वरैः । जिहीर्षुभिश्च साम्राज्यं विषं दत्त्वा विपादितः ॥१०६॥
अवरोधवधूमध्यात्सती तं पतिमन्वगात् । एका त्रैलोक्यदेव्येव स्वप्रभेव विरोचनम् ॥१०७॥
वर्णाश्रमप्रत्यवेक्षाबद्धकक्ष्यः क्षितीश्वरः । चक्रभान्वाभिधं चक्रमेलके[1] द्विजतापसम् ॥१०८॥
कृतात्याचारमालोक्य[1] राजा धर्मवशंवदः । निजग्राह श्वपादेन ललाटतटमङ्कयन् ॥१०९॥
तन्मातुलेन[1] तद्द्रोषाद्वीरनाथेन योगिना । सांधिविग्रहिकेणाथ[2] स स्वेनैव न्यगृह्यत ॥११०॥
पूर्वाचार्यप्रभावेण स्वमाहात्म्याधिरोपणम् । प्रख्यापयद्भिर्गुरुभिः श्रद्धयेति यदुच्यते ॥१११॥
तत्ख्यापितैव सन्माहात्म्य विपन्न इति श्रुतिः । दीर्घव्याधिहते तस्मिन्नुपपत्तिः कथं भवेत् ॥११२॥
अथामयान्तरेणाभूत्सा वार्तेत्युच्यते यदि । वर्णटाद्यभिशापोऽपि तदायात्वत्र हेतुताम् ॥११३॥
भुक्तैश्वर्यो नव[1] समाश्चतुर्विंशे स हायने । मासि भाद्रपदे कृष्णतृतीयस्यां व्यपद्यत ॥११४॥
पितामहीं शिशो[1]र्गोप्त्रीं विनिवेश्य नृपासने । भूभटाद्यैः समं प्राभूत्[2]पर्वगुप्तोऽथ पञ्चभिः ॥११५॥
क्रमात्समं पितामह्या तान्व्यापाद्येतरान्बली । एकः स एवमाक्रान्तः[1] प्रबभूव नृपास्पदे ॥११६॥
स पार्थिवत्वमन्त्रित्वमिश्रया चेष्टया स्फुरन्[1] । राजा राजानकश्चे[2]ति मिश्रामेवं धियं व्यधात् ॥११७॥
सेवमानः स्वयं बालभूपं भोज्यार्पणादिभिः । ऋजूनां प्रत्यभात्पर्वगुप्तो द्रोहबहिष्कृतः ॥११८॥
यान्द्रोहभीरून्संभाव्य संविभेजे यशस्करः । तस्य तत्तनयोच्छेदे त एवासन्प्रयोजकाः ॥११९॥
करभाङ्कुरहापिङ्गे श्मश्रुणि क्षितिपालवत् । स ददौ कुङ्कुमालेपं वर्चःशाड्वलविस्तृते ॥१२०॥
बिभ्यदेकाङ्गसंघातात्प्रकटोत्पाटनाक्षमः । प्रमापणाय प्रायुङ्क्त शिशोः कर्माभिचारिकम् ॥१२१॥
न्याय्यं ते सान्वयस्यास्ति राज्यं चैत्रादिवासरे । अन्यथाचरतो नाशः क्षिप्रं वंशायुषोर्भवेत् ॥१२२॥
इतीमामपि यामिन्यां श्रुतवान्भूतभारतीम् । अभिचारस्य वन्ध्यत्वं निध्यायाधिकशङ्कितः ॥१२३॥
एकाङ्गेभ्यो विभिन्नेभ्यो बिभ्यदुद्भिन्नसंभ्रमः । उदताम्यत्तथा चिन्तालुप्तसंविद्दिवानिशम् ॥१२४॥
यथा महाहिमापातनिःसंचारजने दिने । अकस्मात्संभृतबलो राजधानीं निरुद्धवान् ॥१२५॥
विरोधकारिणं बुद्धाभिधेन सह सूनुना । निर्द्रोहमाहवे हत्वा मन्त्रिणं रामवर्धनम् ॥१२६॥

---

१०२. 1) Thus corr. by later hand from $A_1$ बद्धा. १०८. 1) $A_3$ gloss, partly effaced: चक्र…जने…क्ररक्षा ..चक्रमेल …बे… . १०९. 1) $A_3$ gloss अतिक्रान्ताचारम्. ११०. 1) $A_4$ gloss चक्रभानुद्विजमातुलेन.—2) $A_3$ gloss सन्धिविग्रहभुद्धान्तमुख्यकर्माधिकारी सान्धिविग्राहिकः कटकपालः. ११४. 1) नव supplied by $A_3$ in space left by $A_1$. ११५. 1) $A_4$ gloss सङ्ग्रामदेवस्य.—2) $A_2$ gloss प्रभुरभूत्. ११६. 1) Emended with G Edd.; $A_1$ एव साक्रान्तिः which $A_3$ alters to एवमाक्रान्तिः. ११७. 1) Thus $A_3$; $A_1$ स्फुटम्.—2) $A_2$ gloss राजा पार्थिवः राजानकः मन्त्री । राज्ञः अनः प्राणनं । जीवनं धरित्रीरक्षणलक्षणं । यस्मात्स्वः राजानः अनन्यसप्राणने । राजान एव राजानकः । स्वार्थे कः यद्वा अत्र लिङ्गात् । कः साद्दृश्ये देवदत्त इव देवदत्तक इतिवत् । यथा राजा-नकमपेक्षते राजा ॥ यद्वा राज्ञः अनः प्राण इव राजानक इत्यर्थः॥. प्राणनं विना देहस्थितिर्नास्ति । तथा धीसचिवं मन्त्रिणं विना पार्थिवानां स्वयं कार्याकार्यविवेककौशलातिशयो न सम्भवेदिति । राजा-

पित्र्येण वेलावित्तेन प्राभृतार्थमुपाहताम्[1] । गले पुष्पस्रजं बद्ध्वा पातितं पार्थिवासनात् ॥१२७॥
स तं वक्राङ्घ्रिसंग्रामं हतमन्यत्र मन्दिरे । पातयित्वा वितस्तान्तः कण्ठबद्धशिलं निशि ॥१२८॥
चतुर्विंशस्य वर्षस्य दशम्यां कृष्णफाल्गुने । पापः सखड्गकवचो न्यविक्षत नृपासने ॥१२९॥ चक्कलकम्[1] ॥
पारेविशोकं[1] दिविराज्ज्ञातस्याभिनवाभिधात् । सूनुः संग्रामगुप्तस्य स तदा[2] पार्थिवोभवत् ॥१३०॥
केचित्तं प्रत्य[1]वस्थानं ये पुरा प्रतिजज्ञिरे । ते सर्व एव तद्भीताः प्रातरेव प्रणेमिरे ॥१३१॥
पार्थिवैकाङ्गसामन्तमन्त्रिकायस्थतन्त्रिणाम् । तद्भीत्या द्रोहवृत्तीनां द्रोहाद्वैत[1]मदृश्यत ॥१३२॥
एकाङ्गस्य तदास्थाने सुख्याभिजनजन्मनः । प्रमादान्मदनादित्यनाम्नो ढक्का व्यदीर्यत ॥१३३॥
हतांशुकेन भूभर्त्रा कुपितेन खलीकृतः । स निकृत्तकचश्मश्रुस्तपस्वी समपद्यत ॥१३४॥
तादृशस्य पुनस्तस्य सस्त्रीपुत्रत्वमीयुषः । अद्याप्यभिजने जाता वसन्ति त्रिपुरेश्वरे ॥१३५॥
कुर्वता पर्वगुप्तेन भूभृता द्रविणार्जनम् । प्रापिताः पुनरुत्साहं प्रजारोगा नियोगिनः ॥१३६॥
व्यधत्त स्कन्दभवनविहारवसुधान्तिके । पर्वगुप्तेश्वरं सोपि वृजिनार्जितया श्रिया ॥१३७॥
श्रीयशस्करभूभर्तृशुद्धान्तस्य विशुद्धधीः । कौलीनं[1]मलुनादे[2]का गौरीव नृपसुन्दरी ॥१३८॥
सुचिराङ्कुरितप्रीतेः पर्वगुप्तस्य याकरोत् । समागमार्थिनो युक्त्या वञ्चनामुचितां सती ॥१३९॥
इदं यशस्करस्वामिसुरवेश्मार्धनिर्मितम् । त्यक्त्वा पत्युर्विपन्नस्य कृत्वा निर्माण[1]पूरणम् ॥१४०॥
अमोघमस्मिं[1] नियमाद्विधास्यामि त्वदीप्सितम् । स ह्युपच्छन्दयन्नेवं सुभ्रुवाभिहितस्तया ॥१४१॥
अथ प्रवृद्धगर्वेण तत्स्वल्पैरेव वासरैः । संपूर्णतां सुरगृहं गमितं तेन भूभुजा ॥१४२॥
सा यागज्वलने राजललना पीतसर्पिषि । पूर्णाहुत्या समं साध्वी जुहाव सहसा तनुम् ॥१४३॥
उपर्यस्या निरस्तासोः पुष्टाः कुसुमवृष्टयः । तत्काङ्क्षिणस्तु न्यपतन्नवर्णमुखरा गिरः ॥१४४॥
सुदीर्घसाहसारम्भचिन्तासंरम्भशोषितः । पर्वगुप्तो बभूवाथ तृष्णामयपथातिथिः ॥१४५॥
व्याध्याधिप्रशमायासैर्ज्ञात्वाप्यस्थायिनीं स्थितिम् । मूढाः प्ररूढिं नोज्झन्ति द्रोहश्रीलोभमोहिताः ॥१४६॥
आशङ्क्य तादृङ्निष्ठोपि सोकुण्ठैः प्राक्तनैः शुभैः । कैश्चित्सुरेश्वरीक्षेत्रे परासुः समपद्यत ॥१४७॥
षड्विंशवत्सराषाढबहुलेह्नि त्रयोदशे । द्रोहार्जितेन नृपतिः स राज्येन व्ययुज्यत ॥१४८॥
अतीन्द्रियायां परलोकवृत्ताविहैव तीव्राशुभपाकशंसी ।
दृश्येत नाशो यदि नाम नाशु न कः कुकृत्येन यतेत भूत्यै ॥१४९॥
क्षेमगुप्ताभिधानोभूदथ राजा तदात्मजः । आसवासेवनोत्सिक्तवित्ततारुण्यसंज्वरः ॥१५०॥
सोभूत्स्वभावदुर्वृत्तो नितरां दुर्जनाश्रयात् । कृष्णक्षपाक्षणो घोरमेघान्ध इव भीतिकृत् ॥१५१॥
स्वतुल्यवेशा[1]लंकाराः शतं लालितका[2] नृपम् । तं फल्गुणप्रभृतयो दुराचाराः सिषेविरे ॥१५२॥
द्यूतासवाङ्गनासेवाव्यसनेपि स पार्थिवः । विटनिर्लुण्ठ्यमानोपि नाभूल्लक्ष्मीबहिष्कृतः ॥१५३॥

---

१२७. [1]) Thus corr. by $A_3$ from $A_1$ °हतम्. १२९. [1]) चक्कलकम् added by $A_3$. १३०. [1]) Thus corr. by $A_3$ from $A_1$ विशोके.—[2]) Thus $A_3$; $A_1$ तथा. १३१. [1]) Thus $A_1$; $A_3$ केचित्तत्प्रत्य°. १३२. [1]) Thus $A_3$; $A_1$ द्रोहाद्वै°. १३८. [1]) $A_3$ gloss कौलीनं लोकनिन्दां.—[2]) Thus corr. by $A_3$ from $A_1$ °मधुनाद°. १४०. [1]) Thus corr. by $A_3$ from $A_1$ निर्वाण°. १४१. [1]) $A_3$ gloss अस्मिंनि निपातः अहमित्यर्थे. १५२. [1]) Thus $A_1$; $A_3$ °वेशा°.—[2]) $A_3$ gloss पदातयः.

रागी मधुप्रणयवान्विहिताक्षसक्तिर्यः सख्यमेति मधुपैर्हतकोशसारैः ।
पद्मे प्रयाति दिनमात्रमपि प्रसक्तिं श्रीस्तत्र चेत्किमिव तन्न कुतूहलाय ॥१५४।
विटाः प्रविष्टा हृदयं जिष्णुजा वामनादयः । पिशाचस्येव रुचितामशुचिं तस्य चक्रिरे ॥१५५॥
परोपहासकुशलः परनारीरतिप्रियः । परायत्ताशयस्तस्थौ पार्थिवोनर्थतत्परः ॥१५६॥
ष्ठीवनं श्मश्रुमालासु गालयः श्रोत्रपालिषु[1] । तेन क्षिप्ताः प्रतीक्ष्याणां करोटीषु च टक्कराः ॥१५७॥
कटिसंघटनैर्नार्यो[1] मृगव्यज्ञा[2] वनाटनैः । विटाश्चाश्लीलरटनैर्वाल्लभ्यं तस्य लेभिरे ॥१५८॥
पुंश्चलीजाल्मवैधेयबालकद्रोग्धृनिर्भरा । समभूदप्रवेशार्हा राजपर्षन्मनस्विनाम् ॥१५९॥
जिष्णुपुत्रैः क्षेमगुप्तक्ष्माभृद्यन्त्रपुत्रकः । चारणत्वगुणाकृष्टः किं न धूर्तैरनर्त्यत[1] ॥१६०॥
तस्य कङ्कणवर्षोसीत्यभिधानं विधाय ते । तोषिताश्चासकृच्चक्रुर्दोष्णोः कङ्कणवर्षिताम् ॥१६१॥
निर्दोषदोषाविष्कारे नववस्तुप्रदर्शने । अधृष्यटक्कराधाने प्रसादः प्रापि तैर्नृपात् ॥१६२॥
संलक्ष्यकुचकक्ष्यान्ताः कृत्वा निजवधूः पुरः । रागी राजा गृहानीतो द्यूते तैर्निर्धनः कृतः ॥१६३॥
संभोगाभग्नसौभाग्यकृतस्पर्धैः परस्परम् । संभुज्यैता भवान्वक्तु विशेषमिति चोदितः ॥१६४॥
उपभोगं स्वभार्याणां निर्लज्जैस्तैः स कारितः । का हृद्येति च रत्यन्ते पृष्टोभीष्टधनप्रदः ॥१६५॥ युग्मम्[1] ॥
तस्य लालितकेष्वास्तां मूढौ संभोगढौकने । मात्रोश्चारित्ररक्षित्वाद्भिक्षाकौ[1] हरिधूर्जटी ॥१६६॥
नीत्वा नर्मकथाङ्गतां निजवपुर्मुञ्चन्ति मानोन्नतिं संदूष्य स्वयमङ्गनाः शुचितया त्यक्तं कुलं कुर्वते ।
सौख्यं घ्नन्ति सुदीर्घसेवनसमासक्त्या यदर्थं श्रमः प्रत्याख्याय तदेव वेश्मि न विटैः किं प्रार्थ्यते सेवया॥१६७॥
यशस्करस्य भूत्वापि सचिवो भट्टफल्गुणः । तस्याभूदनुजीव्यन्ते धिग्भोगाभ्यासवासनाम् ॥१६८॥
फल्गुणस्वामिमुख्यानां प्रतिष्ठानां विधायिनः । तस्योपदेशो भूभर्त्रा पर्यहास्यसकृद्रहः ॥१६९॥
गृह्णन्विद्वेषितां[1] हन्तुं टक्करादि बलात्ततः । वृद्धो रक्कः कम्पनेशो दुर्गोष्ठीमध्यगोभवत् ॥१७०॥
तीक्ष्णाक्षेपे संप्रविष्टं हन्तुं संग्रामडामरम् । श्रीजयेन्द्रविहारं स निर्घृणो निरदाहयत् ॥१७१॥
सुगतप्रतिमारीतिं हृत्वा दग्धात्ततो[1]खिलात् । जरद्देवगृहेभ्यश्च संगृह्य[2] प्रावसंचयम् ॥१७२॥
सुरप्रतिष्ठया दार्ढ्यं मूढः स्वयशसो विदन् । नगरापणवीथ्यन्तः क्षेमगौरीश्वरं व्यधात् ॥१७३॥
एकः प्रयात्युपरमं द्रविणं तदीयं हृत्वा[1]परः प्रसभमुद्वहति प्रमोदम् ।
नो वेत्ति तत्स्वनिधने परकोशगामि धिग्वासनामसममोहकृतान्धकाराम् ॥१७४॥
त्यागिना क्षेमगुप्तेन भुक्त्यर्थं खशभूभुजे[1] । हृत्वा विहारान्निर्दग्धान्ग्रामाः षट्त्रिंशदर्पिताः ॥१७५॥
दुर्गाणां लोहरादीनां शास्ता शतमखोपमः[1] । नृपतिः सिंहराजाख्यस्तस्मै स्वां तनयां ददौ ॥१७६॥
स तस्यां शाहिदौहित्र्यां दिद्दायां सक्तमानसः । दिद्दाक्षेम इति ख्यातिं ययौ लज्जावहां नृपः ॥१७७॥
मातामहेन भूभर्तुर्वध्वास्तस्या व्यधीयत । श्रीभीमशाहि[1]नोदात्तप्रासादो भीमकेशवः ॥१७८॥

१५७. [1]) Corr. by $A_3$ from $A_1$ °पालयः. १५८. [1]) Corr. by $A_3$ from $A_1$ °घटनान्न°.—[2]) मृगव्यज्ञा supplied by $A_3$ in space left by $A_1$. १६०. [1]) Corr. by $A_3$ from $A_1$ °नन्द्यत. १६५. [1]) युग्मम् supplied by $A_3$. १६६ [1]) Thus corr. by $A_2$ : $A_1$ °रक्षित्वा भिक्षा°. १७०. [1]) Thus $A_3$ ; $A_1$ °न्विशेषतां. १७२. [1]) Thus $A_3$ ; $A_1$ दग्ध्वा ततो.—[2]) Thus $A_3$ ; $A_1$ सङ्ग्राह्य. १७४. [1]) Thus corr. by $A_3$ from $A_1$ कृत्वा. १७५. [1]) $A_4$ gloss सिंहराजाय. १७६. [1]) Thus corr. by $A_3$ from $A_1$ शतमुखो°. १७८. [1]) Thus $A_3$ ; $A_1$ श्रीभूमिस्वामिनो°. Cf. *Albêrûnî's Indica* ( trans. by Sachau), ii. 13.

चन्द्रलेखाभिधां कन्यां राज्ञे[1] दत्तवताभवत् । फल्गुणद्वारपतिना समं दिद्दा समत्सरा ॥१७९॥
गुरूपदेशः सुमहान्कुन्तविद्याभ्रमस्तथा । तस्य निर्वहणाद्दर्प्यार्ढ्भुजो[1] हास्यतां ययौ ॥१८०॥
अमोघपतनान्प्रा[1]सा[2]न्योग्यान्संग्रामकर्मसु । शृगालमृगयासक्तया स हि श्लाघ्यानमन्यत[3] ॥१८१॥
तं वृतं वागुरावाहिडोम्बाटवि[1]कपेटकैः । पर्यटन्त श्वभिः सार्धमपश्यन्सततं जनाः ॥१८२॥
तस्य दामोदरारण्यलल्यानशिमिकादिषु । स्थानेषु क्रोष्टुमृगयारसिकस्य वयोगमत् ॥१८३॥
अथ कृष्णचतुर्दश्यां स कुर्वन्मृगयां नृपः । ज्वालामपश्यत्क्रोशन्त्याः शृगाल्या निर्गतां मुखात् ॥१८४॥
तदालोकनसंजातसन्त्रासाकम्पितस्ततः[1] । लूतामयज्वरेणाभूत्परीतो मृत्युहेतुना ॥१८५॥
मर्तुं ययौ च वाराहक्षेत्रं यत्र विधायकः । श्रीकण्ठक्षेममठयोरासीद्धुष्कपुरान्तिके ॥१८६॥
मसूरविदलाकारलूताक्लिन्नकलेवरः । पौषे चाब्दे चतुस्त्रिंशे नवमेऽह्नि[1] सिते मृतः ॥१८७॥
क्षेमगुप्तात्मजः क्ष्माभृदभिमन्युरभूत्ततः । शिशुर्निस्त्रिंशधर्मिण्या दिद्दादेव्यानुपालितः ॥१८८॥
सं[1]धिविग्रहशुद्धान्तमुख्यकर्माधिकारिणः । निःसाध्वसं राजवधूमवन्ध्यशयनां व्यधुः ॥१८९॥
अभिमन्यौ क्षितिं रक्षत्यकस्मादेव दारुणः । तुङ्गेश्वरापणोपान्तादुज्जगाम हुताशनः ॥१९०॥
वर्धनस्वामिपार्श्वस्थभिक्षुकीपारकावधिः । वेतालसूत्रपातस्थान्स ददाह महागृहान् ॥१९१॥
डोम्बचण्डालसंस्पृष्टभूपसंपर्कदूषितान् । दग्ध्वा महागृहान्वह्निर्भुवः शुद्धिमिवाकरोत् ॥१९२॥
रक्षित्री क्ष्मापतेर्माता स्त्रीस्वभावाद्विमूढधीः । सारासारविचारेण लोलकर्णी न पस्पृशे ॥१९३॥
राज्ञः सुतार्पणाद्बद्धवैरा तस्थौ पुरा यतः । पतिवत्न्येव[1] सा सार्धं फल्गुणेनाभ्यमन्त्रिणा ॥१९४॥
पत्यौ[1] मृते सपत्नीनां दृष्ट्वानुमरणं[2] ततः । दम्भेनानुमुमूर्षन्तीमनुमेने स तां द्रुतम् ॥१९५॥
निषिषेधानुबन्धात्तु सानुतापां चितान्तिके । कृपालुर्मरणादेताममात्यो नरवाहनः ॥१९६॥
अतो निसर्गपिशुनो रक्तस्तां मन्युदूषिताम् । फल्गुणाद्राज्यहरणाशङ्कां राज्ञीमजिग्रहत् ॥१९७॥
विरागशंसिभिर्लिङ्गैस्तां ज्ञात्वा विषमाशयाम् । समन्युं साखिलामात्यां फल्गुणोप्यास्त शङ्कितः ॥१९८॥
स हि सर्वाधिकारस्थः सर्वस्याक्षिगतोभवत् । दीप्यमानोधिकं मन्त्र[1]शौर्योत्साहादिभिर्गुणैः ॥१९९॥
अस्थीनि क्षेमगुप्तस्य गृहीत्वा जाह्नवीं गते । पुत्रे कर्दमराजाख्ये प्रबलैरन्वितो बलैः ॥२००॥
तत्प्रत्यागमपर्यन्तं पर्णोत्से स्थातुमुद्यतः । अविश्वसन्नृपगृहे फल्गुणो वैरिशङ्कितः ॥२०१॥
निर्गत्य नगराद्यावत्सभाण्डागारिसैनिकः । काष्ठवाटान्तिकं प्राप[1] तावद्रक्कादिचोदिता ॥२०२॥
आकलय्य द्रुतं दिद्दा संत्यज्य प्रार्थनादिकम् । पृष्ठे प्रत्युत याष्टीकांस्तस्य हन्तुं व्यसर्जयत् ॥२०३॥
नवावमानखिन्नः स मिलितानन्तसैनिकः । प्रत्यावृत्य ततो मानी वाराहं क्षेत्रमाययौ ॥२०४॥
श्रुत्वा समेतसैन्यं तं प्रत्यायातं प्रतापिनम् । आस्कन्दशङ्किनी दिद्दा सामात्या समकम्पत ॥२०५॥

१७९. 1) Thus corr. by later hand from $A_1$ राज्ञो. १८०. 1) Thus corr. by $A_3$ from $A_1$ °ह्र्यर्भू°. १८१. 1) Thus corr. by $A_3$ from $A_1$ °भ्रतिमान्भ्रा°.—2) $A_3$ कुन्तान्.—3) Thus corr. by $A_3$ from $A_1$ भ्राघ्यामम°. १८२. 1) Thus corr. by $A_3$ from $A_1$ °टविटपे°. १८५. 1) Thus corr. by $A_3$ from $A_1$ °तस्थितिः. १८७. 1) Thus corr. by $A_3$ from $A_1$ नवमेव्हे. १८९. 1) Thus corr. by $A_3$ from $A_1$ मन्तिवि°. १९४. 1) $A_4$ gloss सभर्तृकैव सती. १९५. 1) Thus corr. by $A_3$ from $A_1$ पत्न्यो.—2) $A_1$ °नुसरणं. १९९. 1) Thus $A_3$; $A_1$ तन्त्र°. २०२. 1) Thus corr. by later hand from $A_1$ प्राप्त्वा; $A_3$ gloss प्राप्त इत्यर्थः.

तस्मिन्क्षेत्रे गतं शान्तं विलप्य स्वामिनं चिरम् । वराहपादसविधे तेन[1] शस्त्रं समर्पितम् ॥२०६॥
द्रोहसंभावनापापं शस्त्रत्यागेन मन्त्रिणा । स्वस्य संमार्जितं तेन राजमातुश्च साध्वसम् ॥२०७॥
युक्तायुक्तविचारबाह्यमनसः सेवा महद्वैशसं क्रुद्धेस्मिन्प्रतिकारकर्म गहनद्रोहापवादावहम् ।
येन न्यूनगुणेदृशोपकरणीभावोपि तस्मै परं कोपः कोपि विवेकिनः समुचितः शास्त्राय शस्त्राय वा ॥२०८॥
पर्णोत्समेव शनकैः ससैन्ये फल्गुणे गते । विगताध्यापका बाला इवामोदन्त मन्त्रिणः ॥२०९॥
योगक्षेमौ चिन्तयन्ती क्षेमगुप्तवधूरपि । अनिशं प्रजजागार स्वयं कण्टकपाटने ॥२१०॥ 210
राज्यप्रार्थी पर्वगुप्तो मन्त्रिणौ कोशपीथिनौ । अजिग्रहत्करौ पूर्वं पुत्र्योर्यौ[1] छोजभूभटौ ॥२११॥
तयोः प्रजातौ तनयौ ख्यातौ महिमपाटलौ । अवर्धिषातां यौ राजमन्दिरे राजपुत्रवत् ॥२१२॥
तौ तत्रावस्थितावेव तत्कालं राज्यलालसौ । संमन्त्र्य समगंसातामुद्दामैर्हि[1]म्मकादिभिः ॥२१३॥
बलिनौ तावबलया राज्यापास्तौ नृपास्पदात् । समन्यू स्वगृहादास्तां यावत्कृतगतागतौ ॥२१४॥
एकतः पृष्ठतः प्रादान्महिम्नो निर्गतस्य सा । निर्वासनाय याष्टीकांस्तावत्प्रकटवैकृता ॥२१५॥ 215
शक्तिसेना[1]भिधानस्य श्वशुरस्य निवेशनम् । प्रविवेश स तज्ज्ञात्वा तं ते तत्रापि दुद्रुवुः ॥२१६॥
शक्तिसेनेन याष्टीकाः सान्त्विता नाचलन्यदा । तदा भीतस्य जामातुर्व्यक्तं प्रादात्स संश्रयम् ॥२१७॥
तं[1] लब्धसंश्रयं प्राप हिम्मको मुकुलस्तथा । एरमन्तकनामा च परिहासपुराश्रयः ॥२१८॥
श्रीमानुदयगुप्ताख्योप्यमृताकरनन्दनः । ललितादित्यपुरजा यशोधरमुखा अपि ॥२१९॥
एकैके ते[1] मिथः सैन्यैर्भुवनक्षोभकारिणः । संभूय चक्रुर्द्वैराज्यं महिम्नः पक्षमाश्रिताः ॥२२०॥ 220
तस्मिन्महाभये दिद्दापक्षं मन्त्री सबान्धवः । एक एव तु तत्याज नाद्रोही नरवाहनः ॥२२१॥
प्रवर्धमानपृतना योद्धुं बद्धोद्यमास्ततः । पद्मस्वाम्यन्तिकं प्रापुर्दीप्यमानायुधा द्विषः ॥२२२॥
अथ भूरमठे दिद्दा विसृज्यात्मजमाकुला । आपच्छान्तिक्षमांस्तांस्तानुपायान्समचिन्तयत् ॥२२३॥
ललितादित्यपुरजान्द्विजान्स्वर्णेन भूरिणा । तूर्णं स्वीकृत्य विदधे रिपूणां संघभेदनम् ॥२२४॥
एकाक्षेपेखिलैः कोपो विधेय इति वादिभिः । महिम्नः पीतकोशैस्तैः संधिर्देव्या समं कृतः ॥२२५॥ 225
गोष्पदोल्लङ्घने यस्याः शक्तिर्नाज्ञायि केनचित् । वायुपुत्रायितं पङ्ग्वा तया संवाब्धिलङ्घने ॥२२६॥
यत्संग्रहो रत्नमहौषधीनां करोति सर्वव्यसनावसानम् ।
त्यागेन तद्यस्य भवेन्नमोस्तु चित्रप्रभावाय धनाय[1] तस्मै ॥२२७॥
उत्कोचकाञ्चनादानेष्वुद्यां ध्यायन्त्युपक्रियाम् । दिद्दा यशोधरादिभ्यः कम्पनादि समार्पयत्[1] ॥२२८॥
अभिचारं महिम्नश्च कृतवत्या मितैर्दिनैः । मण्डलेखण्डिताज्ञत्वं रण्डाया[1]ः समजृम्भत ॥२२९॥
कदाचित्थक्कना[1]ख्यस्य शाहीशस्योपरि क्रुधा । सत्रा स्ववंशजैर्यात्रां कम्पनाधिपतिर्ददौ ॥२३०॥ 230
तद्देशं निम्नगाशैलदुर्गं प्रविशता जवात् । अखण्डशक्तिना तेन बलादग्राहि थक्कनः ॥२३१॥

२०६. ¹) Corr. by later hand from $A_1$ तत्र. २११. ¹) Thus corr. by later hand from $A_1$ यो. २१३. ¹) Emended; A R G °हिमका°. २१६. ¹) Thus corr. by $A_3$ from $A_1$ शक्तिसेवाभि°. २१८. ¹) Thus corr. by $A_3$ from $A_1$ तैर्लब्ध°; $A_3$ gloss तं महिमानं. २२०. ¹) Thus $A_3$; $A_1$ एकैकं तं. २२७. ¹) Thus corr. by $A_2$ from $A_1$ नमोस्तु. २२८. ¹) Emended; A R G समर्पयत्. २२९. ¹) Thus $A_3$; $A_1$ विहायाः. Cf. vi. 260. २३०. ¹) Thus corr. by $A_1$ from °चिट्टकना°.

स कृतप्रणतेस्तस्य करमादाय भूपतेः । अभिषेकाम्बुभिश्चक्रे श्रीलतां[1]प्यायनं पुनः ॥२३२॥
लब्धप्रवेशै[1]ः समये तस्मिन्नक्कादिभिः खलैः । कम्पनाधिपतौ राज्ञ्या विद्वेषोग्राहि मूढया ॥२३३॥
उर्वीपतेश्च स्फटिकाश्मनश्च शीलेज्झितस्त्रीहृदयस्य चान्तः ।
असंनिधानात्सततस्थितीनामन्यो[1]परागः कुरुते प्रवेशम् ॥२३४॥
स्वचित्तसंवादि वचो वदन्तो धूर्ता वितन्वन्ति मनःप्रवेशम् ।
पृथग्जनानां गणिकावधूनां विटाः प्रभूणामपि गर्भचेटाः ॥२३५॥
द्रोग्धायं थक्कनं रक्षन्धनादायीति पैशुनम् । तथ्यमेव तदीयं सा स्वयं[1]वादादमन्यत ॥२३६॥
अथ स्ववसतिं प्राप्ते कम्पनेशे जयोर्जिते । याटीकान्व्यसृजद्दिड्डा स्फुटं निर्वासनोद्यता ॥२३७॥
तदाक्षेपं समाकर्ण्य स्मरन्तः कोशसंविदम्[1] । ते हिम्मकेरमन्ताद्याः पूर्ववद्विक्रियां ययुः ॥२३८॥
नरवाहनमुख्यास्तु[1] राज्ञीपक्षं न तत्यजुः । विभेदं पूर्ववत्प्रापदेवं निजबलं पुनः ॥२३९॥
प्रविष्टेषु ततः कोपात्पुरं शुभधरादिषु । भट्टारकामठे दिड्डा भूयः पुत्रं व्यसर्जयत् ॥२४०॥
दत्तार्गले नृपगृहे स्थितां तां दैवमोहिताः । ते तदैव विना पुत्रं विमूढा नोदपा[1]टयन् ॥२४१॥
राज्ञ्याः संजघटे लोकः परस्मिन्नेव वासरे । यद्बलेन तदा स्थैर्यं सा किंचित्समदर्शयत् ॥२४२॥
जयाभट्टारिकापार्श्वाद्यावच्छूरमठान्तिकम् । व्याप्य स्थितैर्द्विषत्सैन्यैरथ प्रववृते रणः ॥२४३॥
राजधानीं राजसैन्ये प्रविष्टे त्रासविद्रुते । सिंहद्वारे घटाबन्धमेकाङ्गाः समदर्शयन् ॥२४४॥
शरीरनिरपेक्षास्ते भीतं संस्तभ्य तद्बल   । अधावन्[1]द्विषां सैन्यं चेलुः[2] केचिच्च शात्रवः ॥२४५॥
तस्मिन्नवसरे राजकुलभट्टः समाययौ । तूर्यघोषैर्द्विषां सैन्यं भिन्दन्नानन्दयन्निजम्[1] ॥२४६॥
तस्मिन्प्राप्ते द्विषां सैन्यं विननाश विनश्वरम्[1] । न द्रोहाविनयं जातु सहन्ते शस्त्रदेवताः ॥२४७॥
त्रो[1]टयत्यायसान्बन्धान्स्फोटयत्युपलानिति । यः ख्यातिमवहत्त[2]थ्यां हिम्मको भीमविक्रमः ॥२४८॥
तस्यासिना राजकुलभट्टदेहार्धपातिना । चर्ममात्रं न तुत्रोट कङ्कटस्यातिसंकटे ॥२४९॥
विलोक्य तदसंभाव्यं सैन्ये दैन्यं समाश्रिते । अघानि हिम्मको योधैरवाष्टम्भि[1] यशोधरः ॥२५०॥
तथाप्यासीत्कुरुन्संख्ये य एर[1]मन्तकः क्षणम् । स भग्नासिश्च्युतो वाहाज्जीवग्राहमगृह्यत ॥२५१॥
नाज्ञौ नैरेष्यताधातुं यः श्रीमान्राजबान्धवः । जगामोदयगुप्तः स क्वापि त्यक्त्वा महाहवम् ॥२५२॥
इत्थं लब्धजया राज्ञी तत्क्षणान्न्यग्रहीद्द्विषः । यशोधरं शुभधरं मुकुलं च सबान्धवम् ॥२५३॥
काश्मीरिकाणां[1] यः श्राद्धशुल्को[2]च्छेत्ता गया[3]न्तरे । सोऽप्येरमन्तकः शूरः परिहा[4]सपुराश्रयः ॥२५४॥
बद्ध्वा महाशिलां कण्ठे वितस्ताम्भसि पातितः । स्वदुर्नयफलं देव्याः प्रकोपेनानुभावितः ॥२५५॥

२३२. 1) $A_2$ gloss श्रीः एव लता. २३३. 1) Thus corr. by later hand from $A_1$ °वेशाः; R G as above. २३४. 1) Thus corr. by $A_3$ from $A_1$ °न्योन्यरागः. २३६. 1) Thus $A_1$; $A_3$ स्वसंवाद°. २३८. 1) $A_3$ gloss एकाक्षेपेखिलैः कोपो विधेय इत्येवंरूपं. २३९. 1) मुख्या supplied by $A_3$ in space left by $A_1$. २४१. 1) Thus corr. by $A_3$ from $A_1$ नोपपाट°. २४५. 1) Thus corr. by $A_3$ from $A_1$ अधावद्वि°.—2) The words from चेलुः to सैन्यं in the following verse are omitted by $A_1$ and supplied in margin by $A_3$. २४६. 1) $A_3$ °न्निजान्. २४७. 1) Thus $A_1$; $A_3$ G R विनेश्वरम्. २४८. 1) Thus corr. by later hand from $A_1$ तोट°.—2) तिमवहत्त supplied by $A_3$ in space left by $A_1$. २५०. 1) Emended with C; A R G °रवष्टम्भि. २५१. 1) Thus A; R G ऐर°. २५४. 1) Thus corr. by $A_3$ from $A_1$ काश्मीरका°.—2) Thus corr. by $A_2$ from $A_1$ °शुल्कोच्छेता.—3) Thus corr. by $A_3$ from $A_1$ गमान्तरे.—4) Thus corr. by $A_3$ from $A_1$ °हार°.

ये सप्तसप्तताद्वर्षादा गोपालनृपात्पुरा । अभिमन्युं यावदासन्षोडशानां महीभुजाम् ॥२५६॥

वर्षषष्टिं प्रतापायुःश्रीहरा द्रोहवृत्तयः । ते क्षिप्रं मन्त्रिणः सर्वे सान्ववायाः सहानुगाः ॥२५७॥

भीमभ्रूभङ्गमात्रेण दिद्दादेव्या सकोपया । आसन्निःशेषतां नीता दुर्गयेव महासुराः ॥२५८॥ तिलकम् ॥

अभवन्विहिता राज्ञ्या तानुत्पाद्य मदोद्धतान् । रक्कादयः कम्पनादिकर्मस्थानाधिकारिणः ॥२५९॥

इत्थं मन्त्रिप्रकाण्डः स रण्डामाखण्डलोपमाम् । अखण्डमण्डलां चक्रे निर्द्रोहो नरवाहनः ॥२६०॥

राज्ञी कृतज्ञभावेन सापि मन्त्रिसभान्तरे । तमाजुहाव निर्द्रोहं स्वयं राजानकाख्यया ॥२६१॥

लुप्ते क्षुत्त्राप निष्पन्नभोजनेस्मिन्नभुक्त सा । हृष्टे जहर्ष निर्विण्णे निर्विवेदानुकूल्यतः ॥२६२॥

आरोग्यान्वेषणं शिक्षाप्रार्थनां गृहवर्तिनः । सात्मवस्तुविसर्गं च नाकृत्वा तस्य पिप्रिये ॥२६३॥

अभूतां युग्यवाहस्य कुय्यनाम्नः सुतौ पुरा । यौ सिन्धुभुय्यौ तज्ज्यायान्सिन्धुर्लालितकः किल ॥२६४॥

पर्वगुप्तगृहे भूत्वा गञ्जाध्यक्षे स्थिते[2] क्रमात् । लब्ध्वा गञ्जाधिकारित्वं तस्या राज्ञ्याः शनैरभूत् ॥२६५॥

रूढ्या तयैव गञ्जेशो नवायासविधायकः[1] । कर्मस्थानस्य निर्माता सिन्धुगञ्जाभिधस्य यः ॥२६६॥

प्रायशो हतराज्यस्ते वर्तते नरवाहनः । इति नेयधियं राज्ञीं सोभ्यधत्त दुराशयः ॥२६७॥

सा तथेत्यब्रवीद्यावत्तावत्स्नेहगा स जातुचित् । मन्त्री तां प्रार्थयामास भोक्तुं निजगृहागमम् ॥२६८॥

सा सानुगां तत्र यातां ध्रुवं त्वामेव भन्त्स्यति[1] । इत्युक्ता सिन्धुनापृच्छत्तत्कर्तव्यं भयाकुला ॥२६९॥

अनुक्त्वैव प्रचलिता राजधानीमलक्षिता । स्त्रीधर्मिण्यस्मि जातेति पश्चाद्वार्तां व्यसर्जयत् ॥२७०॥

संप्रवृत्तोपचारायां[1] गतायां तत्पथात्तथा[2] । राज्ञ्यां नाशममात्यस्य प्रीतिः संविद्य सा ययौ ॥२७१॥

तयोस्ततः प्रभृत्येव निष्कृष्टस्नेहयोः कृतम् । चाक्रिकैरतिरूक्षत्वं तिलपिण्याकयोरिव ॥२७२॥

कुलिशं सर्वलोहानामम्भसां शैलसेतवः । अभेद्याः प्रतिभाव्यन्ते न किंचिदसतां पुनः ॥२७३॥

ये बालादपि संमूढाः प्राज्ञाः सुरगुरोरपि । तेषां न विघ्नः के[1] तावन्निर्माणपरमाणवः ॥२७४॥

विश्वासोज्झितधीः शिशून्कलयते काकोन्यदीयान्निजान्हंसः क्षीरपयोविभागकुशलस्त्रस्यत्यसाराद्गुनात् ।
लोकावेक्षणतीक्ष्णधीः खलगिरं जानाति सत्यां नृपो धिग्वैदग्ध्यविमुग्धताव्यतिकरस्पृष्टं विधानं विधेः ॥२७५॥

मूढा चरणहीना सा श्रुतिबाह्यतया तया । वैधेयविप्रप्रकृतिरिव प्रायाद्विगर्ह्यताम् ॥२७६ ॥

उद्वेजितस्तया शश्वत्तथा स नरवाहनः । यथा विमाननोत्त्रस्तः स्वयं तत्याज जीवितम् ॥२७७॥

प्रकुप्यत्यप्रतीकार्ये स्वतेजस्तप्तचेतसाम् । शरणं मरणं त्यक्त्वा किमिवान्यद्यशोर्थिनाम् ॥२७८॥

शशिहीनेव रजनी सत्यत्यक्तेव भारती । विरराज न राजश्रीर्नरवाहनवर्जिता ॥२७९॥

सा क्रौर्याभ्यासविषमा हन्तुं विततविक्रमान् । संग्रामडामरसुतान्लमीपस्थानचिन्तयत् ॥२८०॥

निजमुच्चरघोषं ते तद्भयेन विनिर्गताः । कय्यकद्वारपत्यादीन्कृतारब्धीन्व्यपादयन् ॥२८१॥

उत्पिञ्जभीतया राज्ञ्या त्यक्त्वा परिभवत्रपाम् । ते यत्नात्समघट्टन्त मानः स्वार्थार्थिनां कुतः ॥२८२॥

---

२६५. [1]) $A_3$ gloss खनौ सुरागृहे गञ्जा भण्डागारे पुमानथेति कोशः.—[2]) Thus A R G; perhaps, to be emended with G *sec. manu* गञ्जाध्यक्षस्ततः क्रमात्. २६६. [1]) Thus emended according to conjectural reading (*sec. manu*) in G; A R G (*prima manu*) नवायामवि°. २६९. [1]) Emended; $A_1$ बंत्स्यति; G P बत्स्यति; R भर्त्स्यति; C वत्स्यति. २७१. [1]) $A_3$ °वृत्ताप°.—[2]) $A_3$ तन्मृतात्तथा. २७४. [1]) Thus $A_3$; $A_1$ किन्ताव°.

स्थानेश्वरादिभिर्मुख्यैर्डामरैरितरैः समम् । ते भीताः पुरतस्तस्याः पुनरेत्य जजृम्भिरे ॥२८३॥
अथ तद्भीतया राज्या रक्के प्रमयमागते । आनीतः फल्गुणो भूयो वीरार्थिन्या निजान्तिकम् ॥२८४॥
राजकार्याणि कुर्वाणः स भूयः शस्त्रमग्रहीत् । न्यस्तशस्त्रोपि यत्सत्यं दुस्त्यजा भोगवासना ॥२८५॥
महिमा राजपुर्यादिजयिनस्तस्य पश्चिमः । अद्भुतो वृद्धबन्धक्या अवरुद्ध इवाभवत् ॥२८६॥
अभूदुदयराजस्य देवीभ्रातुरतिप्रियः । यः सहायोक्षपटले जयगुप्ताभिधः कुधीः ॥२८७॥
अन्येधिकारिणस्तेन सहिताः क्रूरवृत्तयः । कश्मीरेषु व्यधुर्लुण्ठिं दुष्कृतैस्तदुपार्जितैः ॥२८८॥
दौःशील्यभाजो मातुश्च पाप्मभिर्विधुरीकृतः । अभिमन्युः क्षणे तस्मिन्क्षयरोगेण पस्पृशे ॥२८९॥
पण्डितः पुण्डरीकाक्षो विद्वत्पुत्रैरुपस्कृतः । कृतश्रुतः स वैदुष्यतारुण्याभ्यां विदिद्युते ॥२९०॥
तथा विशुद्धप्रकृतेस्तस्य दुष्कृतसंगमः । शोषाधायी शिरीषस्य रवितापइवाभवत् ॥२९१॥
अर्धमानः[1] प्रजाचन्द्रस्तृतीयस्यां स कार्तिके । शुक्लेष्टचत्वारिंशाब्दे ग्रस्तो नियतिराहुणा ॥२९२॥
तत्पुत्रो नन्दिगुप्तस्तु बालश्चक्रे निजासने । वृद्धस्तनयशोकस्तु दिद्दाया हृदये पदम् ॥२९३॥
सा शोकपिहितक्रौर्या तस्थौ प्रशमशीतला । रविरलशलाकेव ध्वान्तच्छन्नोष्मवैकृता ॥२९४॥
ततः प्रभृत्यद्भुताभिस्तस्या धर्मप्रवृत्तिभिः । कुकर्मभिरुपोढापि लक्ष्मीः प्राप्ता पवित्रताम् ॥२९५॥
नगराधिपतिर्भुट्यः सिन्धुभ्राता शुभाशयः । तदीयधर्मचर्यायां बभूव परिपोषकः ॥२९६॥
सा तेनोत्पादितानर्घजनरागा गतैनसा । ततः प्रभृत्यभूद्देवी सर्वलोकस्य संमता ॥२९७॥
राज्ञः स सचिवः सत्यं दुष्प्रापो लुप्तचण्डिमा । कुर्याद्यः सुखसेव्यत्वं हेमन्त इव भास्वतः ॥२९८॥
सा निर्मात्री विपन्नस्य सूनोः सुकृतवृद्धये । अभिमन्युस्वामिनोभूदभिमन्युपुरस्य च ॥२९९॥
अथ दिद्दापुरोपेतो दिद्दास्वामी तया कृतः । मठश्च मध्यदेशीयलाटशौडोत्रं[1]संश्रयः ॥३००॥
भर्तुः कङ्कणवर्षस्य पुण्योत्कर्षाभिवृद्धये । चकार कङ्कणपुरं रमणी स्वर्णवर्षिणी ॥३०१॥
श्वेतशैलमयं चान्यं सा दिद्दास्वामिनं व्यधात् । धवलं चरणोद्भूतगङ्गाम्भःप्लवनैरिव ॥३०२॥
चक्रे काश्मीरिकाणां च देशिकानां समाश्रयः[1] । तयात्युच्चचतुःशालो विहारश्चारुसंपदा ॥३०३॥
श्रीसिंहस्वामिनं नाम्ना सिंहराजस्य सा पितुः । मठं च विदधे स्थित्यै[1] देशिकानां द्विजन्मनाम् ॥३०४॥
मठप्रतिष्ठावैकुण्ठनिर्माणाद्यैः स्वकर्मभिः । तयातिपावनश्चक्रे वितस्तासिन्धुसंगमः ॥३०५॥
तेषु तेषु प्रदेशेषु किमुच्चैर्भूरिभिः शुभैः[1] । सा प्रतिष्ठा व्यरचयच्चतुःषष्टिमिति श्रुतिः ॥ ३०६॥
जीर्णोद्धारकृता देव्या त्रुटप्राकारमण्डलाः । प्रायः सुरगृहाः सर्वे शिलाप्रावृताः कृताः ॥३०७॥
क्रीडाचङ्क्रमणे राज्याः पङ्गुर्विग्रहवाहिनी । वल्गाभिधा वैवधिकी वल्गामठमकारयत् ॥३०८॥
तीर्थासेवनमौनभागपि तिमिः सक्तः स्वकुल्याशने घाताशान्प्रसते शिखी घनपयोमात्राशनोप्यन्वहम् । विश्वस्ताञ्जलचारिणः प्रकटितध्यानोपि भुङ्क्ते बकः सत्कर्मान्तरणेपि दोषविकृतौ[1] न प्रत्ययः पापिनाम् ॥३०९॥
चर्षणी[1] वर्षमात्रेण शान्तशोका बभूव सा । भोगोत्सुकार्भके तस्मिन्नमरि व्यभिचारकृत् ॥३१०॥

२९२. [1]) Thus A R G; Edd. वर्धमानः, found also *sec. manu* in R G. $A_2$ gloss अर्धवयाः खण्डबिम्बश्च. ३००. [1]) Thus A R G. ३०३. [1]) Thus corr. by $A_3$ from $A_1$ जनाश्र°. ३०४. [1]) स्थित्यै omitted by $A_1$ and supplied in margin by $A_2$. ३०६. [1]) Thus $A_3$; $A_1$ श्रुताः. ३०९. [1]) Thus $A_1$; $A_3$ °विरतौ. ३१०. [1]) $A_2$ gloss चर्षणी असती इत्यर्थः.

वर्षे एकान्नपञ्चाशे¹ नीतः पक्षे सिते क्षयम् | स मार्गशीर्षद्वादश्याममार्गव्यभया तया ||३११||
पौत्रस्त्रिभुवनो नाम मार्गशीर्षे¹ सितेऽहनि | पञ्चमेऽप्येकपञ्चाशे वर्षे तद्वत्तया हतः ||३१२||
अथ मृत्युपथे राज्यनाम्नि स्वैरं निवेशितः | क्रूरया चरमः पौत्रो भीमगुप्ताभिधस्तया ||३१३||
तस्मिन्नवसरे वृद्धः फल्गुणोऽपि व्यपद्यत | निगूढक्रौर्यदौःशील्या दिष्ट्या यद्वैरवादभूत् ||३१४||
बभूव साथ¹ सुस्पष्टदुष्टचेष्टाशतोत्कटा | भ्रष्टवक्त्रपटा मत्तदन्तिमूर्तिरिवोत्कटा ||३१५||
महाभिजनजातानामपि हा धिङ्निसर्गतः | सरितामिव नारीणां वृत्तिर्निम्नानुसारिणी ||३१६||
स्रोतोऽधिराज्यमधिगम्य विराजमानात्सिन्धोः प्रसूय कमलाल्पपयोनिकेते |
जाते सरस्यविरतं जलजे प्रसक्ता नार्यो महाभिजनजा अपि नीचभोग्याः ||३१७||
खशस्य वह्निवासा¹ख्यपर्णोत्सग्रामजन्मनः | बाणस्य सूनुस्तुङ्गाख्योऽविशन्महिषपालकः ||३१८||
प्रविष्टो जातु कश्मीरांल्लेख¹हारककर्मणा | सुगन्धिसीहप्रकटनागाहयिकषण्मुखैः ||३१९||
पञ्चभिर्भ्रातृभिः सार्धं सांधि¹विग्रहिकान्तिके² | देव्या दृग्गोचरं यातो हृदयावर्जकोऽभवत् ||३२०|| तिलकम् ||
रहःप्रवेशितो दूत्या स भाव्यर्थबलाद्युवा | संभुक्तभूरिजाराया अपि तस्याः प्रियोऽभवत् ||३२१||
तुङ्गानुरागिणी राज्ञी पापा लज्जोज्झिता ततः | रसदानेन वैमुख्यभाजं भुट्यमघातयत् ||३२२||
धिङ्निर्विचारान्कुपतीन्येषां विषमचेतसाम् | फलभून्या स्तुतिस्तोषे दोषे प्राणधनक्षयः ||३२३||
रक्कजो देवकलशो वेलावित्तः कृतस्तया | भुट्याधिकारे कौट्टन्यमाचरन्निस्त्रपो विटः ||३२४||
येऽपि कर्दमराजाद्या वीरा द्वारादिनायकाः | तेऽपि कौट्ट¹न्यमभजन्नन्येषां गणनैव का ||३२५||
चतुष्पञ्चानि वर्षाणि तिष्ठन्नृपगृहे शिशुः | भीमगुप्तोऽभवद्यावत्किंचित्प्रौढीभवन्मतिः ||३२६||
राज्यव्यवस्था यावच्च पितामह्याश्च वृत्तयः | दुःस्थिताः प्रत्यभासन्त संस्थाप्यास्तस्य चेतसि ||३२७||
अङ्गशीलविहीनाया निर्घृणाया निसर्गतः | तावन्नेयधियस्तस्याः स चिन्त्यः समपद्यत ||३२८||
अभिमन्यु¹वधूस्तं हि चक्रे गूढप्रवेशितम् | महाभिजनजं पुत्रं तस्मात्सोऽभूत्तथाविधः ||३२९||
सा देवकलशेनाथ दत्तमन्त्रा विशङ्किता | त्रपोज्झिता स्पष्टमेव भीमगुप्तमबन्धयत् ||३३०||
निगूढे नन्दिगुप्तादिद्रोहे लोकस्य योऽभवत् | संदेहः स तया तेन व्यक्तकृत्येन वारितः ||३३१||
ताभिस्ताभिर्यातनाभिर्भीमगुप्तं निपात्य सा | षट्पञ्चाशेऽभवद्वर्षे स्वयं क्रान्तनृपासना ||३३२||
प्रवृद्धरागया राज्ञ्या दत्तोद्रेको दिने दिने | सर्वाधिकारी तुङ्गोऽथ बभूवाधरि¹ताखिलः ||३३३||
सभ्रातृकेन तुङ्गेन मीलिताः पूर्वमन्त्रिणः | राज्यविप्लवमाधातुमयतन्त विरागिणः ||३३४||
तेऽथ संमन्त्र्य कश्मीरानानिन्युः क्रूरपौरुषम् | उग्रं विग्रहराजाख्यं दिद्दाभ्रातुः सुतं नृपम् ||३३५||
मुख्यामहारान्स प्राप्तो विधातुं राज्यविप्लवम् | धीमान्प्रायोपवेशाय¹ द्रुतं प्रावेशयद्द्विजान्² ||३३६||
अविहितैक्येषु विप्रेषु लोकः सर्वोऽपि विप्लुतः | अन्वियेषान्वहं तुङ्गं तत्र तत्र जिघांसया ||३३७||

३११. ¹) Thus $A_1$; $A_3$ एकोनप°. ३१२. ¹) Thus corr. by later hand from $A_1$ मार्गशीर्ष. ३१५. ¹) बभूव साथ supplied by $A_3$ in space left by $A_1$. ३१८. ¹) $A_4$ gloss बोदोल् ग्रामः. ३१९. ¹) ख supplied by $A_3$ in space left by $A_1$. ३२०. ¹) Corr. by $A_3$ from $A_1$ सन्धि°.—²) Thus $A_1$; $A_3$ °कान्तरे. ३२५. ¹) Thus corr. by $A_3$ from $A_1$ कौटिन्य°. ३२९. ¹) Thus corr. by $A_3$ from $A_1$ अभिमन्यव°. ३३३. ¹) धरि supplied by $A_3$ in space left by $A_1$. ३३६. ¹) $A_3$ gloss प्रायः भोजनत्यागः.—²) Thus $A_1$; $A_3$ प्रायोजयद्वि°.

कस्मिंश्चित्पिहितद्वारे तुङ्गं प्रच्छाद्य वेश्मनि | दिनानि कतिचिद्दिद्दा तस्थावास्कन्दशङ्किनी ||३३८||

तया स्वर्णप्रदानेन सुमनोमन्तकादयः | ब्राह्मणाः समगृह्यन्त ततः प्रायो न्यवर्तत ||३३९||

340 एवं तस्मिन्महाक्षेपे तया दानेन वारिते | ययौ विग्रहराजः स भग्नशक्तिर्यथागतम् ||३४०||

अथ दार्ढ्यं समासाद्य तुङ्गाद्याः प्रभविष्णवः | शनैः कर्दमराजादीञ्जघ्नुर्विहितविप्लवान् ||३४१||

सुलक्कनो रक्कसूनुस्तथान्ये मुख्यमन्त्रिणः | रुष्टैर्निर्वासिता देशात्तुष्टैस्तैः संप्रवेशिताः ||३४२||

प्रवर्धमानवैरेण गूढदूतैर्विसर्जितैः | प्रायं विग्रहराजेन ब्राह्मणाः कारिताः पुनः ||३४३||

उत्कोचादित्सया विप्रा भूयः प्रायविधायिनः | लब्धस्थैर्येण तुङ्गेन संनिपत्यापहस्तिताः ||३४४||

345 तेषां मध्ये वसन्गूढमादित्याख्यः पलायितः | हतो विग्रहराजस्य प्रियः कटकवारिकः ||३४५||

शस्त्रक्षतः प्रतीहारो वत्सराजाभिधः पुनः | न्यङ्कोतकादिभिर्धात्रञ्जीवग्राहमगृह्यत ||३४६||

ते स्वर्णग्राहिणो विप्राः सुमनोमन्तकादयः | सर्वेऽपि बद्धास्तुङ्गेन कारागारं प्रवेशिताः ||३४७||

अथ फल्गुणनाशेन दृप्ते राजपुरीपतौ | तां प्रत्यारब्धिरभवत्क्रुध्यतां सर्वमन्त्रिणाम् ||३४८||

निपत्य संकटे वीरः पृथ्वीपालाभिधस्ततः | चक्रे राजपुरीराजः काश्मीरिकाबलक्षयम् ||३४९||

350 शिपाटको हंसराजो विपन्नौ तत्र मन्त्रिणौ | चन्द्राद्यैर्दुर्गतिर्दृष्टा[1] मरणं यत्र भेषजम्[2] ||३५०||

अथान्येन पथाकस्मात्तुङ्गः सार्धं सहोदरैः | कृत्स्नां राजपुरीं वीरः प्रविश्य सहसादहत् ||३५१||

ननाश तेनोपायेन पृथ्वीपालः स पार्थिवः | शेषाणां मन्त्रिणां सैन्यं प्राप मुक्तिं च संकटात् ||३५२||

अबलः सन्स भूपालस्तुङ्गाय प्रददौ करम् | एवं कृतं तदा तेन नष्टस्यार्थस्य[1] योजनम् ||३५३||

प्रविशन्नगरं तुङ्गस्ततः स्वीकृतकम्पनः | चकार डामरग्रामसंहारं सिंहविक्रमः ||३५४||

355 दिद्दाप्युदयराजस्य भ्रातुः पुत्रं परीक्षितम् | चक्रे संग्रामराजाख्यं युवराजमशङ्किता ||३५५||

सा हि सर्वाञ्शिशुप्रायान्पुरो भ्रातृसुतान्स्थितान् | परीक्षितुं मुमोचाग्रे पालेवतफलावलिम् ||३५६||

शक्तः कियन्ति कः प्राप्तुं फलान्यत्रेतिवादिनी | साभवद्राजपुत्राणां तेषां कलहकारणम् ||३५७||

गृहीताल्पफलांल्लग्नप्रहारांस्तान्ददर्श च | संग्रामराजं[1] त्वस्वल्पफलभाजमविक्षतम् ||३५८||

अनन्तफलसंप्राप्तावक्षतत्वे च कारणम् | सविस्मयं तया पृष्टः स तामेवं तदाब्रवीत् ||३५९||

360 अन्योन्यकलहव्यग्रानेतान्कृत्वा पृथग्वसन् | समवापं फलान्यस्मिन्न चाभूवं परिक्षतः ||३६०||

व्यसनं संप्रवेश्यान्यान्स्थितानामप्रमादिनाम् | न काः क्लेशविहीनानां[2] घटन्ते स्वार्थसिद्धयः ||३६१||

श्रुत्वेति तस्य सा वाचमप्रमत्तत्वदूतिकाम् | भीरुर्नासीत्स्वभावेन राज्येमन्यत योग्यताम् ||३६२||

शूरस्य लभ्यं शौर्येण भीरोर्भीरुतया यथा | कार्यं हि प्रतिभात्यन्तर्न भवेच्च तदन्यथा ||३६३||

काष्ठं वह्न्युज्झितमपि भवेच्छीतशान्त्यै कपीनां लोम्नां शुद्ध्यै सलिलमनलश्चाभिशौ[1]चैणकानाम् |
जन्तोर्भावा विदधति यथा भाविनः[2] कार्यसिद्धिं तत्त्वं तेषां क्वचन सहजं वस्तुतो नास्ति किंचित् ||३६४||

---

३५०. [1]) Thus $A_3$; $A_1$ °दुर्गति दृष्ट्वा.—[2]) Thus corr. by later hand from $A_1$ भेष°. ३५३. [1]) नष्टस्या supplied by $A_3$ in space left by $A_1$. ३५८. [1]) राजं omitted by $A_1$ and supplied by $A_3$. ३६१. [1]) Thus corr. by $A_3$; $A_1$ व्यसने संप्रविश्या°.—[2]) Thus corr. by $A_3$ from $A_1$ °विहीनां. ३६४. [1]) $A_3$ gloss अभिशौचा मृगा अग्निमश्नन्ति विषमूषकाः विषं च न विपद्यन्ते जीविता – – – – –. [2]) $A_3$ यथाभावनं.

तस्यामेकान्नशीत्यब्दभुक्तभाद्राष्टमीदिने । देव्यां दिवं प्रयातायां युवराजोभवन्नृपः ॥३६५॥ 365

स्त्रीसंबन्धेन भूपालवंश्यानां[1] भुवनाद्भुतः । तृतीयः परिवर्तोयं वर्ततेमुत्र मण्डले ॥३६६॥

निर्नष्ट[1]कण्टककुले वसुसंपदाढ्ये श्रीसात[2]वाहकुलमाप महीतलेस्मिन् ।

दावाग्निदग्धकुतरौ जलदाम्बुसिक्ते चूतप्ररोह इव केलिवने प्रवृद्धिम्[3] ॥३६७॥

अथ स मृदुतयान्तर्गूढधैर्यानुभावः सुखमवनिमशेषां दोष्णि संग्रामराजः ।

बिसकुलनिभशोभानिह्नुतप्राणसारः फणकुलं[1] उरगाणामीशितेव न्यधत्त ॥३६८॥

इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां षष्ठस्तरङ्गः[2] ॥

अत्र वर्षचतुःषष्टौ मासेष्वर्धे दिनेषु च । अष्टस्वभूवन्भूपाला दश भूभोगभोगिनः[3] ॥

---

३६६. [1]) Thus corr. by later hand from $A_1$ °वंशा°. ३६७. [1]) Thus corr. by $A_3$ from $A_1$ निष्पन्नक°.—[2]) Thus corr. by $A_2$ from $A_1$ सालवा°; R G as above.—[3]) $A_3$ प्ररूढिम्. ३६८. [1]) Thus corr. by $A_3$ from $A_1$ फलकुल. *Colophon.* [1]) $A_3$ inserts here the note: रा० १० मं ३६९ ॥ आदितः रा० ९१ ग्रन्थः २६६३ ॥.—[2]) $A_1$ adds here: लिखितश्चैष राजानकरत्नकण्ठेन.—[3]) $A_3$ भोगिनः.

## ॥ सप्तमस्तरङ्गः ॥



मातुस्तेजनि निर्मले[1] पितृकुले श्लाघ्या तनुर्वेधसा त्वं संध्याहितसंनिधिर्मम जपारक्तेऽधरे खेलसि ।
संध्यावन्दनसाभ्यसूयगिरिजास्तुत्येदृशैर्वाक्छलैर्यः संध्यामपि वन्दते स्म स जगत्प्रीणातु गौरीश्वरः ॥ १॥
क्ष्मां[1] क्ष्मापतिर्बिभ्रन्मनसा च भुजेन च । गाम्भीर्येण च शक्त्या च सोऽजयद्वाहिनीपतीन्[2] ॥२॥
जज्ञे राज्ञीक्षये भङ्गो यैस्तुङ्गस्य तदाखिलैः । दिनश्रीविगमे संध्याप्रसङ्गस्येव रागिणः ॥३॥
तत्तत्प्रतिभटाटोपत्रोटनात्प्रत्युतास्य तैः । उदयो ददृशे शश्वद्गतिं को वेत्ति वेधसः ॥४॥ युग्मम् ॥
नृपेण जातज्ञातेयः शूरः शक्तिसमन्वितः । सर्वाधिकारयोग्योऽगा[1]त्तदा चन्द्राकरः क्षयम् ॥५॥
अन्ये भीमतिकाग्रामदिविरस्योरुसंपदः । पुण्याकरस्य तनयाः शूराः शान्तिं प्रपेदिरे ॥६॥
समर्थमन्त्रिविरहादनिच्छन्नपि वेधसा । निन्ये गत्यन्तरत्यक्तस्तुङ्गपक्षं क्ष्मापतिः ॥७॥
संग्रामराजतुङ्गादीन्देवी कोशमपाययत्[1] । मुमूर्षन्ती पुरा स्थातुमद्रोहेणेतरेतरम् ॥८॥
क्लेशासहो महीपालस्ततः कार्यवशादपि । तुङ्गन्यस्तप्रजाकार्यो भोगाभ्यसालसोऽभवत् ॥९॥
पर्याप्तं तस्य भीरुत्वं कियदन्यत्प्रकाश्यताम् । असमैर्यौनसंबन्धैश्चक्षमे यशसः क्षतिम् ॥१०॥
साहायकार्थी यत्प्रादाच्छ्रीशौर्यादिमते सुताम् । दिद्दामठाधिपतये प्रेमनाम्ने स लोठिकाम् ॥११॥
क्व लोकोद्दहनोन्नद्धभूभृद्योग्या नृपात्मजा । प्रतिग्रहजलक्लिन्नपाणिः क्वाल्पमना द्विजः ॥१२॥
अथ तुङ्गादिभङ्गाय प्रायं ब्राह्मणमन्त्रिणः । परिहासपुरे विप्रपारिषद्यानकारयन् ॥१३॥
विप्रमन्त्रिमतैक्येन कृतो राज्ञः स विप्लवः । दुःसहः पवमानाग्निसमागमसमोऽभवत् ॥१४॥
राज्ञोऽप्युत्पाटने सज्जैः कथंचित्प्रार्थितै[1]र्द्विजैः । मतिः क्षान्तिचरुप्राये[2] तुङ्गनिःसारणे कृता ॥१५॥
राज्ञा[1] तुङ्गादिभिश्चैतै[2]र्यावत्तेभ्यः प्रतिश्रुतम् । अन्यत्प्रार्थयितुं लग्नास्तावत्ते शठबुद्धयः ॥१६॥
तुङ्गास्कन्देन विप्रोऽयं[1] यो मृतस्तद्गृहे[2] वयम् । तं निर्दहाम इत्युक्त्वा शवः कोऽप्यरघट्टतः ॥१७॥
तैरुद्धृत्य यदानीतः शठैस्तुङ्गगृहान्प्रति । केशहोमाद्य विहिताद्या कृत्योत्थापिताभवत् ॥१८॥
तया प्रतीपपातिन्या निःशौचानां द्विजन्मनाम् । अकस्मान्निरगाच्छस्त्रं विनाशायोत्थिते कलौ ॥१९॥ तिलकम् ॥
ततः पलायिता विप्रा यस्तेषां मन्त्रदोऽभवत् । निगूढं राजकलशस्तद्वेश्म प्राविशन्भयात् ॥२०॥
स व्यक्तीभूतकौटिल्यः संग्रामं सुचिरं व्यधात् । अपद्वारैस्तु ते विप्राः पलाय्य स्वगृहान्ययुः ॥२१॥

१. [1]) $A_3$ निर्मिते. २. [1]) $A_3$ gloss भुवं क्षान्तिं च.—[2]) $A_3$ gloss सेनापतीन् समुद्रांश्च. ५. [1]) गा supplied by $A_2$. ८. [1]) $A_3$ gloss कोशं । दिव्यं । अपाययत् अकारयत् । पीतकोशान् कृतवती इत्यर्थः. १५. [1]) Thus corr. by $A_3$ from $A_1$ प्रार्थितो.—[2]) $A_3$ °प्रायैस्तु°. १६. [1]) Thus corr. by $A_3$ from $A_1$ राज्ञस्तु°.—[2]) $A_3$ gloss निःसारणं. १७. [1]) यं supplied by $A_3$.—[2]) $A_4$ gloss तुङ्गगृहे.

विजिते राजकलशे समकार्या द्विजातयः । मन्त्रिणः श्रीधरसुताः सप्तागत्य व्यधुर्मृधम् ॥२२॥
ते कृत्वा सुमहत्कर्म समाप्तिं समरे गताः । निर्भिद्य मण्डलं सप्त सप्तसप्तेर्द्रुतं ययुः ॥२३॥
जितः सुगन्धिसीहेन[1] तेषु शान्तेषु संयुगे । बद्ध्वाथ राजकलशस्तुङ्गेनानायितो गृहम् ॥२४॥
नीयमानोधिरोप्याशु स्कन्दं मार्गेषु विक्षतः । तुङ्गस्य युग्यवाहैः स नर्तितोपहृतायुधः ॥२५॥
अन्योपि भूतिकलशो नाम मन्त्री विनिर्जितः । सुतेन राजकाख्येन सह शूरमठं ययौ ॥२६॥
क्रमात्सुगन्धिसीहाद्यैर्मुक्तः करुणया ततः । सपुत्रः सोवमानाग्नितप्तो देशान्तरं ययौ ॥२७॥
परिहासपुरादेवं जातो यो देशविप्लवः । स दैवयोगात्तुङ्गस्य शुभाय प्रत्युताभवत् ॥२८॥
ततः प्रसादिते राज्ञि गुणदेवेन मन्त्रिणा । आययौ भूतिकलशः कृतगङ्गानिमज्जनः ॥२९॥
पुनर्नृपगृहे तस्मिन्किंचिल्लब्धपदे शनैः । तुङ्गं निहन्तुं राज्ञेनं गूढं दूताः प्रयोजिताः ॥३०॥
ज्ञातवार्तेन तुङ्गेन तस्मिन्नर्थे प्रकाशिते । सपुत्रो भूतिकलशो राज्ञा निर्वासितः पुनः ॥३१॥
अवष्टम्भं मनाग्लेभे चन्द्राकरसुतः शनैः । यो मय्यामन्तकः सोपि तस्मिन्काले व्यपद्यत ॥३२॥
भूत्वा किंचित्क्षणं भूभृत्कन्यासंभोगभाजनम् । राजोपकारकृच्छ्रीमान्प्रेमापि प्रमयं ययौ ॥३३॥
विपेदिरेन्ये गङ्गाद्याः सर्वेपि नृपतिप्रियाः । अवाशिष्यत भोगाय तुङ्गः सभ्रातृकः परम् ॥३४॥
इति यो यो हि वृत्तान्तस्तस्य नाशाय शङ्कितः । स स दैवानुकूल्येन प्रत्युतो[1]द्रेचकोभवत् ॥३५॥
कालक्रमत्रुटितसंश्रयभूः स्वमूलमात्राश्रयी तटतरुः सरितोम्बुपूरैः ।
यैः शङ्क्यते निपततीति वितीर्णमृद्भिस्तैरेव तस्य हि भवेत्स्थितिभूमिदार्ढ्यम् ॥३६॥
नीत्युज्ज्वलं व्यवहरन्प्रजाराधनतत्परः । प्राक्पुण्यसंक्षयात्तुङ्गः शनैस्त्वासीत्[1]स्खलन्मतिः ॥३७॥
यत्स्वभाग्यापहाराय हीनजन्मानमाददे । साहायकाय कायस्थं क्षुद्रं भद्रेश्वराभिधम् ॥३८॥
विड्वाणिज्यं[1] सौनिकत्वं काष्ठविक्रयितादि[2] च । आरामिकस्य यस्यासीत्कृत्यं वंशक्रमोचितम् ॥३९॥
कम्बलोद्वृष्टपृष्ठोथ भोजनार्थमवालगत्[1] । भस्त्रामषीभाण्डवाही यश्च पश्चान्नियोगिनाम् ॥४०॥
अनन्तराजकार्यादिचिन्ताश्रान्तो विधाय तम् । तुङ्गः सहायं नाबुद्ध संसर्गाद्भाग्यसंक्षयम् ॥४१॥
धार्मिकं तेन धर्मार्कं विनिवार्यार्यचेतसम् । गृहकृत्याधिकारे[1] स दुष्कृती विनिवेशितः ॥४२॥
देवगोब्राह्मणानाथातिथिराजोपजीविनाम् । अकालमृत्युर्विदधे वृत्तिच्छेदं स दुर्मतिः ॥४३॥
शवाजीवोपि पुष्णाति क्रूरः कापालिको निजान् । भद्रेश्वरस्तु पापोभून्निजानामपि जीवहृत् ॥४४॥
तुङ्गेन चैत्रे सर्वत्र कृते भद्रेश्वरे प्रभौ । सुगन्धिसीहः प्रययावाषाढे मासि संक्षयम् ॥४५॥
परलोकं गते तस्मिन्सर्वभारसहेनुजे । तुङ्गश्छिन्नोत्तमाङ्गत्वं सदैन्योमन्यतात्मनः ॥४६॥
श्रीत्रिलोचनपालस्य शाहेः साहायकार्थिनः[1] । देशं ततो मार्गशीर्षे मासि तं[2] व्यसृजन्नृपः ॥४७॥
राजपुत्रमहामात्यसामन्तादिनिरन्तरम् । सैन्यं तमन्वगाद्भूरि भुवनक्षोभनक्षमम् ॥४८॥

---

२४. [1]) $A_4$ gloss तुङ्गानुजेन. ३५. [1]) $A_3$ gloss वृद्धिकरः. ३७. [1]) Thus emended with C; A R G °सीद्खल°. ३९. [1]) $A_2$ gloss गोमयविक्रयित्वं.—[2]) Thus corr. by $A_3$ from $A_1$ °क्रयिकादि. ४०. [1]) The first half of this verse has been omitted by $A_1$ and supplied by $A_3$ in margin. ४२. [1]) Thus corr. by $A_3$ from $A_1$ °कारी. ४७. [1]) $A_4$ gloss तुरुष्कसमरे.—[2]) $A_4$ gloss तुङ्गं.

अथागतेन सत्कृत[1]ः शाहिना कृतसत्क्रियः । पञ्चषाणि दिनान्यासीत्तद्देशे स यदोन्मदः ॥४९॥
प्रजागरचरन्यासशस्त्राभ्यासादिवासनाः । अभियोगोचिताः शाहिर[1]पश्यंस्त[2] तदाब्रवीत् ॥५०॥ युग्मम् ॥
तुरुष्कसमरे यावन्न यूयं कृतबुद्धयः । आलस्यविवशास्तावत्तिष्ठतास्मिन्गिरेस्तटे ॥५१॥
एवं त्रिलोचनेनोक्त[1] सोग्रहीन्न हितं वचः । तस्थौ परं समं सैन्यैरुत्सेकादाहवोत्सुकः ॥५२॥
हम्मीरेण[1] तदा सैन्यं जिज्ञासार्थं विसर्जितम् । तौषीपारे[2] मितप्रायैस्ततस्तीर्त्वावधीद्बलैः ॥५३॥
ततस्त[1]माहितोत्सेकमपि शाहिः पुनः पुनः । जगादाहवतत्त्वज्ञः पूर्वोक्तामेव संविदम् ॥५४॥
स तस्य नाग्रहीद्वाक्यं रणौत्सुक्यवशंवदः । प्रत्यासन्नविनाशानामुपदेशो निरर्थकः ॥५५॥
प्रातस्ततः स्वयं कोपात्तुरुष्कानीकनायकः । सर्वाभिसारेणा[1]गच्छच्छलाहवविशारदः ॥५६॥
अथ तुङ्गस्य कटकः सहसा भङ्गमाययौ । शाहिसैन्यं परं संख्ये ददृशे विचरत्क्षणम् ॥५७॥
शाहिसैन्ये गतेप्यासीज्जयसिंहः स्फुरद्रणे । श्रीवर्धनश्च सांग्रामि[1]विभ्रमार्कश्च डामरः ॥५८॥
घोरे तुरंगतुमुले प्रहरद्भिस्त्रिभिर्भटैः । वीरक्षेत्रे निजे देशे रक्षितस्तैर्यशःक्षयः ॥५९॥
कस्त्रिलोचनपालस्य माहात्म्यं वक्तुमीश्वरः । निःसंख्या अपि यं संख्ये न जेतुमशकन्द्विषः ॥६०॥
शुशुभे रुधिरासारवर्षी युद्धे त्रिलोचनः । कल्पान्तदहनज्योतिर्विसारीव त्रिलोचनः ॥६१॥
स योधयित्वा संग्रामे कोटीः कङ्कटवाहिनाम् । एकाकी कार्यमर्मज्ञो निर्ययौ रिपुसंकटात् ॥६२॥
गते त्रिलोचने दूरमशेषं क्षिति[1]मण्डलम् । प्रचण्डचण्डालचमूशलभच्छायमानशे ॥६३॥
संग्रामविजयोप्यासीन्न हम्मीरः समुच्छ्वसन् । श्रीत्रिलोचनपालस्य स्मरञ्शौर्यममानुषम् ॥६४॥
त्रिलोचनोपि संश्रित्य हास्तिकं स्वपदाच्च्युतः । सयत्नोभून्महोत्साहः प्रत्याहर्तुं जयश्रियम् ॥६५॥
यथा नामापि निर्नष्टं शीघ्रं शाहिश्रियस्तथा । इह प्रासङ्गिकत्वेन वर्णितं न सविस्तरम् ॥६६॥
स्वप्नेपि यदसंभाव्यं यत्र भग्ना मनोरथाः । हेलया तद्विदधतो नासाध्यं विद्यते विधेः ॥६७॥
ईषद्भूमिवैपुल्यं[1] राज्ञः शंकरवर्मणः । वृत्तान्तवर्णने पूर्वममुत्र प्रकटीकृतम् ॥६८॥
स शाहिदेशः सामात्यः सभूभृत्सपरिच्छदः । किमभूत्किमु वा नाभूदिति संचिन्त्यतेधुना ॥६९॥
अवतारं तुरुष्काणां दत्त्वाशेषे महीतले । प्राप्तभङ्गस्ततस्तुङ्गः स्वदेशं प्राविशच्छनैः ॥७०॥
सृगालायेव तुङ्गाय लब्धभङ्गाय भूपतिः । न तत्रागसि चुक्रोध स धैर्यसदृशाशयः ॥७१॥
किं तु खेदाय समभूत्तुङ्गायत्तत्वमीशितुः । परायत्ततया चित्तं पशोर[1]प्युपतप्यते ॥७२॥
तुङ्गात्मजोपि कन्दर्पसिंहः श्रीशौर्यगर्वितः । राजो[1]चितं व्यवहरंस्तस्योद्वेगप्रदोभवत् ॥७३॥
गूढलेखैः क्षणे तस्मिंश्छिद्रान्वेषी स भूभुजम्[1] । भ्राता विग्रहराजोपि प्रैरयत्तुङ्गमारणे ॥७४॥
कोशादिस्मरणा[1]द्राजा चिरं दोलायमानधीः । अभीक्ष्णप्रेरणोद्विग्नः प्रेरकानब्रवीत्ततः ॥७५॥

४९. [1]) Thus $A_3$; $A_1$ स तथा. ५०. [1]) र supplied by $A_3$ in space left by $A_1$.—[2]) Thus corr. by $A_3$ from $A_1$ ° पश्यन्त. ५२. [1]) Thus corr. by $A_3$ from $A_1$ °नोक्ताः. ५३. [1]) Thus $A_1$; altered by later hand to हम्मी°; G as above.—[2]) Thus corr. by $A_2$ from $A_1$ °प्राय; $A_3$ gloss तौषी नाम नदी. ५४. [1]) स्त supplied by $A_3$. ५६. [1]) Thus $A_3$; $A_1$ °रेणोग्रच्छ°. ५८. [1]) Thus $A_3$, with gloss सङ्ग्रामस्यापत्यं साङ्ग्रामिः; $A_1$ सङ्ग्रामे. ६३. [1]) Thus $A_3$; $A_1$ रिपुम°. ६८. [1]) $A_3$ gloss यस्य देशस्य भूमेः वैपुल्यं. ७२. [1]) पशोर supplied by $A_3$ in space left by $A_1$. ७३. [1]) Emended; A राज्यो°. ७४. [1]) Thus $A_1$; altered by later hand to भूभुजाम् which is found also in G R. ७५. [1]) $A_3$ gloss वयं देव्या पीतकोशाः कृता इति स्मरणात्.

एकाक्येव सपुत्रः स गोचरो नः कदाचन । पतेद्यदि क्षणे तस्मिन्पश्यामः किं विदध्महे ॥७६॥
अन्यथा ध्रुवमाक्षिप्तो हन्यादस्मानसौ बलात् । इति कालापहारार्थमुक्त्वाभूद्विरतो नृपः ॥७७॥
तावन्मात्रं वचो बीजभूतं हृदि निधाय ते । विधातुं तदवस्थत्वं तुङ्गस्यासन्कृतोद्यमाः ॥७८॥
षण्मासाभ्यन्तरे तुङ्गो भूपेनाकारितो गृहात्[1] । ससुतो निर्ययौ दृष्टदुःस्वप्नोपि विधेर्वशात् ॥७९॥
स प्रविश्य नृपास्थानं स्थित्वा राज्ञोग्रतः क्षणम् । पञ्चषैः सहितो भृत्यैः प्राविशन्मन्त्रमण्डपम् ॥८०॥
पश्चात्प्रविष्टास्तत्रैनं पर्वशार्करकादयः । अनुक्त्वापि महीपालं तुङ्गं शस्त्रैरपातयन् ॥८१॥
मन्त्री महारथो नाम योभूच्छंकरवर्मणः । तद्वंश्यस्तुङ्गभृत्येषु श्लाघ्यः सिंहरथः परम् ॥८२॥
निःशस्त्रो यः क्षणे तस्मिन्परित्राणविधित्सया । हन्यमानस्य तुङ्गस्य पृष्ठे स्वं वपुरक्षिपत् ॥८३॥
तुङ्गस्य प्रथमाघाते रुद्धः[1] श्वासोभवद्भयात् । राजा तस्मिन्निरुच्छ्वासे सोच्छ्वासः समपद्यत ॥८४॥
आस्थानब्राह्मणस्यासीद्धर्मनाम्नः सुतोन्तिके । यः पापकारी तुङ्गस्य पार्थः कङ्कश्च दुर्मतिः ॥८५॥
ताभ्यामाशुविरेकिभ्यां त्राणार्थं स्वाङ्गुलीर्मुखे । क्षिपद्भ्यां पशुवत्तत्र शस्त्रं त्रासवशाज्जहे ॥८६॥
अन्तरङ्गाश्च[1] चङ्गाद्या येभूवंस्तुङ्गमन्त्रिणः । तैः स्त्रीवदासितं तूष्णीं त्रस्तैः शस्त्रान्वितैरपि ॥८७॥
अज्ञाततुङ्गमृत्युभ्यस्तुमुले तत्र भूपतिः । तद्भृत्येभ्यः शङ्कमानो वह्निदानाहवादिकम् ॥८८॥
आश्वासाय स्वभृत्यानां छित्त्वा खड्गेन सत्वरम् । पातयामास तुङ्गस्य ससुतस्य शिरो बहिः ॥८९॥
दृष्ट्वा स्वामिशिरश्छिन्नं सैन्ये दैन्यात्पलायिते । भृत्यतामुज्ज्वलीचक्रुः कतिचित्तुङ्गसेवकाः ॥९०॥
भुजंगनामा सामन्तद्विजापत्यो गृहागतः । संग्रामराजं विदधे गेहाद्गेहं पलायितम् ॥९१॥
द्वारं कनकदण्डेन भञ्जन्नर्गलितं ततः[1] । विंशतिं हतवान्योधान्स राजास्थानमण्डपे ॥९२॥
कोशाधिकारी त्रैलोक्यराजनामा हतो रणे । कथ्यामन्तकधात्रेयो वीरोप्यभिनवाभिधः ॥९३॥
अङ्गने त्रिंशदेकाङ्गा वीरास्तुङ्गोपजीविनः । श्रेणीं बबन्धुर्निहता निःश्रेणीं स्वर्गपद्धतेः ॥९४॥
संग्रामं पद्मराजाख्यः कृत्वापि[1] निःसृतो[2]क्षतः । स्वामिप्रमयदुःखाग्नितापं तीर्थाश्रयाज्जहौ ॥९५॥
अन्ये लोकद्वयत्राणमित्रं शस्त्रं रणाङ्गने । संत्यजन्तो व्ययुज्यन्त यशसा जीवितेन च ॥९६॥
चन्दाख्यः सुभटंमन्यो दैशिकश्चार्जुनाभिधः । हेलाचक्रो डामरश्च त्यक्तशस्त्राः परैर्हताः ॥९७॥
लोठितावसथस्तुङ्गो लुण्ठितश्रीर्महीभुजा । आषाढशुक्लद्वादश्यां कथाशेषो व्यधीयत ॥९८॥
निर्द्रोहवृत्तौ भूभर्त्रा तुङ्गे सतनये हते । लब्धोदया व्यजृम्भन्त खलप्राया नृपास्पदे ॥९९॥
राज्ञो मनः कलुषयन्गूढपैशुनकर्मणा । यो भ्रातृभ्रातृ[1]सुतयोर्विपत्तौ हेतुतां गतः ॥१००॥
स दुष्प्रवादनिर्दग्धो नागो निजकुलान्तकः । तुङ्गभ्राता ततो राज्ञा कम्पनाधिपतिः कृतः ॥१०१॥ युगलकम्॥
भार्या कन्दर्पसिंहस्य क्षेमा परमचर्षणी[1] । नागेन संगमं चक्रे रक्षसेवासितक्षपा[2] ॥१०२॥
प्रशान्ते तुमुले बिम्बा चतुर्भिर्दिवसैः सती । तुङ्गस्नुषा सुता शाहेः प्रविवेश हुताशनम् ॥१०३॥

---

७७. [1]) Thus corr. by $A_3$ from $A_1$ ह्युद्यमा°. ७९. [1]) Thus corr. by $A_3$ from $A_1$ गृहान्. ८४. [1]) Emended; A R G रुद्धुश्वासो°. ८७. [1]) च supplied by $A_3$ in space left by $A_1$. ९२. [1]) Thus corr. by $A_3$ from $A_1$ रञ्जन्तेर्गलितं हतः. ९५. [1]) Thus corr. by $A_3$ from $A_1$ °ख्य कृत्वा.—[2]) $A_1$ निस्सृतो; $A_3$ निसृतो. १००. [1]) Thus corr. by $A_3$ from $A_1$ भ्रातृपुत्रसुत°. १०२. [1]) Emended; A °चार्षिणी.—[2]) $A_3$ gloss रक्षो हि रात्रौ चरति.

मम्मायामवरुद्धायां कन्दर्पौ[1] यावजीजनत् । पुत्रं विचित्रसिंहं च मातृसिंहं च विश्रुतौ ॥१०४॥
गृहीत्वा तौ स्नुषां तां च मङ्ख्ना तुङ्गवल्लभा । देशाद्विनिर्गता दीना राजपुर्यां स्थितिं व्यधात् ॥१०५॥ युग्मम्[1]॥
तुङ्गस्थाने ततो राज्ञा पापो भद्रेश्वरः कृतः । भूतेश्वरादिदेवानां चक्रे कोशादिलुण्ठनम् ॥१०६॥
कियद्विवेकवैकल्यमस्य राज्ञः प्रकाश्यताम् । तादृशानपि यश्चक्रे पार्थादीनधिकारिणः ॥१०७॥
पार्थः परमदुर्मेधाः ख्यातो भ्रातृकलत्रगः । निर्विचारेण यत्तेन नगराधिकृतः कृतः ॥१०८॥
वधादिपापं पार्थेन सुकृतत्यक्तचेतसा । पवित्रे प्रवरेशस्य रङ्गपीठे प्रवर्तितम् ॥१०९॥
चक्रे लुब्धस्य भूभर्तुर्मतङ्गः[1] कृपणाग्रणीः । सिंधोः सुतः कोशवृद्धिं प्रजापीडनपण्डितः ॥११०॥
पुरा देवमुखाख्यस्य दिविरस्य किलाजनि । आपूपिकायां वेश्यायां पुत्रश्चन्द्रमुखाभिधः ॥१११॥
यस्तुङ्गोपाश्रयाल्लब्ध्वा लालितत्वं महीपतेः । वराटकाल्पभृत्यासीत्कोटीनां कृतसंचयः ॥११२॥
विभूतिमध्ये लुब्धस्य प्राभृतायान्यढौकितैः[1] । अपूपैर्निजभृत्येषु विक्रयोभूत्कुलोचितः ॥११३॥
प्रभूताग्निररोगश्च भूत्वा लब्धोदयः पुनः । यो मन्दाग्निः सरोगश्च तिष्ठंल्लोकैर्व्यहस्यत ॥११४॥
एकमेवाभवद्यस्य सुकृतं मरणक्षणे । कोटेस्त्रिभागं यददाच्छ्रीरणेश्वरयोजने ॥११५॥
तदात्मजाः कृता नानभागनन्दिमुखास्त्रयः । अधीशाः पृतनाङ्गस्य राज्ञा तुङ्गोपजीविनः ॥११६॥
हास्यं बभूव भूभर्तुस्तेषां तुङ्गपदार्पणम्[1] । बन्धनं यवकाण्डीनां हेमस्थाने शिशोरिव ॥११७॥
ते तुरुष्काहवे राज्ञा तुङ्गवत्प्रहिताः पुनः । प्रत्यावृत्य ययुर्देशं निजमेव पलायिताः ॥११८॥
इत्थं मन्त्रिष्वयोग्येषु क्षान्तिशीले च भूपतौ । केचिदुद्रेकमभजन्दरद्विविरडामराः ॥११९॥
सा लोठिकामठं कृत्वा लोठिका नृपतेः सुता । तिलोत्तमाया विदधे मातुर्नाम्नापरं मठम् ॥१२०॥
पापिनामपि हन्तेयं कापि सत्कर्मवासना । भद्रेश्वरोपि यच्चक्रे विहारं सुकृतोज्ज्वलम् ॥१२१॥
सत्यं विवेक्ता संग्रामराजो योन्याय्यतोर्जितम् । निजं ब्रुवाणो द्रविणं प्रपामपि न निर्ममे ॥१२२॥
श्रीलेखा पार्थिववधूः श्रीयशोमङ्गलात्मजा । पत्यौ शिथिलसामर्थ्यै स्वैरिणीत्वमसेवत ॥१२३॥
सुतः सुगन्धिसीहस्य जयलक्ष्म्यां[1] बभूव यः । वल्लभो निर्भरं देव्याः सोस्यास्त्रिभुवनोभवत् ॥१२४॥
स जयाकरगं[1]ञ्जादिगञ्जस्रष्टातितीक्ष्णधीः । कोशोपकारकृत्तस्या जारोप्यासीज्जयाकरः ॥१२५॥
मयग्रामीण[1]गञ्जादिकर्त्री संचयतत्परा । साभूद्भर्तुः प्रसादेन सुभगा भूरिवैभवा ॥१२६॥
स चतुर्थसमाषाढप्रारम्भाहे महीपतिः । हरिराजाभिधं पुत्रमभिषिच्यास्तमाययौ ॥१२७॥
सुमनः[1]सेवितः कुर्वन्नशेषाशा[2]प्रकाशनम् । ह्लादा[3]वहः स सर्वस्य चैत्रोत्सव इवाभवत् ॥१२८॥
अमोघाज्ञेन तेनेमां निश्चौरां कुर्वता महीम् । पण्यवीथ्यां[1] निशीथिन्यां[2] निषिद्धा द्वारसंवृतिः ॥१२९॥
अचिरस्थायिनी राज्ञस्तस्याज्ञाचिन्तितोन्न[1]तिः । वन्ध्या नवेन्दुलेखेव पार्थिवानामजायत ॥१३०॥

---

१०४. 1) $A_3$ gloss कन्दर्पसिंहः. १०५. 1) युग्मम्. added by $A_3$. ११०. 1) Emended with G C; A R भूभर्तुः सतङ्गः. ११३. 1) $A_3$ gloss कोशलिकार्थं. ११७. 1) Thus $A_1$; $A_3$ °पदेर्पणम्. १२४. 1) Thus corr. by $A_3$ from $A_1$ °लक्ष्मीं. १२५-१२६. 1) The words from गञ्जादिगञ्जस्रष्टा° to मयग्रामीण in the following verse have been omitted by $A_1$ and supplied in margin by $A_3$; they are found in G R. १२८. 1) $A_3$ gloss पण्डितैः पुष्पैश्च.—2) $A_3$ gloss आकाङ्क्षा दिशश्च.—3) $A_3$ gloss शैत्यं तोषश्च. १२९. 1) 2) Thus corr. by $A_3$ from $A_1$ पुण्यवेथ्यां and निषीथिन्यां. १३०. 1) Thus $A_3$; $A_1$ °ज्ञाचिन्तनोन्नतिः.

द्वाविंशतिमहान्युर्वीं स रक्षित्वा क्षमापतिः । क्षयं ययौ शुचियशाः शुचिशुक्लाष्टमीदिने ॥१३१॥

प्राणिनां द्योतमानानां नक्षत्राणामिव क्षणात् । लक्ष्मीर्ग्रीष्मक्षपेवेयं संगता भङ्गदायिनी ॥१३२॥

समन्योः स्वैरिणीवृत्तिः सुतस्य जननी निजा । अभिचारं चकारास्येत्यविगाना[1] जनश्रुतिः ॥१३३॥

राज्योपकरणे सज्जीकृते राज्यार्थिनी स्वयम् । सा राजमाता श्रीलेखा यावत्स्नात्वा समागता ॥१३४॥

मिलितैस्तावदेकाङ्गैर्भ्रात्रा धात्रेयकेण च । सागराख्येन तत्पुत्रो[1] बालोनन्तो नृपः कृतः ॥१३५॥ युग्मम् ॥

निधिं[1] जिघृक्षोरन्येन हृते तत्र प्रमापणम् । तद्रक्षिणोहेर्लुब्धस्य पापायैव यथा किल ॥१३६॥

राजमातुस्तथा राज्यलुब्धायाः पुत्रनाशनम् । अभूदन्यहृते राज्ये वृजिनायैव केवलम् ॥१३७॥ युग्मम् ॥

सा राज्यविप्रलम्भेन तादृशा व्यथिताशया । व्यस्मरत्तनयस्नेहं धिग्भोगाभ्यासवासनाम् ॥१३८॥

अथाजगाम स्थविरः पितृव्यो बालभूपतेः । राज्यं विग्रहराजाख्यो हर्तुं[1] विततविक्रमः ॥१३९॥

स लोहरात्प्रचलितो दग्ध्वा द्वारमतर्कितः । दिनद्वयेन सार्धेन नगरं सत्वरोविशत् ॥१४०॥

श्रीलेखाप्रेरिताः सेनाः प्रविष्टं[1] लोठिकामठम् । उद्दीपिताग्नयस्तत्र निजघ्नुस्तं सहानुगम् ॥१४१॥

मठद्वयं ततः कृत्वा स्वस्य भर्तुः सुतस्य च । तस्थौ व्ययवती राज्ञी राज्यद्रोहोद्यतानिशम् ॥१४२॥

ततो नरपतिः किंचिच्छनैः शिथिलशैशवः । अतिव्ययादिव्यसनी गर्भेश्वरतयाभवत् ॥१४३॥

तस्यासन्रुद्रपालाद्याः शाहिपुत्राः परं प्रियाः । अनल्पवेतनादानै राज्योत्पत्त्यपहारिणः ॥१४४॥

कृतप्रत्यहनिर्वाहः सार्धलक्षेण भूभुजा । रुद्रपालो दरिद्रत्वं कदाचिदपि नात्यजत् ॥१४५॥

दिद्दापालः क्षमापाललब्धया प्रतिवासरम् । सहस्राणामशीत्यापि शेते स्म न सुखं निशि ॥१४६॥

अनङ्गपालवेतालश्चक्रे क्षमापाललालितः । शश्वत्सुवर्णगीर्वाणप्रतिमापाटने[1] मनः ॥१४७॥

रुद्रपालः परित्राता धनप्राणादिहारिणाम् । बभूव चौरचण्डालप्रायाणां वज्रपञ्जरः ॥१४८॥

कायस्था रुद्रपालाप्ताः प्रजानां पीडनं व्यधुः । चकारान्धमठं श्रीमानुत्पलाख्यो यदग्रणीः ॥१४९॥

कियद्भूपालवाल्लभ्यमन्यत्तस्याभिधीयताम् । जालन्धराधिपस्ये[1]न्दुचन्द्रस्येन्दुमुखीं सुताम् ॥१५०॥

उपयेमे मनोज्ञत्वाज्ज्येष्ठामास[1]मतिं स्वयम् । यया मठः स्वाभिधया विदधे त्रिपुरेश्वरे ॥१५१॥

तस्याः किंचिद्वयो[1]न्यूनां स्वसारं यो यवीयसीम् । अथ सूर्यमतीं देवीं भूभुजे परिणीतवान् ॥१५२॥

रुद्रेण भूपतिः सख्या स कर्णसुखदायिना । पात्रीकृतो दुर्नयानां कर्णेनेव सुयोधनः ॥१५३॥

कम्पनाधिपतिस्तत्र क्षणे त्रिभुवनो बली । आययौ भूपतेर्हर्तुं राज्यं संभृतडामरः ॥१५४॥

आकृष्टाशेषकटके तस्मिन्योद्धुमुपागते । एकाङ्गाः सहयारोहा राजपक्षं न तत्यजुः ॥१५५॥

असिना लङ्घयन्प्रासानमोघाञ्श्लाघ्यविक्रमः । प्रजहारानन्तदेवः स्वयं त्रिभुवनं रणे ॥१५६॥

संनाहरक्षिताङ्गः स दृढप्रहतिपीडितः । विदद्रौ[1] वदनेनासृक्स्वप्रतापमिवोद्वमन् ॥१५७॥

विनयच्छन्नशौटीर्यैः[1] शिशुप्रायैः[2] स भूपतिः । दृष्ट्वा बलमसंभाव्यं तस्मिंस्त्यक्त्वा रणं गते ॥१५८॥

---

१३३. [1]) त्यविगाना supplied by $A_3$ in space left by $A_1$. १३५. [1]) $A_4$ gloss तस्या अपरः पुत्रः. १३६. [1]) Thus $A_3$; $A_1$ रत्नं. १३९. [1]) Thus A R; G C हन्तुं. १४१. [1]) Thus corr. by $A_3$ from $A_1$ प्रविष्टो. १४७. [1]) Thus corr. by $A_3$ from $A_1$ °मापटले. १५०. [1]) प supplied by $A_3$. १५१. [1]) मास supplied by $A_3$ in space left by $A_1$. १५२. [1]) Thus $A_1$; $A_3$ किंचिदिव. १५७. [1]) $A_3$ gloss चचाल. १५८. [1]) $A_3$ gloss शौटीर्य अभिमानः प्रागल्भ्यं वा.—[2]) $A_3$ gloss शिशुसदृशः.

शमालाडामरं घ्नन्तं प्राप्तैरभिनवाभिधम् । शालास्थले व्यधाच्छ्लाघ्यविक्रमो मोघविक्रमम् ॥१५९॥
मांसासृग्वेष्टनायष्टीभूतखड्गो भ्रमन्रणे । भुवनक्षोभकृदभूद्भैरवोनन्तभूपतिः ॥१६०॥
पश्यन्प्रहारलूनाङ्गानेकाङ्गान्स पदे पदे । निवेद्यमानान्प्रस्थैर्नामग्रहणपूर्वकम् ॥१६१॥
क्षितिभृज्जातदाक्षिण्यो विलब्धिस्थावरे ततः । चाम्बल्यमक्षपटलादेकाङ्गानां न्यवारयत् ॥१६२॥ युग्मम् ॥
एवं तत्र कृतज्ञेन भृत्येभ्यः प्रतिपादिता । विलब्धिस्तेन दीनारकोटिषण्णवतेः क्रमात् ॥१६३॥
राज्ञो रणान्निवृत्तस्य दुग्धसेकैः करात्त्सरुः । स्थिरग्रहदृढः कृष्टश्चिरेणेति जनश्रुतिः ॥१६४॥
अहो महत्त्वं भूभर्तुर्दीनो देशान्तरागतः । तादृक्त्रिभुवनो येन संलिभेजे विमन्युना ॥१६५॥
ब्रह्मराजाभिधस्तेन बन्धुर्गञ्जाधिपः कृतः । रुद्रपालकृतद्वेषो विरक्तश्चलितो ययौ ॥१६६॥
सप्तभिर्म्लेच्छभूपालैः समं मिलितडामरः । तेनानीतो दरद्राजो यत्नादचलमङ्गलः ॥१६७॥
क्षीरपृष्ठाभिधं ग्रामं प्राप्तस्य समरोत्सुकः । तस्याग्रं विक्रमोदग्रो रुद्रपालो विनिर्ययौ ॥१६८॥
श्वो व्यवस्थापिते युद्धे सैन्याभ्यां दरदीश्वरः । क्रीडन्पिण्डारकाख्यस्य नागस्य भवनं ययौ ॥१६९॥
दुर्नयाचरणात्तत्र पार्श्वस्थैर्वारितोपि सः । प्लवमानस्य मत्स्यस्य गात्रे कुन्तमपातयत् ॥१७०॥
अथोज्जगाम गोमायुवपुः कुण्डाद्भुजंगमः । स च तं मृगयौत्सुक्यादधावद्दरदीश्वरः ॥१७१॥
तमापतन्तमालोक्य व्यवस्थोन्मूलनं विदत् । आस्कन्दाशङ्कि भूभर्तुः सैन्यं युद्धाय निर्ययौ ॥१७२॥
अभूत्ततोस्त्रसंघर्षसंजातानलसंहतिः । कृतस्वर्गाङ्गनोद्वाहो वीराणां समरोत्सवः ॥१७३॥
तस्मिन्महाभटाटोपे शिरश्छिन्नं दरत्पतेः । रुद्रस्य रौद्रमहसः संप्ररूढं यशः पुनः ॥१७४॥
समरे वधबन्धादि म्लेच्छराजाः प्रपेदिरे । संप्राप हेमरत्नादि पुनः कश्मीरभूपतिः ॥१७५॥
उत्तंसमुक्ताद्योताम्भःक्षालितास्रझलज्झलम् । रुद्रपालो दरद्राजशिरो भर्तुरुपानयत् ॥१७६॥
भ्रात्रोदयनवत्सेन कृतप्रायैस्तथा द्विजैः । बह्वश्चैवंविधास्तस्य बभूवुरवदालिकाः ॥१७७॥
रुद्रपाले ततो लूतामयेन प्रमयं गते । अन्येपि शाहितनयाः क्षिप्रमेव क्षयं ययुः ॥१७८॥
पालस्नेहान्ध्यविगमे शुद्धाशयजुषोभवत् । देवी सूर्यमती भर्तुर्दर्पणस्येव बिम्बिता ॥१७९॥
सुभटापरनामा सा गौरीश्वरविधायिनी । पुण्यं वितस्तापुलिने निर्ममे सुभटामठम् ॥१८०॥
गोहेमहयरत्नादिप्रदानैः सुबहून्द्विजान् । सदाशिवप्रतिष्ठायामदरिद्रांश्चकार सा ॥१८१॥
आशाचन्द्रापराख्यस्य कल्हनस्यानुजन्मनः । नाम्ना व्यधापि वात्सल्यात्साग्रहारो मठस्तया ॥१८२॥
सिल्लनाख्यस्य च भ्रातुर्भर्तुश्चाभिधया सती । मठौ चाकारयत्पार्श्वे विजयेशामरेशयोः ॥१८३॥
अष्टोत्तरं चाग्रहारशतं श्रीविजयेश्वरे । ब्राह्मणेभ्यो महापुण्यं विद्वद्भ्यः प्रत्यपादयत् ॥१८४॥
पत्युर्नाम्नाप्यग्रहारान्प्रददावमरेश्वरे । त्रिशूलबाणलिङ्गादिप्रतिष्ठाश्च विनिर्ममे ॥१८५॥

---

१५९. 1) Thus corr. by $A_3$ from $A_1$ मेघवक्रियम्. १६२. 1) Supplied by $A_3$. १६६. 1) Emended with G C; A कृपः. १६७. 1) $A_3$ gloss ब्रह्मराजेन.— 2) दचलमङ्गलः supplied by $A_3$ in space left by $A_1$; $A_3$ gloss नाम. १६८. 1) Thus $A_1$; $A_3$ खरपृष्ठा°, with gloss खरोट्ट इति ग्रामः क्रमराज्ये. १७२. 1) Emended; A विदन्. १७६. 1) $A_3$ gloss उत्तंसभूताः या मुक्ताः मुक्तामणयः तासां यो द्योतः दीप्तिः स एवाम्भः तेन क्षालिता अस्रस्य रुधिरस्य झलज्झलाकाचकच्यं प्रकाशः स्फार इति यावत् यस्य तत् इति शिरोविशेषणं। झलज्झला तु शोभायामिति कोशः मुक्ताफलदीप्तेरतिशुक्लत्वादम्भस्त्वेन रूपणम्। जलस्य हि शुक्लं रूपमिति वैशेषिकाः॥.— 2) Thus corr. by $A_3$ from $A_1$ झलज्जलम्.— 3) Thus corr. by $A_3$ from $A_1$ °रुपायनम्. १७७. 1) Thus $A_3$; $A_1$ तथा ह्येवं°.

दंपती राजराजाख्ये मृते पुत्रे प्रचक्रतुः । सदाशिवान्तिके राजवेश्म संत्यज्य तौ स्थितिम् ॥१८६॥
ततः प्रभृति संत्यज्य पूर्वराजकुलस्थितिम् । तयैव रूढ्यां भूपालास्तत्रैव वसतीर्व्यधुः ॥१८७॥
पार्थिवस्याश्वशालीयाः प्रियत्राजितया प्रियाः । प्रसादैर्देशलुण्ठ्यां[1] च सर्वतः समतां ययुः ॥१८८॥
गर्भेश्वरतया भर्तुर्वल्लभो नर्मकोविदः । अलुण्ठयत्प्रजा नित्यं डल्लको नाम दैशिकः ॥१८९॥
मालवाधिपतिर्भोजैः[1] प्रहितैः स्वर्णसंचयैः । अकारयद्येन कुण्डयोजनं कपटेश्वरे ॥१९०॥
प्रतिज्ञा भोजराजेन पापसूदनतीर्थजैः । सततं वदनस्नाने या तोयैर्विहिताभवत् ॥१९१॥
अपूरयत्तस्य यस्तां[1] दुस्तरां नियमादितः । प्रहितैः काच[2]कलशीकु[3]लैस्तद्वारिपूरितैः ॥१९२॥
स तस्य पद्मराजाख्यः पर्णप्राप्ति[1]कदैशिकः । प्रियताम्बूलशीलस्य त्यागिनो वल्लभोभवत् ॥१९३॥ चक्कलकम् ॥
तेन नागरखण्डादिपर्णविक्रयिणा नृपः । देशोत्पत्तिधनं प्रायो निःशेषं दापितस्तदा ॥१९४॥
पञ्चचन्द्रकशोभाङ्कमौलिसिंहासने[1] नृपात् । बन्धायादत्त लब्धव्ये धने स धनिकोधिके ॥१९५॥
तद्राजचिह्नमास्थानोपयुक्तं तस्य मन्दिरात् । आनीयमानं मासार्धवासरे मासि मास्यभूत् ॥१९६॥
स्वकोशसंचयं दत्त्वा देवी सूर्यमती ततः । पद्मराजोद्भवां देशस्याव्यवस्थां न्यवारयत् ॥१९७॥
शमिते चाश्वशालीयडल्लकादिभये तदा । प्रावर्तन्त पुनर्देशे व्यवस्था निरुपद्रवाः ॥१९८॥
ततः प्रभृति राज्ञ्येव राजकार्योद्यताभवत् । तस्थौ शौर्यकथां त्यक्त्वा राजा कार्यकरः पुनः ॥१९९॥
भर्तुर्नारीविधेयत्वं तस्या भर्तृजयस्तथा । निष्कलङ्केन शीलेन[1] नान्योन्यं गर्ह्यतां[2]मगात् ॥२००॥
भवभक्तिव्रतस्थानं[1]त्यागशीलादिभिर्गुणैः । कृतिनानन्तदेवेन मुनयोपि विनिर्जिताः ॥२०१॥
राज्ये तस्य महीभर्तुर्दीर्घे तांस्तानलङ्घयत् । पतिंवरेव राजश्रीर्भृत्यान्नवनवोन्मुखी ॥२०२॥
क्षेमाभिधो राजगञ्जपूरणं बालभञ्जकः[1] । व्यधाद्द्वादशभागादिप्रकारैर्ढौकयन्धनम् ॥२०३॥
मन्त्री ततोभवत्साधुस्त्रैगर्तः केशवो[1] द्विजः । सौधश्चन्द्रातपेनेव भूपालो येन भूषितः ॥२०४॥
भ्राम्यन्गतश्रीरेकाकी स एव ददृशे जनैः । भाग्याम्बुवाहतडितो निविडाः कस्य संपदः ॥२०५॥ युग्मम् ॥
भाग्याधीनं धनं ध्यात्वा मुधा मुग्धधियामसौ । कुलविक्रमयोर्दर्पो मिथ्यैव पृथुतां प्रति ॥२०६॥
प्रासादपालवैश्यस्य गौरीशत्रिदशालये । भूतेर्[1]हलधरो वज्रो वराहश्चाभवन्सुताः ॥२०७॥
तेभ्यो हलधरः सूर्यमत्या विहितसेवनः । वृद्धिं दिने दिने गच्छंल्लेभे सर्वाधिकारिताम् ॥२०८॥
विधेयान्बुद्धियुक्तेन[1] कुर्वतः क्षित्यनन्तरान्[2] । सपत्नीकोभवत्तस्य मुखप्रेक्षी क्ष्मापतिः ॥२०९॥
क्षेमेण सूत्रितं पूर्वं सपादाग्रमुदग्रधीः । कर्मस्थानं स्फुटीचक्रे सर्वस्थान[1]धुरंधरम् ॥२१०॥
अभूद्वर्णकमूल्यादिलेखनं कनकस्य यत् । राजायत्तं जनस्यार्थसंचयानां प्रकाशकम् ॥२११॥
स तन्निवारयामास भाविनां भूभुजां विदन् । ज्ञानी[1] संचितवित्तस्य दण्डाद्यायासकारिताम् ॥२१२॥

---

१८७. [1]) Thus corr. by $A_3$ from $A_1$ रूढा. १८८. [1]) Thus corr. by $A_3$ from $A_1$ °लुण्ठा. १९०. [1]) Thus corr. by later hand from $A_1$ °भोजैः. १९२. [1]) $A_3$ gloss प्रतिज्ञां.—[2]) Thus corr. by later hand from $A_1$ प्रहितै काशक°.—[3]) $A_3$ gloss शेष इति भाषया. १९३. [1]) $A_3$ gloss ग्रामविशेषः. १९५. [1]) Thus corr. by later hand from $A_1$ °सनं. १९६. [1]) र्घ supplied by $A_3$ in space left by $A_1$. २००. [1]) Thus corr. by later hand from $A_1$ शीलेना.—[2]) Thus corr. by $A_3$ from $A_1$ गृह्यता°. २०१. [1]) Thus corr. by $A_3$ from $A_1$ °स्थान°. २०३. [1]) $A_3$ gloss नापितः. २०४. [1]) Thus corr. by later hand from $A_1$ कैशवो. २०७. [1]) Thus $A_1$; $A_3$ भूतिर्ह°. २०९. [1]) Thus $A_1$; $A_3$ °शुद्धेन.—[2]) Thus corr. by $A_3$ from $A_1$ °न्तरम्. २१०. [1]) Thus $A_1$; $A_3$ सर्वकार्यधु°. २१२. [1]) Thus $A_3$; $A_1$ ज्ञाने.

भर्त्सितानश्वशालीयान्धनदारापहारिणः । कांश्चिद्व्यापाद्य स शमं निन्ये लोकस्य विप्लवम् ॥२१३॥
तेनायासहता नीतः कच[1]त्स्वर्णैः सुरास्पदैः । शोभां मठाग्रहारैश्च वितस्तासिन्धुसंगमः ॥२१४॥
भ्रातरश्च सुताश्चास्य लक्ष्मीपरिचयोन्मदाः । द्विरदा इव न क्वापि दानप्रणयितां जहुः ॥२१५॥
तद्भ्रातृपुत्रो बिम्बाख्यः श्रीमान्वीरो वराहजः । द्वाराधिकारकार्यासीद्दानप्रलयवारिदः ॥२१६॥
स डामरकुलाकालमृत्युः स्वल्पानुगोभव[1]न् । खशाहवे जहौ[2] प्राणान्पलायनपराङ्मुखः ॥२१७॥
चम्पायां सालभूपालमुन्मूल्यानन्तभूपतिः । तत्तन्नृपजयी नव्यं धराधवमरोपयत् ॥२१८॥
मन्त्रशून्येन शौर्येण परदेशेषु भूपतिः । हठप्रवेशान्विदधत्सोभूत्कृच्छ्रगतोसकृत् ॥२१९॥
तुक्का[1]त्मजस्य कलशस्यारब्धौ खिन्नसैनिकम् । अमोचयद्धलधरो युक्त्या वल्लापुरादमुम् ॥२२०॥
उरशां च प्रविष्टस्य वैरिरुद्धाध्वनो व्यधात् । कम्पनाधिपतिस्तस्य मार्गान्सं[1]शोध्य निर्गमम् ॥२२१॥
कालेनानन्तमहीभर्तुर्वैरिविग्रहसंकटे । साहसान्युदजृम्भन्त तानि तानि क्षणे क्षणे ॥२२२॥
राजेश्वरो द्वारपतिः श्रीमान्भद्रेश्वरात्मजः । डामरैः क्रमराज्यस्थैरन्येपि बहवो हताः ॥२२३॥
वीक्ष्य नीतिदृशा कार्यं भीत्या व्यवहरन्नपि । भृत्यतां निष्परिभवां को भुङ्क्ते नृपमन्दिरे ॥२२४॥
दुष्प्रवादास्पदीभूतो देव्या निविडसेवनात् । आशाचन्द्रादिभिः क्रुद्धैर्बद्धो हलधरोप्यभूत् ॥२२५॥
स राज्ञा हतसर्वस्वो बन्धनक्लेशमन्वभूत् । भाग्यप्रभावे निःसारे सुखमेकान्ततः कुतः ॥२२६॥
नृपेण बन्धनात्त्यक्तं तं श्रीः प्रत्यागता पुनः । आलिलिङ्ग सितच्छत्रलज्जास्मितसितानना ॥२२७॥
स राज्याः प्रावृष इव प्रणयेन क्षणे क्षणे । कोपप्रसादमेघार्कपर्यायापातमन्वभूत् ॥२२८॥
ततः सरलचित्तस्य क्रमेण समपद्यत । भार्याजितत्वं भूभर्तुर्दुर्विपाकार्पणोन्मुखम् ॥२२९॥
अधिकारपरित्यागाद्दोषाननुशयावहान् । वदद्भिर्वार्यमाणोपि प्राज्ञैर्हलधरादिभिः ॥२३०॥
पत्न्या संप्रेरितः शश्वत्तनयस्नेहमूढया । पुत्राय कलशायाभूद्राज्यं दातुं समुद्यतः ॥२३१॥
यास्यस्यनुशयं राजन्नेवंवाद्यपि कारितः । सज्जं[1] तेन रणादित्यनामा क्षत्ताभिषेचनम्[2] ॥२३२॥
एकान्नचत्वारिंशस्य वर्षस्य तनयः[1] सिते । षष्ठेह्नि बाहुलस्या[2]भूदभिषिक्तो महीभुजा ॥२३३॥
अथास्थाने रणादित्यो राजपुत्रान्निवेशयन् । चिन्तयन्राज्यमाहात्म्यं प्रतिप[1]त्तिषु निष्ठुरः ॥२३४॥
अनन्तो राजपुत्रोयं देवेति कथयन्वचः । कृकाटिकान्यस्तहस्तः क्षितिपालं न्यवेदयत् ॥२३५॥
कुपितेन स भूभर्त्रा परिवृत्यावलोकितः । एवं कृतस्मितो व्यक्तं तमूचे नीतिनिष्ठुरः ॥२३६॥
इत्थं यत्र निवेद्यन्ते कान्यकुब्जादिभूभुजः । तत्रैव त्यक्तराज्यस्य कान्यास्तु प्रक्रिया तव ॥२३७॥
दिने दिने सानुशयो नियतं भविता भवान् । नाभिमानपरित्यागः कर्तुं शक्यो मुनेरपि ॥२३८॥
सुदूरदर्शिनां तत्र मन्त्रिणां हृदयंगमम् । राजा तस्य वचः श्रुत्वा प्रतिवाक्याक्षमोभवत् ॥२३९॥
दृष्ट्वान्येद्युर्नवं भूपं राजचक्रेण सेवितम् । नवेतरं च सहितं परिमेयैः परिच्छदैः ॥२४०॥

२१४. 1) Thus corr. by $A_3$ from $A_1$ कश्चित्स्व°; $A_3$ gloss कचत् देदीप्यमानं स्वर्णं येषां तैः. २१७. 1) Thus corr. by $A_3$ from $A_1$ °भवत्.—2) Thus $A_3$; $A_1$ जहत्. २२०. 1) तुक्का supplied by $A_3$ in space left by $A_1$. २२१. 1) Thus corr. by $A_3$ from $A_1$ मार्गात्सं°. २३२. 1) सज्जं supplied by $A_3$ in space left by $A_1$.—2) $A_3$ gloss तेनानन्तदेवेन रणादित्यनामा क्षत्ता प्रतीहारः अभिषेचनं सज्जं कारित इत्यन्वयः कथं भूतः एवंवादी अपि. २३३. 1) $A_2$ gloss कलशः.—2) Thus corr. by later hand from $A_1$ बह°; $A_2$ gloss कार्त्तिकस्य. २३४. 1) प supplied by $A_2$.

धीमान्हलधरो युक्त्या कृतकार्श्ययया नृपम् । एवं निर्भर्त्स्यैयंल्लक्ष्मीं तं प्रत्याजीहरत्पुनः ॥२४१॥

विधाय निःसुखं सूनुं राज्यभारार्पणाच्छिशुम् । कस्मात्स्वसुखसापेक्षो न जिह्रेष्यत्र वार्द्धके ॥२४२॥

तत्स्वयं राजकार्याणां कार्यमुद्वहनं त्वया । अभून्यो यौवनाभोगैरयमस्तु सुतस्तव ॥२४३॥

इत्युक्त्वा स पुनर्भूपमधिकारमजिग्रहत् । चक्रे कलशदेवं च कलया युक्तिवञ्चितम् ॥२४४॥

पित्रोरेवान्तिके कुर्वन्नाहाराद्यपि संततम् । ततो बभूव कलशो नाममात्रमहीपतिः ॥२४५॥

सर्वास्थानास्त्रपूजादिविधाने पार्थिवोचिते । पितुः सहायकल्पः स पौरोहित्यमिवाकरोत् ॥२४६॥

अनिमित्तप्रहृष्टानामनिमित्तानुतापिनाम् । न क्वापि चलचित्तानां तिरश्चामिव निश्चयः ॥२४७॥

दापयित्वा पतिं राज्यं निर्बन्धेनापि तावता । सूनौ बभूव यद्राज्ञी विप्रेमैवा[1]नुतापिनी ॥२४८॥

सेर्ष्या स्नुषाणामुत्कर्षं पार्थिवप्रमदोचितम् । वेषालंकरणादौ सा रूक्षचित्ता न चक्षमे ॥२४९॥

दासीकृत्यं तया पुत्रमहिष्यः कारिताः सदा । गृहोपलेपने यावन्न वैमुख्यमदर्शयन् ॥२५०॥

पुत्रो विग्रहराजस्य क्षितिराजाभिधस्ततः । राज्ञः[1] पितृव्यजो भ्राता कदाचित्पार्श्वमाययौ ॥२५१॥

तस्मै न्यवेदयत्खेदं स चित्तस्योपतापकम् । पुत्रे भुवनराजाख्ये राज्यलुब्धेतिविश्रुते ॥२५२॥

स हि तस्यात्मजो नीलपुराराज्यं[1] समाश्रितः । तद्बलैः पितुरारब्धिं[2] विधातुं सोद्यमोभवत् ॥२५३॥

नाम भागवतानां च पूज्यानां स्वपितुर्व्यधात् । दत्त[1]यज्ञोपवीतानां शुनामशुचिमानसः ॥२५४॥

क्षितिराजः स्ववध्वां च विरुद्धायां विशुद्धधीः । मनस्तापापहे चक्रे सर्वत्यागामृते स्पृहाम् ॥२५५॥

राज्यं कलशपुत्राय ज्येष्ठानन्तरजन्मने[1] । रामलेखाभिधानायां राज्ञ्यां जाताय सत्वरम् ॥२५६॥

दत्त्वा स्तनंधयायापि तदोत्कर्षाभिधाय सः । राजर्षिर्विबुधैः सार्धं विदधे तीर्थसेवनम् ॥२५७॥

भुक्त्वा शमसुखं भूरीन्वर्षान्परमवैष्णवः । स चक्रायुधसायुज्यं ययौ चक्रधरे सुधीः ॥२५८॥

स[1] च भोजनरेन्द्रश्च[2] दानोत्कर्षेण विश्रुतौ । सूरी तस्मिन्क्षणे तुल्यं द्वावास्तां कविबान्धवौ ॥२५९॥

पितुः[1] पितृव्यजाद्भ्रातुर्जातस्या[2]नन्तभूभुजा[3] । तन्वङ्गराजस्योत्सङ्गे[4] नप्ता[5] न्यासीकृतः शिशुः ॥२६०॥

तन्वङ्गोपि विवृद्धिं तन्नीत्वा राष्ट्रं शिशुं च तम् । पुनः प्रविष्टः कश्मीरानस्तं चक्रधरे ययौ ॥२६१॥

सर्वसाधारणीभूतभोगानां राजबीजिनाम् । तावज्ज्ञातेयमभवन्नेह द्रोहकलङ्कितम् ॥२६२॥

इन्दुराजात्मजात्सिद्धराजो यो बुद्धराजतः । जातो मदनराजाख्यं वीरं पुत्रमजीजनत् ॥२६३॥

अत्युत्सिक्तः[1] सुतस्तस्य दूरं[2] नृपतिमण्डलात् । विधुरे राज्ञि निर्यातः शौर्योद्रेकादखण्डितः ॥२६४॥

तदानीं जिन्दुराजाख्यो डामरोद्रेकखिन्नया । राज्ञ्या स्वयं गृहं नीत्वा[1] साचिव्यं ग्राहितोभवत् ॥२६५॥

काणः शोभाभिधस्तेन गाढोद्वेगावहः प्रभोः । देग्राम[1]स्थो डामरोथ दत्त्वास्कन्दं निपातितः ॥२६६॥

२४८. [1]) $A_2$ gloss विप्रेमा निस्स्नेहा ; $A_3$ क्षिप्रमेवानुतापिनी इत्यन्यादर्शे. २५१. [1]) ज्ञः supplied by $A_3$ in space left by $A_1$. २५३. [1]) Thus $A_1$ ; $A_3$ नीलपूरराज्यं.—[2]) Thus corr. by $A_3$ from $A_1$ °रालब्धिं ; $A_3$ gloss आस्कन्दं. २५४. [1]) दत्त supplied by $A_3$ in space left by $A_1$. २५६. [1]) $A_4$ gloss कलशदेवस्य द्वौ पुत्रौ ज्येष्ठो हर्षदेव एकः कनिष्ठ उत्कर्षो द्वितीयः. २५९. [1]) $A_4$ gloss अनन्तदेवः.—[2]) $A_4$ gloss भोजराजश्च. २६०. [1]) $A_4$ gives in margin a genealogical list showing the descendants of the brothers उदयराज and कान्तिराजः उदयराज, संग्रामदेव, अनन्तदेव, कलश, and कान्तिराज, जस्सराज, तन्वङ्ग.—$A_4$ gloss ( to पितुः) संग्रामदेवस्य.—[2]) $A_4$ gloss कान्तिराजपुत्रजस्सराजात्.—[3]) $A_4$ gloss तन्वङ्गस्य.—[4]) Thus corr. by $A_3$ from $A_1$ तन्वत्राज°.—[5]) $A_4$ gloss पौत्र उत्कर्षः. २६४. [1]) Thus corr. by $A_3$ from $A_1$ इत्यु°.—[2]) $A_3$ दूरं नृपतीत्यन्यादर्शे. २६५. [1]) Thus $A_1$ ; $A_3$ गत्वा. २६६. [1]) $A_3$ gloss देगामो इति भाषया.

कम्पनाधिपतां दत्त्वा ततस्तस्य प्रतापिनः । पार्थिवो[1] राजपुर्यादीन्देशांश्चक्रे[2] करप्रदान् ॥२६७॥
अनन्तभूभुजो राज्ये तत्तत्स्खलितसंकटे । आलम्बयष्टिप्रतिमो ययौ हलधरः क्षयम् ॥२६८॥
मुमूर्षुणा चक्रधरे तेन पार्श्वस्थितो नृपः । सजानिरुपदेशार्थी स तदेत्थमकथ्यत ॥२६९॥
मा कार्ष्ट परराष्ट्रेषु रभसारब्धिसाहसम् । युक्त्या वल्लापुरादौ वो ह्यपोढं व्यसनं मया ॥२७०॥
विशङ्क्यो जिन्दुराजोयं पराध्यां वृद्धिमागतः । भेदं वः सह पुत्रेण[1] जयानन्दो[2] विधास्यति ॥२७१॥
कथितं तेन[1] तत्स्मृत्वा जिन्दुराजं महौजसम् । बिज्जेनाबन्धयद्राजा युक्तिमांस्त्याजितायुधम् ॥२७२॥
अथ कालेन कलशक्ष्माभृत्कलुषिताशयः । भृत्यैरसाधुसंसेव्ये प्रसक्तिं प्राहितोध्वनि ॥२७३॥
तस्याभवन्बिज्ज[1]पित्थराजपाजादयः प्रियाः । उत्सेकदा राजपुत्राश्चत्वारः शाहिवंशजाः ॥२७४॥
पुत्रो गङ्गपतेर्नागनाम्नो[1] निकटसेवकः । सोपि तस्य जयानन्दः कौटिल्याध्यापकोभवत् ॥२७५॥
द्विजेन्द्रेमरकण्ठे तु याते शिवसमानताम् । राजा प्रमदकण्ठस्य ययौ तज्जस्य[1] शिष्यताम् ॥२७६॥
दुःशीलस्य प्रकृत्यैव तस्याकृत्योपदेशकृत् । गम्यागम्यविचारस्य परिहर्ताभवद्गुरुः ॥२७७॥
गुरोर्गतविकल्पत्वं तस्यान्यत्किमिवोच्यताम् । त्यक्तशङ्कः प्रववृते स्वसुतासुरते[1]पि यः ॥२७८॥
महासमयसंचारचतुरैर्यैरभीतितः । गण्यते स्वप्रभावोग्रैर्भैरवोपि न निर्भयैः[1] ॥२७९॥
ते भट्टपादास्त्रासेन पतिता भग्नजानवः । बिडाल[1]वणिजा स्वस्थाः शिरोहस्तार्पणैः कृताः ॥२८०॥
पुरा कृष्णबिडालाङ्को वणिक्कश्चिदिहाभिधाम् । बिडालवणिगि[1]त्यात्मनामविस्मारिकां दधे ॥२८१॥
[1]यो व्याजमूर्खो वैद्यत्वगुरुत्वाहंकृतः क्रमात् । पदकृद्रजकादीनां शिल्पिनां गुरुतामगात् ॥२८२॥
स भट्टपादानुल्लाघांश्चक्रे मूर्ध्न्यधिरोपयन् । श्रेष्ठी बिडालविष्ठौघहिङ्गुगन्धोत्कटं करम् ॥२८३॥
एवं प्रकृतिनिःसारैरपि गर्जद्भिरन्वहम् । आन्ध्यं स गुरुभिर्निन्ये दिवसोम्बुधरैरिव ॥२८४॥
ये दीर्घजागरा[1] रात्रौ भूरिभोजनसेविनः । अजीर्णपिशितोद्गारनित्यदुर्गन्धकन्धराः ॥२८५॥
अवस्करप्रणालाभाः पृष्ठे क्षिप्रम[1]धःपथैः । शौचपाथ इव क्षिप्रमुज्झन्ति मधुनिर्झरम् ॥२८६॥
नक्तमातोद्यवाद्यज्ञैस्तैः सार्धं कृतसेवनः । चारणो वेणुवाद्यज्ञो योषितां धर्षयन्हठात् ॥२८७॥
कनकाख्ये मठोग्रामे क्रुद्धे हलधरात्मजे । स्तम्भे निबध्य तद्भृत्यैश्छिन्ननासो व्यधीयत ॥२८८॥
यो त्रिटश्चमको नाम लूनाङ्गोमङ्गलावहः । शनैर्लेभे स वाल्लभ्यं कौड्डिन्या[1]न्नवभूपतेः ॥२८९॥
प्रसादवित्तो भूभर्तुरन्तरे मन्त्रिणामपि । लब्धप्रतिष्ठः स प्राप ठक्कुराख्यां नृकुक्कुरः ॥२९०॥
प्रथां प्राप्तस्त्रपा[1]हेतुं स भञ्जन्वंशमञ्जसा । प्रागेव नासावंशस्य भञ्जनं बहमन्यत ॥२९१॥
तेनोद्दीपितदौःशील्यः स यच्चक्रे[1] त्रपोज्झितः । अवाच्यमपि वृत्तान्तं मध्यपातात्तदुच्यते ॥२९२॥
कल्हनाख्या स्वसा राज्ञो नागाख्या च तदात्मजा । परदारप्रसक्तेन संभोक्तुं नावशेषिता ॥२९३॥

२६७. [1]) Thus corr. by $A_3$ from $A_1$ सपर्थो and °न्देशाञ्चक्रे.—[2]) $A_3$ gloss राजविट्. २७१. [1]) $A_4$ gloss कलशेन.—[2]) $A_4$ gloss अनन्तदेवगङ्गपतेर्नागनाम्नो भृत्यस्य पुत्रः. २७२. [1]) $A_4$ gloss हलधरेण. २७४. [1]) Emended; A R G °भवाद्विज्ज°. २७५. [1]) $A_4$ gloss तुङ्गभ्रातुः. २७६. [1]) Thus corr. by $A_3$ from $A_1$ तज्जनशि°. २७८. [1]) र supplied by $A_3$; $A_3$ gloss स्वा आत्मीया चासौ पुत्री तस्याः सुरते सम्भोगे. २७९. [1]) Thus $A_1$; $A_3$ निर्भयः. २८०. [1]) Thus corr. by $A_3$ from $A_1$ बिडाज°. २८१. [1]) Thus corr. by $A_3$ from $A_1$ बिडालनाम इत्या°. २८२. [1]) This verse has been omitted by $A_1$ and added in margin by $A_3$: found in R G. २८५. [1]) Thus $A_3$; $A_1$ °जागराद्रात्रौ. २८६. [1]) Thus corr. by $A_3$ from $A_1$ क्षिप्रम°. २८९. [1]) Thus corr. by $A_3$ from $A_1$ कौड°. २९१. [1]) Thus $A_3$; $A_1$ कथामासो॑पाहेतुं. २९२. [1]) Thus R G; A यश्चक्रे.

तमुदन्तं सपत्नीको बुद्धवान्वृद्धभूपतिः । न प्रत्यभैत्सीत्त्रपया तस्थौ तु निभृतव्यथः ॥२९४॥

भिक्षको[1] धान्यमुष्टीनामोवनां[2]ग्रामजो द्विजः । योऽप्यभूद्ग्रामदैवज्ञो वैधेयो लोष्टकाभिधः ॥२९५॥

स ग्रामक्षेत्रपालस्य प्रसादात्पर्यटन्निशि । वस्तूनां मुष्टिबद्धानां विज्ञानान्मुष्टिलोष्टकः ॥२९६॥

परां प्रसिद्धिं संप्राप्तो नवक्ष्मापस्य रागिणः । आसीद्गुरुत्वकौट्टन्यदैवज्ञत्वे रतिप्रियः ॥२९७॥ तिलकम् ॥

भट्टारकमठा[1]धीशः साधुर्व्योमशिवो जटी । खुर्खुटाख्याधिकरणे गृहीतनियतव्रतः ॥२९८॥

अन्धगान्धर्विकान्मम्मनाम्नः स्वार्चनसेवकात् । अवन्तिपुरजं हस्तग्राहकद्विजचेलकम्[1] ॥२९९॥

परिभ्रष्टमुपादत्त लालितत्वेन यं[1] पुरा । स तेनं[2] वारिताशस्तभङ्गासूत्रमयाम्बरः ॥३००॥

विसृज्यमानः पुष्पाणि ग्राहयित्वा नृपान्तिकम् ।[1] .................. ॥३०१॥

मदनो नाम वाचालः प्रपेदेत्यन्तरङ्गताम् । शनैः कौट्टन्यदुर्गोष्ठीमध्यपातं समाश्रयन् ॥३०२॥ चक्कलकम् ॥

तैश्चान्यैश्च विटैश्चाटुकारैः क्षिप्रविमोहितः । दोषानपि गुणान्मेने कलशः कलुषीकृतः ॥३०३॥

नर्म ह्रेपणकारि वाक्यमुचितं कृत्यं प्रजापीडनं तेजस्वित्वमलज्जता सरसतागम्याङ्गनासंगमः ।
सारल्यं खलगालिदानसहनं येषां न तत्संनिधौ किंचित्कर्म कुकर्म दोष इति यद्विज्ञाय संत्यज्यते ॥३०४॥

राजा चौर्यरतौत्सुक्यात्प्रतिगेहं परिभ्रमन् । स्वदारालिङ्गनैः प्रीतिं क्षणदासु न लब्धवान् ॥३०५॥

पारतन्त्र्यकृतापारप्रीतिः परवधूरतिः । अभिलाषानलोत्सेके रागभाजां घृताहुतिः ॥३०६॥

तान्कुट्टना[1]न्पुरस्कृत्य पश्चिषानेकदा नृपः । जिन्दुराजगृहं प्रायात्स रात्रौ चौर्यकामुकः ॥३०७॥

तत्रासीज्जिन्दुराजस्य स्नुषा परमपुंश्चली । स्वगृहे दत्तसंकेता नक्तं कलशभूभुजः ॥३०८॥

प्रविशन्तमधावंस्तं भषद्भिः सूचितं श्वभिः । धृतासयो गृहद्वारं चण्डालाश्चौरशङ्किताः ॥३०९॥

तान्हन्तुमुद्यतान्दृष्ट्वा तं क्षितौ पतितं भयात् । पृष्ठन्यस्तस्ववपुषो ररक्षुरनुयायिनः ॥३१०॥

तेभ्यः स मुष्टिघातादि ददद्भ्यः कथमप्यभून्[1] । मैवं कलशदेवोऽयमित्युक्त्वा त्याजितो निजैः ॥३११॥

प्राणहीनं[1] पुरस्कृत्य नारीमभिससार यत् । तदेव कामिनस्तस्य नूनमासीदमङ्गलम् ॥३१२॥

स निर्यातो गृहात्कान्ताकटाक्षविवशीकृतः । पथि कालीकटाक्षा[1]च्च दैवान्न प्रलयं ययौ ॥३१३॥

निजचित्तापराधेन कुर्वन्नीतिव्यतिक्रमम् । अस्पृश्येभ्यः परिभवं भूपालोऽप्युप[1]लब्धवान् ॥३१४॥

इन्द्रियैरिन्द्रचन्द्राद्या ह्रेपिता यैः सुरा अपि । अपरिम्लानमानत्वं तैर्मर्त्यस्याथ वा कथम् ॥३१५॥

प्रागुन्मीलति दुर्यशः सुविषमं गर्वोऽभिलाषस्ततो धर्मः पूर्वमुपैति संक्षयमथो श्लाघ्योऽभिमानक्रमः ।
संदेहं प्रथमं प्रयात्यभिजनं पश्चात्पुनर्जीवितं किं नाभ्येति विपर्ययं विगलने शीलस्य चिन्तामणेः ॥३१६॥

राजधानीमवाप्तस्य दुःशीलस्य महीपतेः । क्षपायामेव तां वार्तां पितरावधिजग्मतुः ॥३१७॥

तौ रुदित्वा सुतस्नेहलज्जाशोकान्वितौ चिरम् । निश्चयं बन्धने तस्य सदोषस्य प्रचक्रतुः ॥३१८॥

सर्वविद्यानिधिं ज्येष्ठं नप्तॄणां बप्पिकात्मजम् । हर्षं राज्ये चिकीर्षू च निन्यतुस्तां निशीथिनीम् ॥३१९॥

---

२९५. [1]) Thus A B G; C भिक्षुकः.—[2]) $A_2$ gloss उयन् नाम ग्रामः. २९८. [1]) $A_3$ gloss भट्टीमट्ट. २९९. [1]) The second half of this verse has been omitted by $A_1$ and supplied by $A_3$ in margin. ३००. [1]) $A_4$ gloss मदनं वक्ष्यमाणं.—[2]) $A_4$ gloss व्योमशिवेन. ३०१. [1]) $A_1$ indicates here a *lacuna* of two *pâdas*. ३०७. [1]) Thus corr. by $A_3$ from $A_1$ कुट्टनात्पु°. ३११. [1]) Thus $A_1$ originally; भूत् has been subsequently erased by $A_1$ and replaced by two dots. ३१२. [1]) $A_4$ gloss चमकं विटं. ३१३. [1]) Thus emended with C and G *sec. manu*; A °कटाक्षा-. ३१४. [1]) प supplied by $A_3$.

आकारितस्ततस्ताभ्यां प्रातः कलशभूपतिः । ऊचे बिज्जजयानन्दौ[1] साशङ्को जनकाङ्क्षयम् ॥३२०॥
तन्मतेन जयानन्ददत्तहस्तः कथंचन । अन्वीयमानो बिज्जेन स पित्रोः प्राविशद्गृहम् ॥३२१॥
पिता प्रविष्टमात्रं तं वक्त्रे दत्तचपेटकः । अभाग्यभागिञ्जहिहि क्षुरिकामित्यथाब्रवीत् ॥३२२॥
एवं त्रासविसूत्राङ्गसंधिमालम्ब्य पाणिना । सावष्टम्भं स्पृशञ्शस्त्रं बिज्जो राजानमब्रवीत् ॥३२३॥
राजन्मानवतां धुर्यो भवन्नपि भवान्कथम् । नात्याज्यं[1] मानिनां वेत्ति मानग्रहमहाव्रतम् ॥३२४॥
गृहीतवेतनेनायं राजपुत्रेण शस्त्रिणा । संकटेस्मिन्मया स्वामी जीवता त्यज्यते कथम् ॥३२५॥
पिता भवानयं पुत्रः क्षणेन्यस्मिन्महीपते । मय्यसंनिहितेमुष्य यद्योग्यं तद्विधीयताम् ॥३२६॥
मुग्धं विमोह्य नृपतिं वचोभिः स्निग्धकर्कशैः । बिज्जः स्वामिनमादाय निराक्रामत्तदन्तिकात् ॥३२७॥
बिज्जस्यापूजयन्धीरास्तद्धैर्यमतिमानुषम् । अनन्तदेवस्याप्यग्रे यदेवं स व्यजृम्भत ॥३२८॥
चण्डी नरपतेः[1] पत्नी भाव्यर्थबलवत्तया । अत्याज्यजपमौनस्था तस्मिन्नवसरेभवत् ॥३२९॥
सा चेदासिष्यतो[1]युक्ता नाभविष्यत्तदेतरत् । नियमात्सर्वनाशाद्वा बन्धनात्[2]कलशस्य वा ॥३३०॥
ततो बिज्जेन कलशः सत्वरेण प्रवेशितः । त्रस्यन्दिल्हाभिधानाया वल्लभाया निवेशनम् ॥३३१॥
शिरोर्तिरस्य संजातेत्युक्त्वा भीतं पतिं व्यधात् । सा प्राज्ञा ज्ञातवृत्तान्ता तैलेनाभ्यक्तमस्तकम् ॥३३२॥
व्याजेन तेन सर्वस्य संप्रवेशं निषिध्य सा । पतिं जुगोप विन्यस्य बिज्जं द्वारस्य रक्षणे ॥३३३॥
ततः समाधेर्विरता राज्ञी निर्भर्त्स्य भूपतिम् । कुशलान्वेषणमिषात्तनयस्यान्तिकं ययौ ॥३३४॥
बद्धुं[1] बद्धोद्यमो राजा तथैव प्रययौ यदा । दत्तप्रवेशो बिज्जेन तदैकाक्येत्र सोभवत् ॥३३५॥
निषेधादनुगन्तृणां ततः क्रुद्धो धराधवः । रुषित्वा विजयक्षेत्रं गन्तुं प्रावर्ततोद्धतः[1] ॥३३६॥
तं प्रयान्तं सपत्नीकं प्राप्तं पद्मपुरान्तिकम् । अवोचन्नेत्य तत्रस्था विश्वा[1]वट्टादयो द्विजाः ॥३३७॥
अधिकारं स्वयं त्यक्त्वा राजन्किमनुतप्यसे । कृतस्या[1]नुशयो युक्तो न सतो नासतोपि वा ॥३३८॥
न च ते दुर्मतौ त्यक्ताः[1] प्रजा एता मयेत्यपि । ध्यात्वा सूनोः समुचिता कर्तुं दुष्टस्य वाच्यता[2] ॥३३९॥
न यन्त्रपुत्रकस्येव शक्तिः कापि हि भूभुजः । भवेत्साधुरसाधुर्वा स प्रजानां शुभाशुभैः ॥३४०॥
उज्झन्ति यत्पयोवाहा जलानि तडितोथ वा । वनस्पतीनां सदसत्कर्मपाकस्य तत्फलम् ॥३४१॥
यथापथस्थितं पुत्रं त्यक्त्वेच्छस्यासितुं सुखम् । कोशं[1] त्यक्त्वा प्रस्थितस्य घटते तत्कथं तव ॥३४२॥
धाराधिरूढसामर्थ्यः सद्वंशः शुचिमानपि । संस्पृश्यते क्षीणकोशः कृपाण इव कैः पुमान् ॥३४३॥
श्रुत्वेत्यैच्छन्नृपो यावत्प्रत्यावृत्तिं विचारवान् । तावत्स पुत्रेणाभ्येत्य सभार्येण प्रसादितः ॥३४४॥
अथ प्रविश्य नगरं स प्रासादा[1]पवर्जिताम् । अशान्तमन्युरादाय लक्ष्मीं भूयो विनिर्ययौ ॥३४५॥

---

३२०. [1]) $A_3$ gloss जयानन्दः नागपुत्रः तुङ्गभ्रातृपुत्रः. ३२४. [1]) Thus corr. by $A_3$ from $A_1$ न त्याज्यं. ३२९. [1]) ण्डी नरपतेः and न्नवसरेभवत् supplied by $A_2$ in space left by $A_1$. ३३०. [1]) सिष्यतो supplied by $A_2$ in space left by $A_1$.— [2]) र्वनाशाद्वा बन्ध supplied by $A_2$ in space left by $A_1$. ३३५. [1]) Emended: $A_1$ बन्धुं; $A_3$ बन्द्धुं. ३३६. [1]) द्धतः supplied by $A_3$ in space left by $A_1$. ३३७. [1]) Emended; A विश्वाव°. ३३८. [1]) कृतस्या supplied by $A_3$. ३३९. [1]) Thus corr. by $A_3$ from $A_1$ त्यक्त्वा.—[2]) $A_3$ gloss, partly effaced, दुर्मतौ दुष्टबुद्धिविशिष्टे पुत्रे मया एताः प्रजाः त्यक्त[ाः]पुत्र एव राज्य[स्था]पना-दित्यपि [ध्या]त्वा दुष्टस्य पुत्रस्य वाच्यता निन्दा कर्तुं न समुचिता ते⁻⁻त्यन्वयः. ३४२. [1]) $A_3$ gloss भाण्डागारं. ३४५. [1]) Emended: A प्रसादा°; C प्रमादा°.

हयायुधतनुत्रादि स्वयं स्वीकृत्य निर्गतः । देवीं प्रतीक्षमाणोस्थात्[1]सरित्पारे ततः क्षणम् ।।३४६।।
नानाप्रकारानारोप्य कोशान्नौषु नृपाङ्गनाः । नायःशङ्कूनपि गृहे निर्यान्त्यः पर्यशेषयन् ।।३४७।।
अज्ञातवार्तः प्राक्तूष्णीं तत्प्रस्थानेभवज्जनः । ज्ञातवार्तस्तदा त्वा[1]सीदाक्रन्दमुखराननः ।।३४८।।
प्रतिमोक्तुं पुरे ताभ्यां दत्तपुष्पाञ्जलौ जनः । बाष्पबिन्दुमिषादौज्झीद्दीर्घानर्घकणानिव ।।३४९।।
हा मातर्हा पितः क्वे[1]त्थं गच्छतः परिदेवितात् । इत्यस्मादपरः शब्दो मार्गेषु न तदा श्रुतः ।।३५०।।
मार्गेन्तरान्तराक्रन्दविरतौ निर्झरध्वनिः । शैलानां शोकनिःश्वासभूत्कार इव शुश्रुवे ।।३५१।।
तयोराक्रन्दितैः शश्वत्पथि संजातसंस्तवौ । कर्णौ शून्येप्यशृणुतामाक्रन्दितमिवासकृत् ।।३५२।।
पुत्रागसा तादृशौ तौ दृष्ट्वा मार्गे द्रुमौकसाम् । खगानां शावभरण[1]मपि लोको व्यगर्हत ।।३५३।।
तयोः पुत्रानयोत्तप्तचेतसोर्विजयेश्वरः । मनःप्रसादं संदृष्टः स्निग्धबन्धुरिवाकरोत् ।।३५४।।
तत्तत्र भाण्डागाराश्वभृत्याद्यावसथार्पणैः । संविधानक्रियाभिश्च व्यग्रयोरगमद्दिनम् ।।३५५।।
देशे कोशोपकरणपूर्णगोणीगणावृते । आसन्निन्धनगण्डाली[1]च्छन्नरथ्या इवापणाः ।।३५६।।
तन्वङ्गराजतुङ्गा[1]द्विजातिपुत्रा नृपात्मजाः । तं सूर्यवर्मचन्द्राद्या डामराश्चानुवव्रजुः ।।३५७।।
डामरान्क्षीरभूपादीन्राजा नौनगरादिषु । स्थानेषु स्वेषु निक्षिप्य रक्षित्वे गुप्तिमानभूत् ।।३५८।।
विश्रान्तसर्वचित्तस्य श्रीमतोनन्तभूपतेः । प्रावर्तन्तोत्सवैर्गन्तुं दिनानि विजयेश्वरे ।।३५९।।
राजपुत्रहयारोहशाखिडामरमण्डलैः । कृत्स्नैरेव स्थितिर्बद्धा सविधे वृद्धभूभुजः ।।३६०।।
वत्सरे पञ्चपञ्चाशे ज्यैष्ठे मासि विनिर्गतः । आसाद्य विजयक्षेत्रं स[1] स्वर्गसुख[2]मन्वभूत् ।।३६१।।
कलशस्तु गते राज्ञि प्राप वीतवसुं[1] महीम् । रक्षाहौ चलिते यातरत्नां निधिमहीमिव ।।३६२।।
स्वराज्यमुज्ज्वलीकर्तुं रिक्तोपि विहितोद्यमः । चक्रे संमन्त्र्य बिज्जाद्यैः संमतानधिकारिणः ।।३६३।।
तेन सर्वाधिकारेषु जयानन्दो नियोजितः । द्वारे वराहदेवश्च वितस्तात्र[1]पुरोद्भवः[2] ।।३६४।।
यो ह्यम्बरा[1]धिकार्यासीज्जिन्दुराजस्य कम्पने । राज्ञा[2] विजयमित्रः स कम्पनाधिपतिः कृतः ।।३६५।।
यथाधिकारमन्यांश्च विनिधायाधिकारिणः । राजार्थचिन्तामारेभे संरब्धः पितृविग्रहे ।।३६६।।
जयानन्दः पदातीनां चिकीर्षुरथ संग्रहम् । यत्नादनुचितेभ्योपि धनिकेभ्योग्रहीदृणम् ।।३६७।।
स्वीकृत्य पत्तीन्बिज्जादिराजपुत्रगणान्वितः । अथावन्तिपुरं प्राप योद्धुं वृद्धनराधिपम् ।।३६८।।
अभ्यर्थ्य कारितो वे[1]लां राज्ञा काराविनिर्गतः । शिमिकावर्त्मना योद्धुं जिन्दुराजो विनिर्ययौ ।।३६९।।
तेषामुद्योगमाकर्ण्य क्रुद्धा वृद्धमहीभुजम् । स्वे डामराश्ववाराद्याः संरम्भा[1]दुपतस्थिरे ।।३७०।।
अजायत न्यस्तगुडक्रीडत्तुरगमण्डला । शस्त्रैः सत्राटवी कृत्स्ना संकटा विजयेश्वरे ।।३७१।।
ततः सूर्यमती यत्नात्पतिं परमकोपनम् । ययाचे पुत्रवात्सल्यादयुद्धं दिवसद्वयम् ।।३७२।।

३४६. [1]) Thus corr. by $A_3$ from $A_1$ °स्था सरि°. ३४८. [1]) Thus corr. by $A_3$ from $A_1$ °स्तदाप्यासी°. ३५०. [1]) Thus corr. by $A_3$ from $A_1$ क. ३५३. [1]) $A_2$ gloss शावाः पोताः तेषां भरणं पोषणं. ३५६. [1]) $A_2$ गण्डाल्यः गण्य इति भाषया. ३५७. [1]) Thus corr. by $A_3$ from $A_1$ °गुङ्गा°. ३६१. [1]) $A_2$ gloss अनन्तदेवः.—[2]) $A_2$ gloss स्वर्गसुखं परमानन्दं न तु मृ [तिम्]. ३६२. [1]) $A_3$ gloss धनरहिताम्. ३६४. [1]) त्र supplied by $A_3$ in space left by $A_1$.—[2]) $A_3$ gloss वितस्तात्रं नाम यत्पुरं। तस्मादुद्भवो यस्य स वितस्तात्रपुरोद्भवः. ३६५. [1]) Thus corr. by $A_3$ from $A_1$ यो हाम्बाधि°.—[2]) $A_3$ gloss कलशेन. ३६९. [1]) वे supplied by $A_3$ in space left by $A_1$. ३७०. [1]) संरम्भा supplied by $A_2$ in space left by $A_1$.

अत्याप्तानथ मव्यादीन्द्विजान्निशि विसृज्य सा । तन्मुखेनातिवात्सल्यादिदमूचे रहः सुतम् ॥३७३॥
विनाशशंस्ययं पुत्र कस्ते मतिविपर्ययः । तीव्रशौर्येण पित्राद्य यदेवं योद्धुमिच्छसि ॥३७४॥
यस्य भ्रूभङ्गमात्रेण दरद्राजादयो हताः । तत्प्रकोपानले कस्मादीहसे[1] शलभायितुम् ॥३७५॥
अस्मिंस्तु वीतिमा[1]रूढे वीतिहोत्रसमे नृपे । कस्त्राता स्यात्त्वदीयानां तृणानामिव शस्त्रिणाम् ॥३७६॥
सेनाङ्गैः कतमैः केन शौर्येण कतमैर्धनैः । भवाञ्शक्तिमतां धुर्यं योद्धुमेनं प्रधावति ॥३७७॥
दैवात्संत्यक्तमेतेन भुङ्क्ष्व[1] राज्यमखण्डितम् । पित्रा तीर्थोपविष्टेन किमिवापकृतं तव ॥३७८॥
द्वैधेच्छुभिः पात्यमानो व्यसनेस्मिन्सुदारुणे । प्रयास्यसि दिनैरेव रिक्तोप्यत्यन्तरिक्तताम् ॥३७९॥
नय सेनाः पितुर्भीतिर्जीवन्त्यां मयि नास्ति ते । ऋजुमेनं नयस्वार्द्रं प्रत्युतानुनयोक्तिभिः ॥१८०॥
इति दूतमुखैर्गूढं पुत्रो मात्रा कृतार्थनः । सर्वाशाभ्योनयत्सैन्यं रात्रावेव निजान्तिकम् ॥३८१॥
श्रुतापसारं सैन्यानां दूतैश्चैत्य प्रसादितम् । उपालेभे पतिं प्रातर्धृष्टा प्रत्युत वल्लभा ॥३८२॥
राज्ञ्या मिथस्तयोरे[1]वं शमिताक्षेपयोरपि । पिशुनप्रेरणात्प्राप कालुष्यं धीः क्षणे क्षणे ॥३८३॥
वैरस्य [1]रूपमेतद्धि भेदं याति मुहुर्मुहुः । संधीयमानमपि यत्क्लिन्नाम्बरमिवाशयम् ॥३८४॥
बाद्यालयादौ सुतोदन्तं श्रुत्वा तप्ताशयो नृपः । गृहं प्रविष्टो धृष्टस्त्रीभाषितैर्जडतां ययौ ॥३८५॥
एवं प्रतिदिनं तप्तस्त्यक्ततापः प्रतिक्षपम् । स्वच्छाशयः शरत्तुच्छं[1]तडाकौपम्यमाययौ ॥३८६॥
चकार पितृपक्ष्याणां पुत्रो वेश्मादिनाशनम् । पिता तु पुत्रपक्ष्याणां न किंचित्स्त्रीवशीकृतः ॥३८७॥
पुत्रस्नेहान्धया पत्न्या बाधितैश्चानुयायिभिः । रूक्षोक्तिभिस्ताप्यमानस्तस्थौ दुःस्थः सदा[1] नृपः ॥३८८॥
राज्यं जिहीर्षुः पुत्रस्य निःभूरं तद्बलं विदन् । ईषत्स जिन्दुराजस्य गणनां पौरुषेकरोत् ॥३८९॥
पुत्राज्जिहीर्षुणा राज्यं तेन तन्वङ्गनन्दनाः । प्रार्थ्यन्ते स्म तदा राज्यकृतये तत्पराङ्मुखाः ॥३९०॥
संप्रेर्य तं तदा राज्ञी स्वान्व[1]याशर्मशङ्किनी । हर्षं देवी नृपं कर्तुं दूतैराहूतवत्यभूत् ॥३९१॥
स पितामहयो[1]र्दूतैराहूतः साहसोन्मुखः । बाद्यालयां निर्गतः सज्जै रक्ष्यमाणोपि रक्षिभिः ॥३९२॥
दत्तपार्ष्णिकषाघातः क्षणार्धेनोदलङ्घयत् । मनोजवेनाप्रमौजा वाजिना पञ्चयोजनीम् ॥३९३॥
वाजिनं विजिताभ्यासमनुगन्तुं समुद्यताः । अगच्छन्बहवो मार्गे दीनाः सेनाहयाः श्रमम् ॥३९४॥
प्राप्तस्य पादयोस्तस्य पतितस्य पितामहौ । आनन्दाश्रुजलस्यन्दैरभिषेकं प्रचक्रतुः ॥३९५॥
पुत्रे तन्निकटं प्राप्ते कलशः कम्पिताशयः । अप्रियाचरणात्पित्रोः संधित्सुः स न्यवर्तत ॥३९६॥
स तस्य नगरात्पत्रीः पार्श्वं प्राज्ञो व्यसर्जयत् । अकरोद्विप्लुते राष्ट्रे स्वभेदस्याप्रकाशनम् ॥३९७॥
एवं प्रवर्धमानेपि वैरे कलशभूपतिः । कंचित्कालं मते मातुरवर्तिष्ट मनागिव ॥३९८॥
खशालाः कलशादेशाधियासोः कम्पनापतेः । [1]तया प्रावर्तितनतेर्मार्गे संत्याजितः पतिः ॥३९९॥
अत्रान्तरे शमयितुं वैरं देशोपघातकृत् । तावुद्दिश्य पितापुत्रौ द्विजाः प्रायं प्रचक्रिरे ॥४००॥

---

३७५. [1]) Thus corr. by $A_3$ from $A_1$ °दीहिषे. ३७६. [1]) $A_3$ gloss अश्वं. ३७८. [1]) Thus corr. by $A_3$ from $A_1$ भुङ्क्ष्व. ३८३. [1]) $A_3$ gloss अनन्तकलशयोः. ३८४. [1]) रूप supplied by $A_3$ in space left by $A_1$. ३८५ [1]) Thus corr. by $A_3$ from $A_1$ बाद्याला°. ३८६. [1]) °तुच्छ supplied by $A_3$ in space left by $A_1$. ३८८. [1]) Thus $A_3$; $A_1$ तदा. ३९१. [1]) Thus corr. by $A_3$ from $A_1$ स्वन्व°. ३९२. [1]) $A_2$ gloss पितामहयोः पितामहपितामह्योः.

संधिबन्धे समुत्पन्ने ततस्तदनुरोधतः । दंपती संप्रविष्टौ तौ सार्धं मासद्वयं पुरम् ॥४०१॥

जयानन्दादिवुद्ध्याथ बुद्ध्वा बन्धोद्यतं सुतम् । भूयोपि ययतुः खेदान्निर्गत्य विजयेश्वरम् ॥४०२॥

तस्याश्चत्रासकूटानि पुत्रो रात्रावदाहयत् । व्यापादयत्पदातींश्च विषशस्त्राग्नियुक्तिभिः ॥४०३॥

तथा प्रवर्धमानेपि विरोधे सत्यरोधयत् । वात्सल्यविवशा राज्ञी भर्तुः प्रतिचिकीर्षितम् ॥४०४॥

लुड्डाभिधाभूत्कैवर्तबन्धकी तद्विधेयधीः । थक्कडामरनामा च तज्जारः खलतिस्तदा ॥४०५॥

स तन्नाम्नैव दुष्टात्मा कथ्यमानो समीपगैः । शुश्राव पितरौ[1] नित्यं लीलास्मितसिताननः ॥४०६॥ युग्मम् ॥

तौ दंपती पुनर्हेमतुलापुरुषयुग्मदौ । चित्राभिर्धर्मचर्याभिर्मनस्तापममुञ्चताम् ॥४०७॥

यदा पुनस्तयोर्दार्ढ्यमाद्यत्वान्न व्यहीयत । तदा सेर्ष्यः स दुष्पुत्रो रात्रौ वह्निमदापयत् ॥४०८॥

तेनाग्निनोर्वरीशस्य सर्वोपकरणैः समम् । भस्मावशेषमभवद्विजयेश्वरपत्तनम् ॥४०९॥

सर्वनाशशुचा दीना राज्ञी मर्तुं समुद्यता । तन्वङ्गपुत्रैश्चकृषे कथंचिज्ज्वलतो गृहात् ॥४१०॥

त्यक्तांशुकानि शय्याभ्यो निशायां सुप्तमुत्थितम् । निःशेषं राजसैन्यं तदजायत दिगम्बरम् ॥४११॥

तद्राजधानीसौधाग्रात्पश्यन्कलशभूपतिः । तोषादनृत्यज्ज्वालौघैर्गगनालिङ्गिभिः समम् ॥४१२॥

अतरन्नष्टसर्वस्वः स पारं सरितो नृपः । निममज्ज सजानिस्तु दुस्तरे शोकसागरे ॥४१३॥

संप्राप्य प्रातरम्लुष्टं रत्नलिङ्गं नृपाङ्गना[1] । व्यक्रीणाल्लक्षसप्तत्या[2] टाकानां पार्श्वमीयुषाम्[3] ॥४१४॥

क्रीत्वा च प्रददौ पूर्वं भृत्यानां भोजनांशुके । धनेन तेन निर्दग्धान्यपि धामान्यशोधयत्[1] ॥४१५॥

भस्मकूलतलात्तावल्लब्धं स्वर्णादि भूभुजा । कथापि यावतो हन्त ग्रथयत्यद्य कौतुकम् ॥४१६॥

राजा शून्याटवीभूते पत्तने तत्र सानुगः । नडत्वग्ग्रथितच्छत्रपटलाच्छादितेवसत्[1] ॥४१७॥

तावत्यप्यर्थसामर्थ्ये चिकीर्षोस्तत्पुरं नवम् । विना राजोचितामाज्ञां न सिद्धं वृद्धभूपतेः ॥४१८॥

अदृष्टाभिभवो मातुरानुकूल्यान्नवो नृपः । परितापं पितुस्तैस्तैर्दुःसंदेशैः सदाकरोत् ॥४१९॥

निर्बन्धादथ पुत्रेण पर्णोत्सगमनं पिता । निर्वासनोत्सुकेनोक्तः शश्वद्दूतमुखैर्यदा ॥४२०॥

प्रभवन्त्या यदा चासीत्पत्न्या तस्यैव वस्तुनः । निष्पत्तये प्रेर्यमाणः साधिक्षेपं क्षणे क्षणे ॥४२१॥

तदा जातु रहः कुप्यंस्तन्वङ्गे थक्कने स्थिते । उवाचानुक्तपूर्वं तामेवं स परुषं वचः ॥४२२॥ तिलकम् ॥

अभिमानो यशः शौर्यं राज्यमोजो मतिर्धनम् । मया जायाविधेयेन हन्त किं किं न हारितम् ॥४२३॥

मिथ्योपकरणं नारीर्गणयन्ति नृणां जनाः । परिणामे तु नारीणां क्रीडोपकरणं नराः ॥ ४२४ ॥

द्वेषोन्मेषात्प्रसक्ताभिर्विरक्ताभिरसूयया । के नाम नात्र कान्ताभिः कृतान्तस्यातिथीकृताः ॥४२५॥

रूपं काश्चिद्बलं काश्चित्प्रज्ञां काश्चिच्च कार्मणैः । पुंस्त्वं काश्चिदसून्काश्चिन्[1]नृणां जहुरङ्गनाः ॥४२६॥

हरन्ति ग्रावभिरिव क्ष्मां पुत्रैरन्यगोत्रजैः । मत्ताः पयोधरोन्नत्यात्तरङ्गिण्य इवाङ्गनाः ॥४२७॥

पर्यन्ते वैतनमिमे किं जीर्णैरीदृशैरिति । पोषयन्ति सुतान्भर्तॄञ्शोषयन्ति तु योषितः ॥४२८॥

सर्वकालं विदित्वापि दोषान्योषित्कृतानमून् । प्रतिपत्त्यनुरोधेन मयेयं नावधीरिता ॥४२९॥

---

४०६. [1]) $A_2$ gloss पितराविति पितरौ राजा राज्ञी च राजा थक्कडामरनाम्ना समीपगैः कथ्यमानः राज्ञी च लुड्डाभिधा कैवर्ती नाम्ना कथ्यमाना उपहासार्थमित्यर्थः. ४१४. [1]) Thus corr. by $A_3$ from $A_1$ नृपात्मजा.—[2]) Thus corr. by $A_3$ from $A_1$ विक्री°. [3]) Thus $A_3$; $A_1$ पूर्वमीयु°. ४१५. [1]) Thus $A_1$; $A_3$ तत्प्र°. ४१७. [1]) नडत्वक् । पिचू इति भाषया. ४२६. [1]) दसून्काश्चि supplied by $A_2$ in space left by $A_1$.

430 प्रभविष्णुर्निहत्येयमैहिकीः सुखसंपदः । परलोकसुखस्याशामपि हन्तुं ममोद्यता ॥४३०॥

वलीपलितयुक्तस्य नेदीयोमरणावधेः । विहाय विजयक्षेत्रं कुत्र गन्तुं ममोचितम् ॥४३१॥

क्षपाकरकलामौलेः किल्बिषक्षपणक्षमा । द्वारोपकण्ठसंसेवोत्कण्ठा कुण्ठीभवेत्कथम् ॥४३२॥

पुत्रो लोकद्वयत्राता कस्यान्यस्येदृशो भवेत् । तीर्थाद्व्यस्थापयन्मां यत्कुपथे मृतमिच्छति ॥४३३॥

प्रतिभात्यवगीतोयं प्रवादो मेद्य चेतसि । अनयान्यकुलोद्भूतो यदयं संप्रवेशितः ॥४३४॥

435 विसंवादिनमाकाराचारैर्बन्धुविरोधिनम् । पुत्रं पितुरसंस्निग्धं जानीयादन्यरेतसम् ॥४३५॥

सुचिराविष्कृताकूतां त्यक्त्वा प्राणाय यन्त्रणाम् । एवं वदन्पतिस्तस्याश्चक्रे मर्मसु ताडनम् ॥४३६॥

गोत्रजस्य पुरः पुत्रोत्पत्तिगुह्ये प्रकाशिते । आमृष्टविप्रियालापा साभूदधिकलज्जिता ॥४३७॥

महत्तमस्य पुत्रो हि प्रशस्ताख्यस्य सोभवत् । विपन्नापत्ययोपात्तस्तयेत्यासीज्जनश्रुतिः ॥४३८॥

उल्लिक्तभाषितं भर्तुर्योषितो जितभर्तृकाः । जानन्त्यन्त्याङ्घ्रिसंवृत्तशिरस्ताडनसंनिभम् ॥४३९॥

440 अतः सा सुदृढं प्रौढिसंस्कारपरुषं वचः । प्राकृतप्रमदेवोच्चैरित्युवाच रुषा पतिम् ॥४४०॥

गतश्रीस्तापसो मन्दो जातभाग्यविपर्ययः । वृथा वृद्धः क्व किं वाच्यमिति मूढो न वेत्त्ययम् ॥४४१॥

स्नात्वोत्थितस्य यस्यास्य नाभूत्प्रावरणं पुरा । लोको जानात्ययं किं न तेन मां प्राप्य हारितम् ॥४४२॥

स्वकुलस्त्रीसमुचितं यत्किंचिन्मामभाषथाः । क्रियते किं न कालोयं यत्प्रायश्चित्तसेवने ॥४४३॥

अकर्मण्यो गतवया देशात्पुत्रेण वारितः । पत्न्यापि त्यक्त इत्यस्मात्परिवादाद्धि मे भयम् ॥४४४॥

445 कुलदोषादिवृत्तान्तगर्भोपालम्भनिर्भरैः । वचोभिर्व्यथितस्तस्यास्तस्थौ तूष्णीं यदा नृपः ॥४४५॥

तदा तस्यासनप्रान्तनिःसृतः प्रसरन्बहिः । निर्विकाराकृतेर्व्यक्तं ददृशे रक्तनिर्झरः ॥४४६॥

संभ्रान्तायां ततो राज्ञ्यामपश्यत्स्थकनो रुदन् । असिधेनुं गुदे तेन क्रुधा राज्ञा प्रवेशिताम् ॥४४७॥

ततोतिधीरो राजैव तं लज्जाचकितोन्वशात् । राज्ञो रक्तातिसरणं जातमित्युच्यतां बहिः ॥४४८॥

विधेया नारीणां तनयनिहिताशेषविभवाः कृतम्लानौ भृत्ये पुनरुदितविस्रम्भरभसाः ।
नयन्तो गण्यत्वं प्रसभमभियोगैर्लघुमरिं[1] नयत्यक्ताः क्ष्मापाः प्रलयमुपगच्छन्ति न चिरात् ॥४४९॥

450 नृपतिर्वाहितहयः शरदातपखेदितः । तृष्यन्निपीय धान्याम्बु[1] च्युतासृग्जात इत्यभूत् ॥ ४५०॥

गम्भीरै राजपुरुषैस्तथा वार्ता प्रवर्तिता । यथा नाबुद्ध वृत्तान्तमेतं कोपि बहिर्जनः ॥४५१॥ युग्मम् ॥

वत्सरे सप्तपञ्चाशे पौर्णमास्यां स कार्तिके[1] । विजयेशाग्रतो राजा जीवितेन व्ययुज्यत ॥४५२॥

पत्न्याः पुत्रस्य चौद्वेगैस्त्यक्तो राजा सुखोचितः । प्रसार्य पादौ निद्रातुं प्राप सोवसरं चिरात् ॥४५३॥

चुकोपासौ न कस्मैचिच्चुकोपास्मै न कश्चन । चक्रे सुखी विमन्युश्च मरणेन महामनाः ॥४५४॥

455 संग्रामराजदायादो न कस्यचिदिव प्रियः । अंशुकाच्छादितो भूमावनाथ इव सोस्वपत्[1] ॥४५५॥

न प्रियाक्रन्दितैः खिद्यन्न कुप्यन्नप्रियोक्तिभिः । सर्वत्यागी ययौ राजा दीर्घनिद्रारसज्ञताम् ॥४५६॥

दाक्षिण्योल्लङ्घनप्रायश्चित्तायेव त्यजन्नसून् । कृतज्ञया पतिः पत्न्या ततो निन्ये सनाथताम् ॥४५७॥

---

४४९. [1]) Thus $A_3$; $A_1$ °योगं लघु°. ४५०. [1]) $A_2$ gloss धान्यं धनिका धान्यवल् इति भाषया । तदम्बु. ४५२. [1]) Thus corr. by $A_3$ from $A_1$ क्षपान्तिके. ४५५. [1]) Thus corr. by $A_2$ from $A_1$ सोभवत्.

आराजपुत्रचण्डालं देयं प्रत्यहवेतनम् । ददौ स्वस्थेव भृत्येभ्यः सा कर्तुमनृणं पतिम् ॥४५८॥
गृहीतवेतना भृत्याः कोशं[1] सर्वे तया स्वयम् । पुरस्ताद्विजयेशस्य नप्तुः क्षेमाय पायिताः ॥४५९॥
पादन्यस्तशिराः पौत्रो रुदन्नर्पितकोशया । मूर्धन्याघ्राय कथितो मा पितुर्विश्वसीरिति ॥४६०॥
उत्थितैव[1] ततो भूत्वा स्वयमात्तलता[2] सती । प्रातिहार्यं[3] व्यधाद्भर्तुः कारयन्त्यन्तमण्डनाम् ॥४६१॥
सादिनां शतमादिश्य नप्तुस्तत्रैव रक्षणे । सा पुनः शिविकारूढमथ प्रास्थापयत्पतिम् ॥४६२॥
क्षपामेकां दिनार्धं च स्थित्वैवं पतिदेवता । प्रणम्य विजयेशानं युग्यारूढा विनिर्ययौ ॥४६३॥
निर्यान्तौ वीक्ष्य तौ प्रेततूर्यकल्लोलमिश्रितैः । लोकस्याक्रन्दतुमुलैर्भग्ना इव दिशोभवन् ॥४६४॥
विमानस्योत्पताकस्य परिष्कारेषु बिम्बिताः । प्रजा राज्ञोन्तिके रेजुरनुगन्तुमिवोद्यताः ॥४६५॥
राज्ञां वितीर्णस्कन्दानां[1] मरुल्लोलाः शिरोरुहाः । विमानस्थस्य नृपतेरवहंश्चामरश्रियम् ॥४६६॥
पश्यन्ती[1] पश्चिमां सेवां सैन्यानां नृपतिप्रिया । अस्ताभिलाषिणि दिने प्रपेदे पितृकाननम् ॥४६७॥
दुस्त्यजात्सुतवात्सल्याद्यद्वा केनापि हेतुना । सा बभूव क्षणे तस्मिंस्तनयालोकनोत्सुका ॥४६८॥
जानन्ती पवनोद्धूतं रजः सेनासमुत्थितम् । चकितोत्कण्ठिता साभूत्कलशागमनाशया[1] ॥४६९॥
तस्मिन्क्षणे जनाः केचिदायाता नगराध्वना । अङ्ग किं कलशः प्राप्त इति पृष्टास्तया स्वयम् ॥४७०॥
स तु पुत्रः क्षणे तस्मिन्यियासुर्मातुरन्तिकम् । दत्त्वा विभीषिकास्तास्ता निरुद्धो द्वैधकारिभिः ॥४७१॥
ततो गृहीतनैराश्या राज्ञी पुत्रावलोकने । सा प्रार्थयित्वा वैतस्तं वारि श्लोकमथापठत् ॥४७२॥
वैतस्तेन तु तोयेन जठरस्थेन ये मृताः । मोक्षं गच्छन्त्यसंदेहं ते यथा ब्रह्मवादिनः ॥४७३॥
उपनीतं वितस्ताम्बु पीत्वोपस्पृश्य चाथ सा । एवं शशाप पिशुनान्स्नेहसंक्षयकारिणः ॥४७४॥
जनितं प्राणहृद्वैरं यैः पुत्रेण सहावयोः । सान्वयानां क्षयस्तेषां भूयात्परिमितैर्दिनैः ॥४७५॥
तस्यास्तेनोपतप्रायाः शापेनाव्यभिचारिणा । क्षिप्रमेव जयानन्दजिन्दुराजादयो मृताः ॥४७६॥
चक्रे हलधराप्तत्वजातकौलीनशान्तये । परलोकं पणीकृत्य युक्त्या च शपथं सती ॥४७७॥
एवं विशुद्धशीलत्वं संप्रकाश्य शुचिस्मिता । कर्णीरथाददाज्झम्पां ज्वलिते जातवेदसि ॥४७८॥
अजायत नभो वह्निज्वालावलयमालितम् । तदागमोत्सवे दत्तसिन्दूरमिव निर्जरैः ॥४७९॥
साक्रन्दैर्न चटत्कारी दुःखोत्तप्तैर्न चोष्मलः । परमालेख्यलिखित इव जज्ञे शिखी जनैः ॥४८०॥
गङ्गाधरष्टक्किबुद्धो युग्यवाहश्च दण्डकः । तावुद्दा नोनिका वल्गा चेति दास्यस्तदान्वयुः ॥४८१॥
बप्पटोद्भटयोः कुल्यौ सेनटक्षेमटावुभौ । भूपालवल्लभावास्तां वैराग्याद्विजयेश्वरे ॥४८२॥
भावा यन्त्रनिसर्गभङ्गुरतरास्तिष्ठन्ति नैते चिरं चेतःकाचघटस्य[1] तस्य घटते दीर्घोयमेको गुणः ।
यत्तस्मिन्निहितप्ररूढि न गलत्यायाति न म्लानतां धत्ते नापचयं चमत्कृतिवचो गीर्वाणगङ्गापयः ॥४८३॥
एकषष्टिमतिक्रम्य वर्षान्भूपतिरायुषः । सपत्नीकः पुरारातिगौरीसायुज्यमासदत् ॥४८४॥

---

४५९. [1]) $A_3$ gloss विव्यं. ४६१. [1]) उत्थि supplied by $A_2$ in space left by $A_1$.—[2]) $A_3$ gloss आत्ता गृहीता लता यया.—[3]) $A_3$ gloss द्वारस्थत्वं. ४६६. [1]) $A_3$ gloss वितीर्णाः दत्ताः स्कन्दाः भुजशिरांसि शिविकावाहनार्थं यैः तेषां. ४६७. [1]) Thus corr. by $A_3$ from $A_1$ पश्यन्त्यपश्चि°. ४६९. [1]) Thus corr. by $A_3$ from $A_1$ °गमाशया. ४८३. [1]) $A_3$ gloss चेतोरूपे काचघटे शीश इति प्रसिद्धे.

कश्मीरान्प्रस्थितः कृत्वा द्वैराज्यं तत्र कुर्वति । उत्सृज्य सज्जपालादीन्सर्वकार्यभरक्षमान् ॥२४५९॥

हेवाकप्रतिपत्त्यान्याभिधमौग्ध्यनिरुद्धधीः । सर्वाधिकाराद्यारोपान्मन्यमानोभिमानिताम् ॥२४६०॥ 2460

पर्युकाजर्यतः साज्जैर्[1]प्रौढमनुजं निजम् । प्रहिण्वतोनुमन्त्रित्वं मन्त्रज्ञोप्यभजन्नृपः ॥२४६१॥तिलकम्[2]॥

अपूर्वमण्डलारब्धावाटोपाद्धामशालिनः । क्व सर्वकषनिष्कम्पप्रतिभाः कार्यवेदिनः ॥२४६२॥

क्व बालवालि[1]शप्रायो नष्टव्यवहृतिर्जनः । धिक्परीपाकविषमं स्वाच्छन्द्यं मेदिनीभुजाम् ॥२४६३॥युग्मम्[2]॥

कार्यापेक्षविपक्षैः स्वैरिच्छन्त्युद्रिक्तताच्छिदाम् । सैन्यक्ष्मादुर्गकोशाद्यैर्न – [1]शन्त्यन्तरज्ञताम् ॥२४६४॥

प्रक्रियामात्रतो मन्त्रं गृह्णन्ति क्षित्यनन्तराः । कृतसाहायकैरेव चिन्त्या मित्रमुखा द्विषः ॥२४६५॥ 2465

युत्त्यारब्धविधौ तत्र वैरिसाहायकग्रहे । क्व वैधेया बकप्रायाः कार्यसंदर्भवेदिनः ॥२४६६॥

दरद्राजद्रुमोन्योन्यभेदकूलक्षयाच्युतः । क्रष्टुं नाशक्यतप्रौढैः स्रोतोभिरिव मध्यगः ॥२४६७॥

पर्युकात्संकटे कार्ये तं तमुत्कोचमिच्छतः । स दुग्धघातमादातुमप्यासीदलसक्रमः ॥२४६८॥

पर्युकेण समं विड्डसीहः संधिं निबद्धवान् । यथागतं गते साज्जौ[1] कश्मीरेन्द्रेग्रहीद्रुषम् ॥२४६९॥

सर्वाधिकारप्रवगाचिरसंचारभूरुहः । प्रसङ्गे तत्र शृङ्गारो मृत्युसौहित्यकार्यभूत् ॥२४७०॥ 2470

आ लक्ष्मकान्तात्सर्वाधिकारोस्थादद्वितीयया । वृत्त्या ततस्तु शतधा निर्झरारम्भ[1] इवाभवत् ॥२४७१॥

अन्येप्यमात्याः सांमत्याद्भर्तुर्माहात्म्यभागिनः । प्रमयं समये तस्मिन्दैवात्किमपि लेभिरे ॥२४७२॥

प्रशंसामानृशंसस्य किं विदध्मो धराभुजः । मृतामात्यार्भ[1]कापत्यं निधत्ते यः पितुः पदे ॥२४७३॥

प्रवर्तिता त्वमात्यानां भृत्यैः पद्धतिरद्भुता । निर्वैलक्ष्याः प्रभोर्लक्ष्मीं जहुः स्वगृहिणीमिव ॥२४७४॥

भूभर्तुः प्राभृतीकृत्य मृतस्य स्वामिनः श्रियम् । संतानस्य विभूत्यर्थं कृत्वा कार्यं हि तेहरन् ॥२४७५॥ 2475

गङ्गाधिपे विश्वनाम्नि विपन्ने रक्षिता परम् । एकेन सहजाख्येन सहायानां महार्घता ॥२४७६॥

नाध्यारुरोहाधिकारं पार्थिवेनार्थितोपि यः । स्वामिसूनोष्टिष्टनाम्नो बुद्ध्यै साहायकं व्यधात् ॥२४७७॥

निष्ठायामप्रतिष्ठत्वं दृष्ट्वापि प्रभविष्णुभिः । धिक्परंपरया भृत्याः प्रावर्ध्यन्तेधिकाधिकम् ॥२४७८॥

आसीदाचमनोपयोगि कलशे स्रष्टुर्जगल्लङ्घनक्रान्ताङ्घ्रिक्रमहार्यथासुररिपोस्त्वैस्रोतसं यत्पयः ।
शंभुस्तन्निदधे स्वमूर्धनि जडेष्वेकप्रयुक्तादृतौ स्युः सर्वेप्यवशा गतानुगतया गाढादराः स्वामिनः ॥२४७९॥

सुज्जि[1]निर्वासनप्राप्तप्ररोहो दुर्नयद्रुमः । साज्जिजाद्यकृताप्यायः क्रमेणासीत्फलोन्मुखः ॥२४८०॥ 2480

द्वित्राः समाः समन्युः स विड्डसीहस्ततोभवत् । अकुण्ठराज्याद्युत्कण्ठं दूतैरकृत लोठनम् ॥२४८१॥

दूरादखं[1]ण्डितोत्थानः शूरमाश्रित्य भूपतिम् । जीवं[2]कृषिवणिज्यादिकर्मणा स सबान्धवः ॥२४८२॥

दरदां मन्त्रिणां जातज्ञातैयैरभियोगभाक् । चक्रेलंकारचक्राद्यैर्डामरैः सह चक्रिकाम् ॥२४८३॥युग्मम्[1]॥

सो[1]प्यद्रिदुर्गस्वाम्यस्य प्रथमप्रस्थितौ सुहृत् । क्षुद्रो जनकभद्राख्यः पार्श्वं लिप्सोर्व्यपद्यत ॥२४८४॥

कर्णाढकादावभवत्स्थाने स्थाने विलोक्य तम् । प्रस्थितं कस्यचिद्द्रोहे बुद्धिः कस्यापि साधुता ॥२४८५॥ 2485

२४६१. [1]) Emended; A सज्जै°.—[2]) $A_1$ ३. २४६३. [1]) A °वालि°.—[2]) $A_1$ २. २४६४. [1]) Thus A; perhaps read विशन्त्यन्त°; C न शंसन्त्य°. २४६६. [1]) Emended; A apparently वैधेयान्बकप्रायान्कार्य°, as read in R C. २४६७. [1]) Emended; A °न्योन्यं भेद°. २४६९. [1]) Emended; A सज्जौ. २४७१. [1]) Emended with G (*sec. manu*); A निर्भरा. २४७३. [1]) Emended with C; A °मात्यर्भका°. २४८०. [1]) Emended; A सुज्जिर्नि°. २४८२. [1]) A दूरा–खण्ड°.—[2]) Emended; A जीवत्कृषि°. २४८३. [1]) $A_1$ २. २४८४. [1]) Doubtful emendation; A साप्यद्रि°.

तं तथा विपुलारम्भमपि शाठ्यादसंभ्रमम् । प्रविविक्षुमुपेक्षिष्ट कौसीद्यानुद्यमो नृपः ॥२४८६॥
पोषिते प्रेषितश्रीकैरुत्पिञ्जे विप्लवैषिभिः । अथोदयद्वारपतिः प्रैषि विश्वंभराभुजा ॥२४८७॥
संगृह्नता चमूस्तेन[1] पुरे शंकरवर्मणः । प्राग्लोलंकारचक्रस्य पार्श्वमभ्यावि लोठनः ॥२४८८॥
अपि विग्रहराजाख्यः सूनुः सुस्सलभूपतेः । भोजः सल्हण[1]जन्मा च श्रुतौ तेन सहागतौ[2] ॥२४८९॥
अथोपह – –[1]त्थान एव तेषां स सत्वरः । मार्गं बहुदिनोल्लङ्घ्यमेकेनाह्ना व्यलङ्घयत् ॥२४९०॥
सयूथ्यकन्थाग्रथनासिद्धेर्यातो विधेयताम् । तदास्कन्दहतस्पन्दः स पलायिष्ट डामरः ॥२४९१॥
सिन्धोर्मधुमतीमुक्ताश्रिया अन्तः[1]स्थितं ततः । शिरःशिलाभिधं कोट्टमथ तैरधिशिश्रिये ॥२४९२॥
गहने त्रुडितः कोट्टे स्थितः किं वा स इत्यसौ । न निश्चिकाय द्वारेशो भ्राम्यन्दीर्घासु भूमिषु ॥२४९३॥
अथोपालब्धतद्दुर्गारोहणेऽस्मिन्नशङ्क्यत । दैवेनापि न भूभर्तुः प्रभावो निष्पराभवः ॥२४९४॥
उत्थानोन्मुखतां सर्वेष्वुत्पिञ्जे तत्र दस्यवः । पाल्वलास्तिमयो वर्षपृथक्कृत इवाभजन्[1] ॥२४९५॥
तैस्त्रिहुक्कादिभिर्गूढवैकृतैरथ लोठनः[1] । पार्श्वीहरिः[2] पुनश्चक्रे मायाचतुरचाक्रिकैः[3] ॥२४९६॥
पुरग्रामादिदग्धारमसाध्यमथ धावताम् । पदे पदे कृच्छ्रगतं स्वपक्ष्यास्तमरक्षिषुः ॥२४९७॥
दिक्चक्रे नियतेर्भ्राम्यन्दृश्यादृश्यः स सर्वतः । कल्पात्ययोदयी ब्रह्मपुत्रः केतुरिवाभवत् ॥२४९८॥
श्रान्तैरमात्यैर्निर्बन्धे संधौ कालानुरोधतः । मेने मडवराज्योर्वी हारितेवाखिला जनैः ॥२४९९॥
असंवृत्तप्रतीकारतयारोहत्सु वैरिषु । तदन्तरेऽथ संमन्त्र्य धन्यं प्रास्थापयन्नृपः ॥२५००॥
तत्स्कन्धा[1]रोपिते कार्ये व्रीडां गच्छेत्तटस्थताम् । विपर्यासमथ द्वाराधीश इत्यभ्यधाज्जनः ॥२५०१॥
भिक्षुर्मल्लार्जुनस्त्वासीदेक एव त्रयस्त्वमी । संहता हन्त दुःसाधा दध्युश्चेत्यखिलाः प्रजाः ॥२५०२॥
द्वाराधिपस्त्वहेवाकव्यवहारो महीपतेः । सिद्धिं स्वस्याप्रसिद्ध्यापि वाञ्छन्व्यहोद्यमोऽभवत् ॥२५०३॥
एकाकी यः किल न भजते मूढतां भर्तृकार्ये नौदासीन्यं श्रयति च रुषा बह्वधीने च तस्मिन् ।
निर्हेवाकव्यवहृतितया साध्यसिद्धिं किलेच्छंस्तादृङ्मन्त्री प्रभवति परं नाल्पपुण्यस्य राज्ञः ॥२५०४॥
पञ्चचन्द्रे मृते तस्यानुजं राजोपवेशने । न्यधाद्यं षष्ठचन्द्राख्यं सोऽप्यारब्ध्यै विनिर्ययौ ॥२५०५॥
द्विबाहुकादयो मुख्य – – –[1]ः सह गायकैः । धन्यमेवान्वयुर्वाह्याश्चान्ये राजोपजीविनः ॥२५०६॥
धन्यादिषु तिलग्रामं कोटसिन्धुतटाश्रयम् । अथ – – –[1]द्वारेशो व्रङ्गस्थः पृष्ठपद्धतीः ॥२५०७॥
हठप्रवेशायोग्याजिमुख्यहेवाकवर्जितः । शोषयन्द्विषतो धैर्यगम्भीरं स व्यवाहरत् ॥२५०८॥
कुठारिकादिभिः कारुवृन्दैर्मन्दिरपद्धतीः । धन्यो मधुमतीतीरे नगरस्पर्धिनीर्व्यधात् ॥२५०९॥
निर्ध्वान्तं द्रुमसंबाधं सनिकेता वनस्थलीः । कटकं सर्वभोगाढ्यं शक्तः परिवृढोऽकरोत् ॥२५१०॥
देशे भूरितुषारोऽप्यहिमर्तौ भाग्यसंपदा । भूभर्तुरभियोग्यैव भूरभूद्धानुभूषिता ॥२५११॥
भुवनाद्भुतसंभारप्रेषणं विजयैषिणः । द्वैराज्यमीलिताज्ञेऽपि काले राज्ञो न खण्डितम् ॥२५१२॥

---

२४८८. [1]) Emended; A च मूर्तेन. २४८९. [1]) Emended; A सुल्हण°.—[2]) Emended with C; A °गता. २४९०. [1]) Thus A; perhaps read अथोपहत्या उत्थान; cf. viii. 2513; C अथोपाचित उत्थान. २४९२. [1]) Conjectural reading; A °श्रियरन्तःस्थितं; G (*sec. manu*) °श्रिय अन्ते स्थितं. २४९५. [1]) Doubtful emendation; A °भवन्. २४९६. [1]) Comp. for this name viii. 2799. 2912. 3313.—[2]) Emended; A पा–हरिः; cf. viii. 2748. 2759. 2793. 2837.—[3]) Emended; A °क्रिकैः. २५०१. [1]) A तत्स्कन्दा°. २५०५. [1]) A does not indicate the *lacuna*; C मुख्याश्चारणैः. २५०७. [1]) Thus A; perhaps read with C अयत्स्वगच्छद्दा°.

उत्थान एवोपहतिं[1] भये यास्यत्यगात्परम् । भारोढिपीडितग्राम्याक्रन्दः क्षान्तिचमू[2]पमाम् ॥२५१३॥
दीर्घप्रवासनिर्वेदाच्चलितान्दर्शयन्नुषम् । स्थास्नूंश्च तोषयन्दायैः स्थैर्यं निन्ये नृपश्चमूः ॥२५१४॥
इत्थं त्रिचतुरान्मासांस्तिष्ठद्भिरपि निष्ठुरैः । नैवादातुमशक्यन्त कटकैः कोट्टसंश्रयाः[1] ॥२५१५॥
तेषां हि वीवधासारनिरोधादीनि दृप्यताम् । अप्रियाणि न जातानि दैन्यदायीनि कानि चित् ॥२५१६॥
त्रिकीर्षवस्तुषारान्ते स्वविभूतिप्रकाशनम् । तस्थुरङ्कुरितोल्लासाः पर्वता इव डामराः ॥२५१७॥
कृषिं कृषीवलैर्वेदपाठमुत्सृज्य च द्विजैः । उत्पिञ्जसज्जैर्ग्रामेषु सर्वतः शस्त्रमादधे ॥२५१८॥
प्रतीक्षमाणाः प्रालेयप्रलयं मार्गभूभृताम् । दारदास्तुरगानीकैः सज्जैस्तस्थुर्जिगीषवः ॥२५१९॥
मिहि[1]कासंहतेः कालतूलतल्पाकृतेर्दधत् । पातभीतिं जनो राजसेना शश्वदवेपत ॥२५२०॥
इत्थं प्रत्यर्थिसामर्थ्यपरमार्थापरीक्षणात् । क्ष्माभृन्मिथ्यैवमारेभे संदेहं च जयेभजत् ॥२५२१॥
वैदग्ध्यदिग्धमनसामयमेक एव कोप्यस्ति वञ्चनविधेरुचितः प्रकारः ।
येनात्मना किल विशङ्कितशक्नुयस्ते मुग्धेपि वैरिणि विचारहतोद्यमाः स्युः ॥२५२२॥
प्रवादमात्रसाराद्यस्त्रस्येत्परिकरादरेः । स्वयैव तस्य विघ्न्येत सिद्धिश्चिन्तान्धया धिया ॥२५२३॥
विध्येदाशु शिलीमुखैः प्रवितरेत्पत्त्रैरवस्कन्दनं बध्नीयात्तदिदं गुणैः परिकरैर्मिथ्या प्रसिद्धैरिति ।
स्याच्चेदम्बुरुहं द्विपस्य भयकृच्चिन्तासहैः साहसं प्रत्यूहेत ततो निजैरपघनैरप्येतदुन्मूलने ॥२५२४॥
लोठनाद्यैर्हि कर्णाहा[1]न्निस्तीर्णैस्तैः कथंचन । प्राप्तेलंकारचक्रेग्रे राज्यमज्ञायि निर्जितम् ॥२५२५॥
मिथ्यैव ग्रथिता कन्था स्वयूथ्यैः कथमन्यथा । तस्मिन्नमन्दमास्कन्दं धावन्द्वाराधिपो ददौ ॥२५२६॥
प्रत्यवस्थित्यसामर्थ्यात्ततः कोट्टं व्यसर्जयत् । स राजबीजिनस्तांश्च परेद्युः स्वयमन्वगात् ॥२५२७॥
कोट्टाद्रिः सलिलस्यान्तः कृशोर्ध्वः[1] पृष्ठदैर्घ्यभाक् । स तैर्वैसारिणं[2]ग्रासव्यग्रो बक इवैक्ष्यत ॥२५२८॥
निःसामर्थ्यं तद्विलोक्य गजागारमिवागजम् । तत्यजुर्विजयाशंसां भयं चोदवहन्हृदि ॥२५२९॥
ततः शरैर्दृ[1]षद्वर्षैर्बाध्याश्चेतो विरोधिनः । अर्णसो रक्षणमितो रक्ष्या यन्त्रोपला इतः ॥२५३०॥
इत्थं स तैरभिदधद्धैर्यादा[1]दाय डामरः । मेने स्वगुप्तिमात्रार्थी न युद्धे बद्धनिश्चयः ॥२५३१॥युग्मम्[2] ॥
ततः कन्दलितास्कन्दे तिलग्रामे द्विषद्बले । प्रतीकाराक्षमे दस्यौ ते चिन्ताक्षामतां दधुः ॥२५३२॥
विप्लवाविप्लुतप्रज्ञासौष्ठवो लोठनः पुनः । डामरं कृत्यसंपूर्णमगूढं तमगर्हत ॥२५३३॥
भोजं[1]स्तूद्विजितं यन्नो द्रोहो रोहेदिति ब्रुवन् । रुद्ध्वा पितृव्यं तं व्याजस्तुत्या नित्यमुपाचरत् ॥२५३४॥
विमुखे लोठनेकुण्ठशाठ्यस्तस्य तु सान्त्वनैः[1] । मेने मन्त्रज्ञतां किंचित्सोवर्तिष्ट[2] च संविदि ॥२५३५॥
हन्यान्मां भूभृदित्येष यातेष्वेतेषु संत्यजेत् । नास्मानुक्त्वेत्यरौत्सीत्स पितृव्यं गमनार्थनात् ॥२५३६॥
त्वय्यस्मासु च सर्वेषु वेष्टितेषूत्कटा द्विषः । पृष्ठकोपमसंभाव्य कुतश्चिन्निश्चलोद्यमाः ॥२५३७॥

२५१३. ¹) Doubtful emendation; A एवौपह-भये; C एवोपहतभये.—²) Emended; A °क्रन्दं क्षान्ति° (the letter क्ष is of unusual shape and resembles इश); C क्षान्तिचमू°. २५१४. ¹) Emended; A चलितां; another possible emendation would be चलिता दर्शयन्नुषम्। स्थास्नूंश्च. २५१५. ¹) Emended; A संशयाः. २५२०. ¹) Emended with G (*sec. manu*); A हिमिका°. २५२५. ¹) Thus A; cf. कर्णाढका° viii. 2485. २५२८. ¹) Emended; A कृषोधः.—²) Emended with C; A तैर्वैसारण°. २५३०. ¹) Emended; A शरैर्द्विषद्व°. २५३१. ¹) Emended; A तैरभिरद्धैर्या°; C तैरभिरुद्धैर्य्यावदा°.—²) A₁ २. २५३४. ¹) Emended; A भोजं; R भोजो. २५३५. ¹) Emended; A सान्त्वनैः; C सान्त्वने.—²) Doubtful emendation; A °त्सवर्तिष्ट च; C °त्समवार्तिष्ट सं°.

यद्यद्विदध्युः सिध्येत्तत्तदेकं त्यज मामितः । अन्यांश्चवन्यानानीय दरदो वा जवेन[1] वः ॥२५३८॥

बन्धनं त्वपनेष्यामि युक्तमित्युक्तवांश्च तम् । डामरं विदधे किंचिदिव सांमत्यमाश्रितम् ॥२५३९॥

2540 विमोक्ष्यामि क्षपायां त्वामद्य श्वो[1] वेति तं ब्रुवन् । स त्वसं[2]क्षीणदाक्षिण्यो विप्रलेभे प्रतिक्षणम् ॥२५४०॥

अध्वरोधे सुदूरस्थैर्यथावदकृतैररिभिः । बाह्यग्रामाहृतैरन्नैस्ते त्वहान्यत्यवाहयन् ॥२५४१॥

दुरुदर्कमथाशङ्क्य समयं ते व्यजिज्ञपन् । धन्यादयोहितैः संधिर्विधेय इति भूपतिम् ॥२५४२॥

तैस्तैर्निमित्तैः संधानमविधेयं विदन्नृपः । तानादिदेश कर्तव्यं कोट्टाट्टालकवेष्टनम् ॥ २५४३ ॥

संदिदेश च दायादा वञ्चेरन्ख्यातिमागताः । निजास्पदे ताञ्जहति दत्तोत्कोचेथ डामरे ॥ २५४४ ॥

2545 भूत्वा कठोरे[1]ष्यारम्भानिष्ठा निः[2]सौष्ठवा ध्रुवम् । क्रियातिपत्त्युपालम्भैर्यास्यामोनुशयं[3] विशाम् ॥२५४५॥ ॥

नात्यक्षद्दर्पदेवश्चेत्सप्ताहान्युद्यमं ततः । दुग्धप्रवाहं प्राप्स्यत्सं[1] श्रुत्वेत्यन्योपि तप्यते ॥२५४६॥

प्राप्तव्यं प्राप्तवान्सर्वो निजैः कृत्यैः शुभाशुभैः । क्रियातिपत्तिर्लोकेत्र[1] त्रैलोक्यं तु मुखेर्प्यते ॥२५४७॥

पादेषु पक्षेषु च सत्सु नोर्व्यां न व्योम्नि वा पक्षपिपीलकस्य ।
पङ्ग्वन्धवच्चङ्क्रमणं तु गर्ते[1] किं संपदा स्यान्नियमे गतीनाम् ॥२५४८॥

सहस्रपादस्य गतेर्निमित्तमनूरुभावेप्यरुणः प्रजातः ।
तस्याभविष्यद्यदि पादयुग्मं ततोधिकं तत्किमिवाकरिष्यत् ॥२५४९॥

2550 उपेक्ष्य साक्षितां तस्मात्कृत्स्नं कोट्टं विवेष्ट्यताम् । प्रयातु तत्रैवास्माकं तेषां च पुरुषायुषम् ॥२५५०॥

अविश्रान्तो वातो दहन इव सोयं जनयति प्रसक्तिं सातत्याद्दलयति कुलाद्रीनपि जलम् ।
प्रसूते कृत्येषु व्यवसितिरनिर्व्यूढसुदृढा फलावाप्तिं लोके प्रतिकलमसंभाव्यविभवाम् ॥२५५१॥

क्रूरां नरपतेराज्ञां श्रुत्वा धन्यादयस्ततः । कोट्टप्रतोलीं कूलं तं त्यक्त्वाप्यारुरुहुर्जवात् ॥२५५२॥

कथं युद्धं विधास्यन्ति कथं स्थास्यन्ति वेति तान् । शरान्किरन्तः कोट्टस्था यावत्प्रै[1]क्षन्त कौतुकात् ॥२५५३॥

अधः सो[1]प्यूर्ध्वगान्युद्धैर्निष्पीड्य निविडैर्व्यधात् । धन्यः प्रदेशं तावत्तं निकेतैः पत्तनोपमम् ॥२५५४॥युग्मम्[2]॥

2555 अविश्रान्तैस्ततः संख्यैरसंख्येयश्चमूक्षयः । प्रतिक्षणं प्रववृते सैन्ययोरुभयोरपि ॥२५५५॥

परेद्युः शारदां दृष्ट्वा संप्राप्तो गर्गनन्दनः । संक्रन्दनपुरीपौरवृद्धिं योधैर्हतै[1]र्व्यधात् ॥२५५६॥

अलंकाराभिधो बाह्यराजस्थानाधिकारभाक् । अधृष्योमानुषैर्युद्धैर्विरुद्धान्बहुधावधीत् ॥२५५७॥

क्व भूधरत्वरैः स्पर्धा वसुधातलचारिणाम् । तथापि पृतनायन्त्वानन्त्यं चिन्त्यमचिन्त्यकृत् ॥२५५८॥

अल्पीयांसः कोट्टनिष्ठा भूयिष्ठाः कटकाश्रयाः । अतः पूर्वं बहून्घ्नन्तोप्यासन्कृत्यालपया क्षताः ॥२५५९॥

2560 श्लिष्टद्वारारिपटं छिद्रैः पीडितमाहवैः । मीलिताक्षमिव त्रासात्ततो दुर्गमजायत ॥२५६०॥

गोपृभेदान्तरद्वैधमुखच्छिद्रानुसारिणः । धन्यादीन्वीक्ष्य विश्वासं कोट्टस्था नोपलेभिरे ॥२५६१॥

निद्राच्छेदार्थमन्योन्यं क्रोशन्तो नास्वपन्निशि । स्वपन्तोह्नि तु निःशब्दशून्यं कोट्टमदीदृशन् ॥२५६२॥

---

२५३८. [1]) Emended with G (*sec. manu*); A वा‾येन; C यवेन. २५४०. [1]) Emended with C; A श्यो.—[2]) Emended with C; सत्त्वसङ्क्षी°. २५४५. [1]) A कठो‾ष्या°; C कठोरोऽष्या°.—[2]) Could be read in A also °निष्टान्नि°.—[3]) A °स्यामो‾शयं C °स्यामोऽसंशयं. २५४६. [1]) Emended; A प्राप्स्यन्स. २५४७. [1]) Emended; A °र्लोके त्रैलो°; C °र्लोकेऽपि. २५४८. [1]) Emended with G (*sec. manu*); A गर्भे. २५५३. [1]) Emended; A °त्प्रैक्ष्यन्त. २५५४. [1]) Thus A; perhaps read अधःस्थो.—[2]) $A_1$ २. २५५६. [1]) Emended with G (*sec. manu*); A °पौरयोधैर्वृद्धिं हतै°.

निशासु तत्तत्पृतना यामतूर्यरवैरपि । चटकाः कोटरगता मेघशब्दैरिवात्रसन् ॥२५६३॥
अहर्निशं भ्रमन्तीभिर्नौभिः संरुद्धपाथसः । तान्समभ्रं[1]मयन्सर्वप्रकारं राजसैनिकाः ॥२५६४॥
ते रुद्धपाथसस्तर्षशोषं[1] कंचिद्विषेहिरे । निःसंचारास्तु संक्षीणे भोक्तव्ये क्लैब्यमाययुः ॥२५६५॥
बुभुक्षवः क्ष्मापयोग्यान्भोगान्भाग्योर्जितांस्ततः । कदन्नैर्नृपदायादा अशनाशंसनं[1] व्यधुः ॥२५६६॥
दूरे स्पर्धास्तु निस्तीर्णाः क्षुधितास्तेधिकं व्यधुः । भूभर्तुर्भोगभागिभ्यो भृत्येभ्योप्यन्वहं स्पृहाम् ॥२५६७॥
व्यूहेष्वस्माच्च पर्याप्तमकार्यमिति भाषिणम् । भोजं व्यधान्मध्यशृङ्गे दुर्गस्याथ स तं पृथक् ॥२५६८॥
एकस्य वार्द्धकाद्वैरयापुत्रत्वादपरस्य च । जानन्नयोग्यतां मेने द्वैराज्यार्हं तमेव सः ॥२५६९॥
विनामुं चानयोः सम्यक्संरम्भेरन्न वैरिणः । इति मिथ्या प्रथां निन्ये तद्विनिःसरणं बहिः ॥२५७०॥
कान्तालंकारचक्रस्य काङ्क्षन्ती क्षयमित्वरी । चक्षूरागात्पष्ठचन्द्रे सान्द्रस्नेहार्द्रतां गता ॥२५७१॥
बहिराभ्यन्तरं भेदं नयन्ती मन्त्रमाययौ । साल्हणेः कर्णसरणिं सर्वमन्विष्यतोन्वहम् ॥२५७२॥ युग्मम्[1]॥
रागध्वान्तान्वितधियः प्रतिभेदभयेन सः । तस्य प्रकाशयन्नेनां[1] गन्तुं तु प्रार्थनां व्यधात् ॥२५७३॥
क्षमावाञ्छिशिक्षितोपेक्षो मैत्रीस्थैर्ये मुदं भजन् । नागः सागस्यपि दधे बोधिसत्त्व इव क्रुधम् ॥२५७४॥
प्रियामन्युः सरागेण मृत्युहेतुर्महानपि । हृदि विस्मर्यते पृष्ठे शरभेणेव वारणः ॥२५७५॥
अथ प्रस्थापितो भोजः सुप्रारिशिबिरान्तरात्[1] । यातप्रायोप्यलंकारतनयेनानुयायिना ॥२५७६॥
द्रोहेच्छया भयाद्वापि ध्वस्तसत्त्वेन सत्वरम् । व्यावृत्यारोपितो भूयः कोट्टस्थस्यान्तिकं पितुः ॥२५७७॥युग्मम्[1]॥
निर्भर्त्स्य[1] पुत्रं गन्तासि श्वो निशीत्यभिधाय तम् । छन्नमस्थापयत्सोह्नि यात इत्यखिलान्वदन् ॥२५७८॥
प्रोच्चल्यानिश्चयादेकः प्रायाद्वौ श्वः प्रयास्यतः । बोधितैरथ धन्यार्यैरजागार्यखिलैर्निशि ॥२५७९॥
प्रस्थास्नुः स निशीथेथ कोट्टाट्टालाद्व्यलोकयत् । जाग्रतः कटके सर्वान्परितो दीपितानले ॥२५८०॥
प्रकाश्य वह्निना दुर्गे प्रतोलीनिर्गतो यथा । पिपीलकोप्यलक्ष्यस्त्वं नोन्मुखानां द्विषां व्रजेत् ॥२५८१॥
ज्वालाप्रकाशचाञ्चल्याद्विलोला इव रक्षिताः[1] । न्यषेधन्मूर्धकम्पेन साल्हणिं साहसाद्गुहाः ॥२५८२॥
तद्गन्तुमक्षमं[1] क्षिप्तं क्षपाप्राङ्के स डामरः । अधोवातीतरच्छ्वभ्रमालिङ्गितवटाकरम् ॥२५८३॥
क्षेमराजाभिधानेन डामरेशेन सोन्वितः । शिलां वितर्दिकातुल्यामध्यास्त श्वभ्रमध्यगाम् ॥२५८४॥
आरुह्यासनमात्रे तां पर्याप्तां पातभीतितः । निर्निद्रौ पञ्चरात्रीस्तावत्यवाहयतामुभौ ॥२५८५॥
निर्वर्तितप्राणयात्रौ करस्थैः सक्तुपिण्डकैः । तत एव व्यजहतां विष्ठां नीडादिवाण्डजौ ॥२५८६॥
अव्यक्तव्याकृती चित्रात्सन्त्रिताविव तौ स्थितौ । वीक्ष्यारिकटके लक्ष्मीं पृष्ठाद्विस्मयमीयतुः ॥२५८७॥
तयोराश्रीयत स्फीतशीतविस्मृतिकारिणा । जयसिंहप्रतापाग्निसंतापेनोपकारिता ॥२५८८॥
षष्ठेह्नि तत्र निःशेषीभूतभोक्तव्ययोरथ । क्षतक्षार इवारम्भि तुषारं वर्षितुं घनैः ॥२५८९॥
अगृह्यतोचिते दन्तवीणावाद्योद्यमे तथा । शीतासादितसादेन पाणिपादेन[1] सुप्रता ॥२५९०॥

---

२५६४. [1]) Emended with C; A तान्ससम्भ्रम°. २५६५. [1]) The letter ष is indistinctly written; C °शोषं; R °शोषं. २५६६. [1]) Emended; A °सनैर्व्यधुः. २५७२. [1]) $A_1$ २. २५७३. [1]) Emended with C; A प्राका°. २५७६. [1]) A °शिविरा°. २५७७. [1]) $A_1$ २. २५७८. [1]) Emended with C; A निभर्त्स्य. २५८२. [1]) Emended; A °प्रकाशं चाञ्च°. २५८३. [1]) Emended; A °क्षम:. २५९०. [1]) Emended with C; A पाविपादेन.

तावच्चिन्तयतामद्य क्षुच्छीताभिहतौ ध्रुवम् । पतिष्यावोरिकटके पाशबद्धाविवाण्डजौ ॥२५९१॥
कं पूत्कुर्वः कस्य वावां विदितौ यो विनिर्हरेत् । ततः पङ्कान्तरामग्नौ यूथपः कलभाविव ॥२५९२॥
विषमस्थावयेत्थं तौ नक्तमभ्यर्थ्य डामरः । आरोप्य रज्ज्वावसथे शून्ये स्थापयति स्म सः ॥२५९३॥
कृतशीतप्रतीकारौ पलालानलसेवनैः । दुःखं व्यस्मरतां तत्र निद्रया चिरलब्धया ॥२५९४॥
ततोऽप्यभ्यधिका व्यापद्वेजे लोठनविग्रहौ । अचक्षुष्यौ जनास्त्रिग्धां[1] गिरमप्यापतुर्न यौ ॥२५९५॥
यवकोद्रवपूपादि तयोः सतुषमश्नतोः । गात्रैर्वस्त्रैश्च वैवर्ण्यं शुद्धिवन्ध्यतया दधे ॥२५९६॥
धन्योऽलंकारचक्रस्य क्षीणभोज्यस्य[1] सर्वतः । स्वीचकारान्नदानेन तुल्यौ हेलयशस्करौ ॥२५९७॥
ततः स दूतैर्विक्रेतुमङ्गीचक्रे नृपद्विषः । बुभुक्षाक्षुभितो भृत्यभेदभीतश्च डामरः ॥२५९८॥
दुस्तरव्यापदुद्रेकद्रुतसत्त्वतयात्यजत् । पापोपलिप्तचित्तमधर्माकीर्तिसाध्वसम् ॥२५९९॥
भूपतेर्विद्विषच्छेषस्थापनात्स्वस्य रक्षणम् । ख्यातिशुद्ध्यै चिकीर्षुश्च कुशकाशावलम्बनम् ॥२६००॥
भृत्यस्योदयनाख्यस्य धिया प्रच्छादितं तथा । ररक्ष साल्हणिं भोजं द्वौ तु दातुं स तत्वरे ॥२६०१॥
तं विना च तयोर्भूपाद्दण्डं जानन्नसांप्रतम् । अवाधं स्वस्य चाशेषकृत्यं युक्तममन्यत ॥२६०२॥
भोज्याभावकृतां[1] तस्य व्यापदं तच्च मन्त्रितम् । तदा नाज्ञासिषुर्धन्यादयः संधिं विधित्सवः ॥२६०३॥
मिषाच्चिचलिषा तेषां कस्माच्चिदभवत्ततः । किं पुनस्तेन दायादद्वये दातुं प्रतिश्रुते ॥२६०४॥
देयविश्राणनानीकोत्थानादिपणसिद्धये । भ्रातृव्यमनयद्धन्यः कल्याणमवकल्यताम् ॥२६०५॥
प्रबन्धं निर्वधन्नरिमुपचरञ्छादितरुषं महार्हैः संगृह्णन्नयकुटिलचेष्टं व्यवहरन् ।
स भूमिः सिद्धीनां दधदुचितकर्तव्यपरतां भवेद्योऽनिर्व्यूढावपि सुदृढसंरम्भरभसः ॥२६०६॥
दुःखैर्दीर्घप्रवासोत्थैरपसारितसौष्ठवाः । तदा संरम्भशैथिल्यं भूभृद्भृत्याः प्रपेदिरे ॥२६०७॥
स सत्यं सचिवोऽप्राप्यः संग्रहीतुं प्रगल्भते । कथाशरीरमिव यो निर्व्यूढौ कार्यमाकुलम् ॥२६०८॥
संधिं निबद्धं विज्ञाय सैनिकाः स्वगृहोन्मुखाः । उपेक्ष्य स्वामिदाक्षिण्यं क्षणादेवप्रतस्थिरे ॥२६०९॥
तद्विक्रीतमवाप्यान्नं लवन्यः कार्यमन्थरः । धन्याद्याः स्वल्पसैन्यत्वादासन्कृच्छ्रगतासवः ॥२६१०॥
प्रतोलीकीलितदृशः[1] प्रार्थितागमनाशया । तदहः सोऽभियोक्तृंस्तानददत्तावतापयत् ॥२६११॥
रथाङ्गाक्रन्दिनी रात्रिस्तेषां कृच्छ्रेण सागमत् । विना जीवितसंन्यासमन्यत्कार्यमपश्यताम् ॥२६१२॥
प्रयत्नसंभृते कृत्ये नष्टे मन्दतया धियः । असमत्संभावनादूरीकृतवाक्यादरं प्रभुम् ॥२६१३॥
नष्टानुशोचनव्याजात्तत्तद्युक्त्युपहासिनः । सदयं नो ध्रुवं दुःस्थीकरिष्यन्त्यन्यमन्त्रिणः ॥२६१४॥
सद्यो यात्रातारतम्यात्तात्म्यन्तो नस्त्वपार्पणम् । कार्यनिष्ठामपश्यन्तः[1] कुर्युर्वैत्यपरेऽब्रुवन् ॥२६१५॥
मायामेतां विहितवांस्तैः संमन्त्र्य नृपाहितैः । सिद्धसाध्योऽधुना दस्युर्हसन्नस्मान्ध्रुवं स्थितः ॥२६१६॥
अल्पेतरांस्तु संकल्पानेवं तेषां वितन्वताम् । दत्तानन्ततनुज्यानिः प्रभाता सा विभावरी ॥२६१७॥ कुलकम् ॥
प्राक्षेथ राजस्थानीयोऽलंकारः साहसोत्सुकः । डामरं कोट्टमारुह्य निन्ये नयभयैर्वशम् ॥२६१८॥
एकाहं गमने सोढविलम्बस्तत्र वासरे । लोठनं[1] क्षीणदाक्षिण्यः स गच्छेत्यब्रवीत्स्फुटम् ॥२६१९॥

२५९५. [1]) Emended; A जनान्स्निग्धां. २५९७. [1]) Emended; A °भोजस्य. २६०३. [1]) Emended; A भोज्यभाव°. २६११. [1]) Emended with G (*sec. manu*); A °केलित°. २६१५. [1]) Emended with C; A °पश्यन्त. २६१९. [1]) Emended; A लोठने.

उपन्यास्यंस्ततस्तस्य म्लानिप्रक्षालनक्षमम् । मानिनः केपि कर्तव्यं कीर्तिव्ययनिबर्हणम् ॥२६२०॥ 2620
कालः सोयं सकलजनतालोचनध्वान्तदायी नित्यालोकप्रकटनपटुः किंतु सत्क्षत्रियाणाम् ।
अभ्रश्यामाद्भुतमसिलता स्वर्वधूसंगतापि व्यक्तं सक्तिं दिशति रभसान्मण्डलेनोष्णभानोः ॥२६२१॥
संप्राप्नुवन्ति ननु मण्डलमेकमेव क्ष्मापा जये समरसीम्नि वपुस्तु हित्वा ।
चण्डांशुमण्डलमथाभिभवानि कामं प्रेमार्द्रनिर्जरवधूकुचमण्डलानि ॥२६२२॥
नास्मिन्संततवेष्टनोल्बणतलैस्तल्पैरुदेति व्यथा ग्रन्थिभ्यश्चलितैर्न चालमसुभिर्मर्मव्यथा जन्यते ।
क्रन्दद्बन्धुजनार्तनादचकितस्वान्तं न वा स्थीयते नन्वेतन्मरणं सुखस्य सुभगा काप्येव संप्राप्तिभूः ॥२६२३॥
मार्गैः खड्गलताविताननगहनैर्यातः पिता ते दिवं भ्रातृभ्यामसिधेनुकण्टकवने भ्रान्त्वार्जिता सद्गतिः ।
वंशक्षुण्णमिमं निषेव्य रभसादध्वानमुन्नद्धया वृत्त्या व्योम्नि विशार्कमण्डलमिह स्वान्तं च तेजस्विनाम् ॥२६२४॥
साम्राज्यं विधिनोपनीतमसकृत्क्लैब्येन यद्धारितं तत्रापि प्रशमोचिते वयसि यत्संचेष्टितं बालवत् ।
प्रायश्चित्तममुष्य लब्धमधुना तद्वेधसापादितं मा भूद्राज्यमिवैतदप्यसुलभं कर्तव्यमूकस्य ते ॥२६२५॥ 2625
राज्यं प्राप्तमपि प्रनष्टमसमोच्छिष्टाशनैर्यापितः कालः सर्वजनक्षयस्य विषये याता स्थितिर्हेतुताम् ।
इत्यासीत्किमिवोचितं प्रभवतो भिक्षाचरक्ष्मापतेर्निर्व्यूढं तु तदस्य देहविरतौ येनैष सर्वोन्नतः ॥२६२६॥
स तथोत्तेजितोप्योजो नाददे तेजसोज्झितः । न ज्वलत्यग्निसङ्गेपि निर्वीर्यं वानरेन्धनम् ॥२६२७॥
शान्ताहंतस्तु संवृत्तनिद्राभङ्ग इवार्भकः । ऐच्छदुत्सङ्गयोद्वेगो रोदितुं प्रसृताधरम् ॥२६२८॥
डामरेणार्पितं नेतुं प्रवृत्तास्तं नृपाश्रिताः । तादृशं वीक्ष्य कारुण्याद्धैर्याधानार्थमभ्यधुः ॥२६२९॥
मा विषीद न देवस्य दयाचन्द्रोदयोज्ज्वले । हृदि प्ररोहति स्वैरं विकारतिमिरान्धता ॥२६३०॥ 2630
स सौजन्यसुधासिन्धुः स स्थिरत्वसुराचलः । स प्रपन्नार्तिसंतापच्छेदचन्दनपादपः ॥२६३१॥
पुण्यां शुद्धां च संलक्ष्य शरदीव सुवाहिनीम् । मूर्तिं तस्योल्बणं चेतः समाधास्यत एव ते ॥२६३२॥
निष्कलङ्कैर्यशःपूर्वैर्निर्विशेषं सभाजयन् । चारित्रं लाघवभुवो ह्रियस्त्वां सोपनेष्यति ॥२६३३॥
अपकर्तृन्विपन्नमान्द्यमानः परानपि । क्षमापरीक्षाहेतुत्वात्स वेत्ति ह्युपकारिणः ॥२६३४॥
उक्त्वेति हृष्टैस्तैर्लोलस्थूलकूर्चो गृहात्ततः । व्यालम्बकम्बलो गोष्ठाद्वृद्धोक्ष इव निर्ययौ ॥२६३५॥ 2635
निर्भूषणं म्लानजीर्णवस्त्रशस्त्रं निरीक्ष्य तम् । युग्याधिरूढमायान्तं धन्यो हीनम्रतां दधे ॥२६३६॥
दीर्घास्पन्देक्षणं रूक्षघनकूर्चसविग्रहम् । व्यलोकयदथोलूकमिव नष्टं गुहागृहात् ॥२६३७॥
रेजे शैलस्थलद्विस्तैः शिबिरोद्दीपितानलः । भूपप्रतापस्वर्णस्य कषाश्मत्वमिवागतः ॥२६३८॥
स्कन्धावारे गते वर्षत्तुषारं प्रसभं नभः । अमर्त्यभावे भूभर्तुर्विशां चिच्छेद संशयम् ॥२६३९॥
प्राक्चेत्पतेद्धिमं तावन्म्रियेरन्त्रुटिताः क्षणात् । पिष्टातकान्तर्गर्ताटाः प्रविष्टा इव सैनिकाः ॥२६४०॥ 2640
एवमेकान्नविंशेब्दे दशम्यां शुक्लफाल्गुने[1] । न्यूनाब्दषष्टिदेशीयो निबद्धो लोठनः पुनः ॥२६४१॥
दीर्घप्रवासादायातं सत्कर्तुं कटकं पुनः । निर्ममो हर्म्यमुत्तुङ्गमारुरोह महीपतिः ॥२६४२॥

२६२०. 1) Emended; A उपन्यस्यंस्त°. २६२८. 1) $A_1$ gloss शान्ता अहन्ता अहंभावो यस्य. २६३०. 1) Emended; A दैवस्य. २६३७. 1) Emended; A °कूर्च स°. २६३८. 1) A °शिविरो°. २६३९. 1) A स्कन्दावारे. २६४०. 1) Emended with G (*sec. manu*); A प्राक्चेत्प°. २६४१. 1) A °फाल्गुणे.

यथोचितं दानमानसंभाषणविलोकनैः । संतोष्य व्यसृजत्सैन्यं धन्यादीन्प्रेक्षितागतान् ॥२६४३॥
तेषां पुनश्च दोर्द्वन्द्वमूले क्षिप्तकरं भटैः । न्यस्तेनानासिकं वासःप्रान्तेनाच्छादिताननम् ॥२६४४॥
निर्भूषणश्रोत्रपालिप्रविष्टैः श्मश्रुलोमभिः । बलक्ष[1]रूक्षैः प्रव्यक्तकार्श्यक्लेशं कपोलयोः ॥२६४५॥
उच्चावचोक्तिमुखरे पौरलोकेन्तरान्तरा । व्यापारयन्तं नेत्रान्तौ दीनस्तिमिततारकौ ॥२६४६॥
कातर्यदैन्यभीक्लान्तिक्षुदलक्ष्मीकटाक्षितम् । वेपमानविनिद्राङ्गं गां शीतेनार्दितामिव ॥२६४७॥
भ्रान्तामिव क्ष्मां पर्यस्तानिवाद्रीन्पतितामिव[1] । विदन्तं च दिवं शोष - - - -[2]रदच्छदम् ॥२६४८॥
दैविको वान्त[1]रायोस्तु ध्वान्तं वोग्रं प्रवर्तताम् । राजौकोभ्यर्णतां यातं वाता वा जरयन्त्विदम् ॥२६४९॥
सर्वापकारकृद्राज्ञः स्थास्यामि पुरतः कथम् । पदानि संनिरुन्धानं निर्ध्यायेति पदे पदे ॥२६५०॥अन्तर्युगलम्॥
बहुलोकावृततया स्तोकसंलक्ष्यमैक्षत । प्रतीहारैरथावेद्यमानं लोठनमङ्गने ॥२६५१॥कुलकम्॥
भ्रूसंज्ञया वितीर्णाज्ञो राज्ञा तामारुरोह सः । सभां पारिप्लवाम्भोजामिव प्रेक्षकलोचनैः ॥२६५२॥
दृष्ट्वा निर्दिष्टपार्श्वोर्वीस्थितिः पृथ्वीभुजस्ततः । अस्प्राक्षीत्क्षितिनिक्षिप्तजानुर्मूर्धाङ्घ्रिपङ्कजे ॥२६५३॥
हस्ताम्बुजाभ्यामालम्ब्य ललाटतटमाननम् । सम्राट्संभ्रमनम्रस्य तस्योदनमयच्छिरः ॥२६५४॥
रत्नौषधीजुषोः स्पर्शः पाण्योस्तापं स चेतसः । दौर्भाग्यमहरद्देहाश्चास्य[1] श्रीखण्डशीतलः ॥२६५५॥
पुण्यानुभावात्कारुण्यभाजो भूभर्तुरञ्जसा । विस्रम्भसंभावनया स क्षणात्पस्पृशे हृदि ॥२६५६॥
मा भैषीरिति दृप्तोक्तिः सुखं संप्राप्स्यसीति वाक् । अगाम्भीर्येण भग्नेव मन्युर्न त्वयि सोधुना[1] ॥२६५७॥
इत्युक्ते पूर्ववैराणां भवेदुद्घाटनं कृतम् । बान्धवो नस्त्वमित्यस्मिन्परीहास इव क्षणे ॥२६५८॥
क्लिष्टोसीति स्वप्रतापप्रभावाभाषणं भवेत् । ध्यात्वेति भूभृद्दृष्ट्वास्य नाप्यायं तु गिराकरोत् ॥२६५९॥तिलकम्॥
अभयार्थनया पादौ स्प्रष्टुं नमयतः शिरः । संस्पर्शी मौलिषु पुनर्विग्रहस्याङ्घ्रिणाकरोत् ॥२६६०॥
का योग्यता सत्क्रियायां ममेति वदता बलात् । अजिमहत्पितृव्येण ताम्बूलं स्वकरार्पितम् ॥२६६१॥
नम्रं द्वारेशमूचेभूच्छ्रमो व इति सस्मितम् । धन्यं षष्ठं च परपर्श प्रष्ठं सव्येन बाहुना ॥२६६२॥
दाक्ष्यदाक्षिण्यगाम्भीर्यविनयाद्यैर्विभाव्य तम् । भूभृद्गुणैः परीतं स्वं लोठनोमन्यतावरम् ॥२६६३॥
आदिश्य सान्त्वनं धन्यमु[1]खेनाथ नृपानतम् । पितृव्यं प्राहिणोद्वेश्म भ्राजिष्णु विनयाञ्जलिः ॥२६६४॥
अभियोगे य एवास्य नीतौ विन्यस्यतो दृशम् । मुखरागः स एवाभूत्फलाप्त्याप्रावविप्लुतः ॥२६६५॥
नायाति वाडवशिखिक्कथनेन तापं शैत्यं हिमाद्रिपयसा विशता न चाब्धिः ।
कश्चिद्गभीरमनसां सततं विषादकाले प्रमोदसमये च समोनुभावः ॥२६६६॥
प्रीतिस्थैर्यैर्ज्ञातियोग्यैश्चोपचारैरकृत्रिमैः[1] । क्रमाद्राजाहरल्लज्जां पौरुषभ्रंशजीवयोः ॥२६६७॥
दायादोष्टह्वयादेव राष्ट्रे कुष्टेपि मन्त्रवित् । भोजनो[1]त्पिञ्जसर्पस्य दन्तं सोन्तरचिन्तयत् ॥२६६८॥
प्रवासायासभीत्या स्वैस्त्यक्तसंरम्भसंभ्रमैः । जिगीषुर्विद्विषच्छेषैश्चक्रे यन्निष्प्रजागरः ॥२६६९॥
साल्हणिः[1] स तु निस्तीर्णः[2] श्वभ्राच्छून्यगृहे वसन् । पितृव्यविग्रहोदन्तमुपलेभे न कंचन ॥२६७०॥

२६४५. 1) A वलक्ष°. २६४८. 1) Emended with C; A °पतितानिव.—2) Thus A; C supplements शोषबहुशुष्करद°. २६४९. 1) Emended with C; A दैविको न्तरा°. २६५५. 1) Emended; A °देहचास्य; C °देहश्चास्य. २६५७. 1) Emended with G (*sec. manu*); A मन्युना त्वयि साधुना. २६६४. 1) Emended; A धन्यं मु°. २६६७. 1) Emended; A °कृत्रिमः. २६६८. 1) Conjectural reading; A भोजनोत्पिञ्ज°. २६७०. 1) Emended; A सल्हणः.—2) Emended; A विस्तीर्णः.

राजगृह्यं[1] त्वलंकारं डामरान्तिकमागतम् । पृष्टाद्वीक्ष्याभवद्द्रोहद्रोहसंभावनस्तदा ॥२६७१॥
ददर्श च क्रमाद्दूरतया दुर्लक्ष्यविस्तृति[1] । स्कन्धावारं[2] बद्धमालं मार्गे नगरगामिनि ॥२६७२॥
अज्ञातेन विदूरत्वात्पितृव्येणाश्रितं ततः । युग्यं चासौ धन्यषष्ठयुग्ययोरन्तरैक्षत ॥२६७३॥
अचिन्तयच्च को हेतुः कटकप्रस्थितेरितः । युग्यारूढश्च कोथ स्यात्तृतीयो धन्यषष्ठयोः ॥२६७४॥
पृष्टस्तेना[1]वदत्कश्चित्पामरोथ प्रमोदभाक् । संधिर्निबद्धो नगरं गतौ लोठनविग्रहौ ॥२६७५॥
संदेहोजहतद्रोहो[1] भयमुन्मुखतां भजेत्[2] । ज्ञातिस्नेहेन तस्यासीन्मुहूर्तमपहस्तितम् ॥२६७६॥
सैन्ये गते शून्यतया मिलितैर्विहगैः सरित् । रुवद्भिस्तेन तौ नीतौ क्रन्दन्तीव व्यकल्प्यत[1] ॥२६७७॥
त्वन्य एव मे दध्याद्ध्यात्वेहस्थमवेत्य ते । पुनर्नयेयुर्धन्याद्याः क्रमाद्ध्यावथेति सः ॥२६७८॥
स्त्रं नेतुं पार्थिवचमूं प्रत्यावृत्तां निनादिनीम् । श्रुतेन्तरान्तरा घोषे निर्झराणामशङ्कत ॥२६७९॥
अथाजायत जीमूतवितीर्णतिमिरं जगत् । वन्ध्यं मध्यंदिनेनेव निशीथव्यथितश्रिया ॥२६८०॥
राधमासावधि दधुस्ततः प्रभृति वारिदाः । दीक्षां क्षोण्यां तुषारौघसत्त्रासूत्रणकर्मणि ॥२६८१॥
विस्रब्धघात्यभव्योहं निर्ब्रह्मण्यो ह्रियोज्झितः । निन्दन्स्वमिति भोजाग्रे ततो दस्युरुपाविशत् ॥२६८२॥
समयापेक्षयाक्षोभो मन्युं संस्तभ्य[1] साल्हणिः । सान्त्वयन्निव नास्त्यागस्तवात्रेति जगाद तम् ॥२६८३॥
ऊचे च संश्रितापत्यज्ञात्याद्यापद्गतं त्वया । त्रातुमेतत्कृतं तत्र गर्हां नार्हसि कस्यचित् ॥२६८४॥
तव द्रोहस्पृहा स्याच्चेन्नानृशंस्यं भवेन्मयि । परवत्ताभवत्तस्मादियं कालानुरोधतः ॥२६८५॥
राज्ञश्च हर्षभूभर्तृवंश्या इव न वा वयम् । उच्छेद्याः किं तु संयम्या राजधर्मानुरोधिनः ॥२६८६॥
स्वस्याख्यातिस्तयोर्बाधा राज्ञश्चामार्गगामिता । शेषं मां[1] रक्षता हन्त निषिद्धा धीमता त्वया ॥२६८७॥
इत्युक्तवन्तं तं त्यक्तलज्जाभार इवावदत् । साक्षी त्वमेवं[1] सर्वत्र ममेति सततं स्तुवन् ॥२६८८॥
क्षणेन च प्रहिणु मामधुनेत्यभिधायिनम् । तमेव हिमवृष्ट्यन्ते कर्तास्मीत्युक्तवान्ययौ ॥२६८९॥
त्वयि दस्युर्[1]विपर्यस्येन्मन्युं जानन्नभोजनम् । भोजस्तत्रेति केनापि कथितो व्यधिताशनम् ॥२६९०॥
स्पृशंश्चान्नं चिरात्प्राप्तमिदं विक्रीय ताविति[1] । ध्यायञ्ज्ञात्योर्देहमांसं तयोर्भुक्तममन्यत ॥२६९१॥
दस्युस्तु हिमवृष्ट्यन्ते त्वां प्रहेष्यामि निश्चयात् । श्वो वाद्य वेति[1] कथयन्द्वौ मासौ न मुमोच तम् ॥२६९२॥
मां ज्ञात्वेह स्थितं राज्ञः[1] कृतारब्धोर्हिमात्यये । विक्रीणात्येष मत्वेति भोजोधाद्गमने त्वराम् ॥२६९३॥
मिषं यं यं निषेधाय गमनायोदपादयत् । दस्युस्तं तं समुच्छेद्य सापराधं व्यधत्त तम् ॥२६९४॥
तेजोनाम्नो[1] बलहरात्संजातो[2] भाद्रमातुरः । [3]अभ्यधाद्बाल्यमाशास्य लम्बकम्बलकावृतः ॥२६९५॥
तेजोविस्फूर्जितां त[1]त्तद्वीरोत्कर्षकषोपले । द्वैराज्ये सौस्सले सैन्ये पङ्क्तिपावनतां गतः ॥२६९६॥
पितुराप्ततया राज्ञा वर्धितस्तदनन्तरम् । एवेनकादिविषयाधीकारित्वं क्रमाद्व्रजन् ॥२६९७॥

२६७१. 1) Emended; A राजा गृहे त्वलङ्कारडामर°; cf. viii. 2925. 2618. २६७२. 1) Emended; A °विस्मृति.—2) A स्कन्दा°. २६७५. 1) Emended; A पृष्टसेना°. २६७६. 1) Thus A; the text of this *pâda* appears to be corrupt; perhaps read संदेहं जहतो द्रोहभयमु°.—2) भजेत् corr. by $A_1$ from व्रजेत्. २६७७. 1) Emended; A व्यकल्पत. २६८३. 1) Emended with C; A संस्तम्भ्य. २६८७. 1) Emended; A शेषं मां; C स्वां सभां. २६८८. 1) Emended with G; A तमेव. २६९०. 1) Emended; A दस्यून्विप°. २६९१. 1) Conjectural reading; A विक्रीयतामिति; cf. for the context viii. 2598 ffg. २६९२. 1) Emended with C; A वेति. २६९३. 1) Emended; A राज्ञा. २६९५. 1) Emended; A ओजो°; cf. viii. 2862 and the *vv. ll.* तेजो, ओजो viii. 1084.—2) Emended; A °जातं.—3) The text of this *pâda* is corrupt. २६९६. 1) Emended with G; A °जितांस्तत्त°.

विमुखे राज्ञि नागेन खुयाश्रमभुवा कृते । तं राजवदनो नाम विजिघृक्षू ररक्ष तम् ॥२६९८॥चक्कलकम्॥

आनृशंस्यं भृत्यभावादलवन्यतयास्य च । प्रत्यवस्थित्यसामर्थ्ये राज्ञि सर्वे शशङ्किरे ॥२६९९॥

अतोलंकारचक्रेण कुर्वतोऽत्यर्थमर्थनाम्[1] । द्वैराज्येच्छो राजबीजी तदा न स समर्प्यत ॥२७००॥ युगलकम्॥

नीतः प्रत्यक्षतां दूरस्थितेप्युदयने स तम् । विमृष्टवति दुधुक्षुस्त्यक्तुमेनं न सोशकत् ॥२७०१॥

राज्ञा कर्तुं विनियमं भोजस्य प्रहितो धनैः । प्राप्[1] द्रङ्गामलंकारो विषयाधिकृतस्ततः ॥२७०२॥

तत्पार्श्वमुद्यतं गन्तुं मां समुत्सृज्य[1] यासि चेत् । त्यक्ष्यामि तदसूनेवमूचे भोजस्तु डामरम् ॥२७०३॥

श्वस्त्वां प्रभाते द्रक्ष्यामीत्येतावत्तत्र जल्पति । कोट्टादनुक्त्वैव निशस्तुर्ययामे विनिर्ययौ ॥२७०४॥

घनवर्षेप्यमर्षेण मार्गान्वेषी गवेषणम् । यात्रचक्रे क्षपान्ते तं तावच्छुभ्रात्र निर्गतम् ॥२७०५॥

असाध्यप्रतिषेधोथ तमह्नचनुजगाम सः । प्रस्थितं शारदादेवीस्थानं यावन्मितानुगः ॥२७०६॥

एकसार्थगतौ ज्ञाती विना तौ ज्ञातियोषिताम् । दाक्षिण्यादक्षमः स्थातुमग्रे सागा भवन्निव ॥२७०७॥

प्रवयाः पञ्चषान्वारान्व्यधादारब्धिमेष तु । युवाप्यकल्यः कौलीनमिति स्वस्य च चिन्तयन् ॥२७०८॥

दुराण्डगमने खण्डितेच्छः संश्रित्य दारदान् । संयुयुत्सुर्मधुमतीरोधसा मार्गमग्रहीत् ॥२७०९॥ तिलकम्॥

क्वापि श्यानाश्मसूच्यग्रिमृत्युदंष्ट्राङ्कुरोत्कटान् । क्वचिद्रुद्धप्रकाशाभ्रकालपाशान्धकारितान् ॥२७१०॥

प्रभ्रश्यद्धिमसंघातगजव्यूहोल्वणान्क्वचित् । क्वापि निर्झरफूत्कारनाराचक्षतविग्रहान् ॥२७११॥

क्वचित्क्षुस्पर्शपवनस्पष्टस्फुटदसृग्धरान् । क्वाप्यातपक्षतहिमज्योतिर्निहत[1]दृक्पथान् ॥२७१२॥

दूरावरोहं[1] प्रसृते स्फुटमग्रस्तुते विदन् । ऊर्ध्वावरोहमसकृन्मन्यमानोप्यधोगतेः ॥२७१३॥

तुषारकालविषमान्षट्सप्तान्पथि वासरान् । उल्लङ्घ्य स दरद्राष्ट्रसीमान्तग्राममासदत् ॥२७१४॥कुलकम्॥

मूर्धार्पितात्मसामग्रीहताकिंचन्यलाघवम् । तं दुग्धघाट[1]कोट्टेशः प्रणम्यानयदर्च्यताम् ॥२७१५॥

दूरस्थितो विड्डसीहस्तदूतोक्ततदागमः[1] । प्रक्रियां प्राहिणोच्छत्त्रवादित्राद्यां[2] नृपोचिताम् ॥२७१६॥

आदिष्टदिष्टवृद्धिश्च राष्ट्रे कोट्टाधिपेन सः । अत्वारयत्स्वकोशस्य स्वामित्वं राजबीजिनः ॥२७१७॥

राजायमानो भोजोथ राजवासगतोर्चितुम्[1] । आनिन्ये राजवदनापत्येनाभ्येत्य पश्यताम् ॥२७१८॥

स पित्रैकान्ततो राज्ञो भिन्नेन प्रहितोन्तिकम् । तेनाज्ञाप्यरिनीत्युग्रपाशग्रस्थापनोपमः ॥२७१९॥

कार्यगौरवविश्वासाभावव्यतिकरोचितम् । संदिश्य प्राहिणोत्तं स न स्वीकुर्वन्न चोत्सृजन् ॥२७२०॥

किमाप्तोहं किमेकान्तभिन्नो राज्ञः शनैरिति । मां ज्ञास्यसीति तं दूतैः स राजवदनोवदत् ॥२७२१॥

तस्य दार्ढ्यं दर्शयितुं गोत्रिवैरिमिषान्नृपे । ब्रुवाणेथ विदोषत्वं नागाद्यैरमहीव्रणम्[1] ॥२७२२॥

सामग्र्यूनं[1] शनैः स्थैर्यं ततः साम्यमथ क्रमात् । आधिक्यं चादधे तेषां विग्रहैर्धैर्यनिष्ठुरः ॥२७२३॥

तथा प्रतिष्ठां स प्राप तस्यापूर्वस्य भूमिजाः । दास्यमेत्य यथा व्रीडां नागुर्नागस्य बान्धवाः ॥२७२४॥

स हि त्यागक्षमास्तम्भालोभादिगुणभूषितः । अभिगम्योभवन्नित्याभ्यस्तभूतिरिवोन्मिषन् ॥२७२५॥

२७००. 1) Emended; A कुर्वतात्य°. २७०२. 1) Emended; A प्राप्य. २७०३. 1) Conjectural reading; A गन्तुं मामुत्सृज्य; C मासमुत्सृज्य. २७१२. 1) Emended; A °निहित°. २७१३. 1) Emended; A °रोहे. २७१५. 1) Thus A; cf. दुग्धघातम् viii. 2468. २७१६. 1) Emended with C; A °गमम्.—2) Emended; A °वादित्राद्यान्नृपो°. २७१८. 1) Emended; A °गतोन्चितुम्; C °गतोन्चितं; G °गतोन्चिताम्. २७२२. 1) Emended; A °व्रणे. २७२३. 1) Conjectural reading; A सामग्री नः.

स्थैर्ये पृथ्वीहरादीनां साश्रयाणां न कौतुकम् | आडम्बरो निरालम्बस्यास्य स्तुत्यस्तु विस्तृतः ||२७२६||

प्रथयन्पृथुलान्व्यूहांश्चौराटविकघोषिकैः | क्रान्तग्रामोथ तस्थौ स भोजादीन्प्रतिपालयन् ||२७२७||

जहुरन्योन्यसंघर्षसेर्ष्यामात्यमतेन वा[1] | ततो लुण्ठिप्रियत्वाद्दा नीतिमन्येपि डामराः ||२७२८||

उद्घातध्वंसितां विप्लवेच्छा लोठनबन्धने | याधात्तेषां तदानीं सा जगाम शतशाखताम् ||२७२९||

त्रिल्लको जयराजश्च राज्ञा संवर्धितावपि | अकार्ष्टां नैव तपसा विवशौ चक्रमीलनात् ||२७३०||

यो घूकानामिव श्वभ्रमामयानामिव क्षयः | दैत्यानामिव पातालं यादसामिव सागरः ||२७३१||

आश्रयः सर्वदस्यूनां त्रिल्लको माययोल्बणः | स देवसरसाधीशं संबध्नन्विप्लवं व्यधात् ||२७३२||युग्मम्||

काङ्क्षन्तोथ तदाक्षेपं क्षोणीत्राणार्थिनो द्विजाः | प्रायं नृपतिमुद्दिश्य चक्रिरे विजयेश्वरे ||२७३३||

अकालदस्युनिर्माथं जानतो[1]भ्यर्थनां न ते | राज्ञोगृह्णंस्ततः सोभूद्दाक्षिण्यात्तत्सभानुगः ||२७३४||

प्रस्थातुं पार्थिवे सज्जे ज्यायान्यो विप्लुतेष्वभूत् | स जातोत्पातपिटको जयराजो व्यपद्यत ||२७३५||

भाग्यवानेकतोजातदस्युवैविक्त्यमीशिता | ततो मडवराज्यं स विप्रप्रीत्यै विनिर्ययौ ||२७३६||

अमात्यदत्तवैमत्यैः स्वशाद्य[1]मठरैरथ | द्विजैर्निषिद्धोलंकारो मन्त्री राज्ञोज्झितोन्तिकात् ||२७३७||

स व्यवस्थापने दुःस्थदस्यूनां सोद्यमः सदा | सेर्ष्याणां प्रत्यभात्तेषां तद्दोषपरिपोषकः ||२७३८||

त्रिल्लकोन्मूलनं कुर्यां कृत्वा द्वैराज्यभञ्जनम् | प्रतिज्ञायेति नृपतिर्विप्रान्प्रायान्न्यवीवरत् ||२७३९||

त्रस्तोथ त्रिल्लकस्तैस्तैरप्रियैरुदवेजयत् | अनुद्भिन्नमुखो गूढामयो रोगान्तरैरिव ||२७४०||

जयराजानुजं राज्ञा यशोराजं निवेशितम् | तन्मतेनावचस्कन्द भ्रातृव्यं राजकाभिधः ||२७४१||

त्रातुं तं देवसरसं दृप्रारात्याश्रितं गतः | सज्जपालोल्पसैन्यत्वात्संदिग्धविजयोभवत् ||२७४२||

ज्ञातोदन्तस्ततोभ्येत्य रिल्हणो रणमुल्बणम् | जयलक्ष्मीकटाक्षाणां प्रथमातिथितामगात् ||२७४३||

मन्दरेणाथ तेनारिवारिराशौ विलोडिते | कल्योभूत्सज्जपाला[1]ब्दस्तुच्छारातिजलाहतौ ||२७४४||

जितेपि राजके स्वोऽर्व्यां विनानुग्राहकं क्षमः | न बभूव यशोराजः शून्ये बाल इवासितुम् ||२७४५||

प्रतीक्ष[1]माणो द्वैराज्यपर्याप्तिं क्ष्माभुजेकरोत् | त्रिल्लकः कालहरणं तैस्तैर्मायानतिक्रमैः ||२७४६||

यथाकालं ततो गूढोपोढान्मण्डलकण्टकान् | स्वपक्षसूचीविशिखान्दिक्षु श्वाविदिवाक्षिपत् ||२७४७||

अथ पार्थ्वीहरिर्यो भूच्चतुष्को लो[1]ष्ठकानुजः | राज्ञा भ्रात्रा समं बद्धः कारागारात्पलायितः ||२७४८||

स तेन निजजामात्रा रक्षितः स्वोपवेशने | असंख्यडामरयुतः शमालां संप्रवेशितः ||२७४९|| युग्मम् ||

आकर्ण्य कुररस्येव[1] निनादं तस्य भेजिरे | व्यक्ततां दस्यवो गूढा ह्रदस्थाः शफरा इव ||२७५०||

दृप्यन्तं राजवदनं षष्ठचन्द्रोथ गग्गजः[1] | रुरोध प्रलयोद्धृत्तं वेलाद्रिरिव वारिधिम् ||२७५१||

वर्धमानक्षीयमाणसंहती तौ त्वजायताम् | घर्मे सजम्बालहिमौ तुषाराद्रितटाविव ||२७५२||

षष्ठस्य जयचन्द्रश्च श्रीचन्द्रश्चानुजौ ततः | दूरविप्रकृतौ राजमन्दिरावाप्रवेतनौ ||२७५३||

ज्ञातनिवृत्त्यपर्याप्ती धुर्यकार्यवशप्रियात् | प्रतीक्ष्यादप्रजाद्राज्ञः शङ्कितावशुभागमम् ||२७५४||

---

२७२८ [1]) Emended; A वः. २७३४. [1]) Emended; A जानते°. २७३७. [1]) Doubtful emendation; A स्वशाद्यं मठ°. २७४४. [1]) Emended; A °पालाब्धिस्तुच्छा°. २७४६. [1]) Emended; A प्रतीक्ष्यमाणो. २७४८. [1]) Emended; A °ष्कः कोष्ठका°; comp. for the name of Prithvîhari's elder son, viii. 2912. 2799. 2496. 3313. २७५०. [1]) $A_2$ gloss कुररस्येति कुररः नड् हूड् इति भाषया कश्मीरेषु प्रसिद्धः. २७५१. [1]) Thus corr. by $A_2$ from गर्गजः.

कटकाद्विद्रुतौ राजवदनान्तिकमागतौ । श्वशुर्यावपि भूभर्तुरागतौ प्रतियोगिताम्[1] ॥२७५५॥
शैलप्रस्थानपथिकैरसंख्यैरथ खाशकैः । स पूर्वराजकोशार्थी भूतेश्वरमलुण्ठयत् ॥२७५६॥
तस्कराक्रान्त्यशरणं बलवन्निहताबलम् । अराजकमिवाशेषं राष्ट्रं कष्टां दशामगात् ॥२७५७॥
उदयं कम्पनाधीशं[1] रिल्हणं च ततो नृपः । चतुष्कयुद्धमादिश्य नगरं विवशोविशत् ॥२७५८॥
पार्श्वीहरिस्तु दुःसाधो महाव्याधिरिवौषधैः । स्तम्भितोभूत्तयोः सैन्यैः संहन्तुं न स्वशक्यत ॥२७५९॥
कालापेक्षां स्वपक्ष्याणां दुर्बुद्धिं वानुरुन्धतः । आसीन्मन्दप्रतापत्वं रिल्हणस्यापि तत्क्षणम् ॥२७६०॥
विड्डसीहस्तु विज्ञातभोजोदन्तो व्यसर्जयत् । दूतानानेतुमुर्वीशान्सुबहूनुत्तरापथे ॥२७६१॥
अपि वित्तेशवनितारहोवैयात्यवेदिभिः । अपि किंमानुषपुरीगीतोद्गारिदरीगृहैः ॥२७६२॥
अप्यौष्ण्याद्वालुकाम्भोधेः शीतावेदिभिरेकतः । अपि भृङ्गानिलैः प्रीतान्कुर्वाणैरुत्तरान्कुरून् ॥२७६३॥
हिमाद्रिकच्छैर्म्लेच्छेशाः प्रधावन्तोधिशिश्रियुः । दिशस्तुरंगै रुन्धन्तः स्कन्धावारं[1] दरत्पतेः ॥२७६४॥ तिलकम् ॥
राज्ञां संघटनं यावद्व्यधादेवं दरन्नृपः । दिग्भ्यो भोजान्तिकं तावत्तत्सामन्ताः प्रपेदिरे ॥२७६५॥
स पिप्रिये तानज्ञातालापान्वीक्ष्य गिरिव्रजात् । प्रीतिप्ररूढप्रणयानवरूढान्कपीनिव ॥२७६६॥
जयचन्द्रादयो राजवदनप्रहिता अपि । कीराः काश्मीरका[1]ः पार्श्वमभजन्राजबीजिनः ॥२७६७॥
अभ्यर्णस्थान्बलहरप्रमुखांश्च विदूरगान् । अपुष्णात्साल्हणिः स्वर्णैः परां कोशेशतां भजन् ॥२७६८॥
ततः सुजनितोत्पिञ्जतया निश्चोद्यचक्रिकः । भोजेन राजवदनः समगंस्तापसाध्वसम् ॥२७६९॥
तयोरकृतकर्तव्यविशेषेणेतरेतरम् । जातसौष्ठवयोः क्षिप्रमविश्वासो व्यशीर्यत ॥२७७०॥
अभ्यमित्रीणतां तस्यानिच्छतो दरदं विना । मदात्साहायकार्थैच्छन्मितानेव स तान्हयान् ॥२७७१॥
स्युश्चेत्सोढाग्रिमाटोपाः कटकस्यास्य नो द्विषः । तत्साम्यमुन्मिषेद्यद्वा भङ्गो भूयोपि योगभित् ॥२७७२॥
तस्मात्सर्वाभिसारेण रणमेकं ममेच्छतः । विजयावजयावाप्तिरेकाहान्तरिता मता ॥२७७३॥
व्याजहारेति यद्भोजस्तदेषोथ हसन्स्मयात् । निन्ये तद्दारदं सैन्यमुपेक्ष्यागामिनी[1]श्चमूः ॥२७७४॥ तिलकम् ॥
संकटान्ते वितीर्णानुयात्रस्तेषां प्रसर्पताम् । स राजबीजी शुश्राव दरद्राजमथागतम् ॥२७७५॥
तत्संगमाय व्यावृत्ते तस्मिन्कोट्टान्तिकं पुनः । प्रावेशयद्बलहरो मातृग्रामं स तद्बलम् ॥२७७६॥
दिशस्ततो वीक्ष्य वाहैर्भ्रान्तवातमृगा इव । निसर्गधीरधीर्गार्गिर्न धैर्यात्पर्यहीयत ॥२७७७॥
तस्य सर्वेपि नीलाश्वडामराः स्वे च सैनिकाः । विपक्षैः सह बद्धैक्याः सैन्यान्दुधुक्षवो ययुः ॥२७७८॥
स तथा विषमस्थोपि प्रस्थित्यै प्रार्थितो निजैः । म्लानाननः प्रभुं द्रष्टुं न क्षमोस्मीत्यभाषत ॥२७७९॥
स सूर्यवर्मचन्द्रस्य न जातः कश्चि[1]दन्वये । उपयोगाय यो नागान्मल्लाभिजनजन्मनाम् ॥२७८०॥
भोजं सभाजयित्वाथ विड्डसीहः सपार्थिवः । सारैः समं स्वसामन्तैर्विजयाय व्यसर्जयत् ॥२७८१॥
ततो म्लेच्छगणाकीर्णां व्रजन्संवाहयंश्चमूः । प्रयाणमात्रान्तरितः पृष्ठे तस्य बभूव च ॥२७८२॥
प्रादुष्कृतजगत्क्षोभे बले तत्रानुयायिनि । उत्साहात्साल्हणिर्मेने कृत्स्नां हस्तगतां महीम् ॥२७८३॥

---

२७५५. 1) Emended; A प्रतियोग्यताम्. २७५८. 1) Emended; A कम्पनाधीशरि°. २७६४. 1) A स्कन्दा°. २७६७. 1) Emended; A काश्मीरिका. २७७४. 1) Emended; A° गमिनी°. २७८०. 1) Emended; A कैश्चि°.

वाजिभिस्तर्जिते[1] म्लेच्छराजैश्च बलमूर्जितम् । स्थाने समुद्रधाराख्ये निबबन्धाथ तत्पदम् ॥२७८४॥
स राजवदनस्तादृग्दुर्जयाग्र्यबलोज्ज्वलः । मृत्युदन्तान्तरे दिष्टं षष्ठचन्द्रममन्यत ॥२७८५॥
ततः प्रावृट्[1]पयोवाहकृतोदीपपरिप्लुता । संजायते स्म वसुधा समीभूतजलस्थला ॥२७८६॥
धरित्रीपानपात्रेम्भःसीधु[1]पूर्णे दधुर्द्रुमाः । मग्ना लक्ष्यशिखामात्रा वलन्नीलोत्पलोपमाम् ॥२७८७॥
षष्ठस्य संकटं जानन्भूभृच्छेषैर्बलैः समम् । अथोदयद्वारपतिं तं च धन्यं व्यसर्जयत् ॥२७८८॥
वाहिनीरुद्धमार्गौ तौ पदवीमनुसस्रतुः । मार्गे धनंजयस्येव शैनेयपवनात्मजौ ॥२७८९॥
लम्बाम्बुदेम्बरे दूरं वारिपूर्णे च भूतले । स्यूतेव विद्युद्दृशे भिन्नद्योतननिःस्वना ॥२७९०॥
शोभामात्रोदितागर्हपरिवर्हाबहिष्कृतः । तत्राविभक्तकटकः पार्थिवः समजायत ॥२७९१॥
अनास्थो राजवदने सत्त्वावष्टम्भयोः पुरा । अत्रापरो न निक्षेप्यो राजबीजीति दारदान् ॥२७९२॥
त्रिल्लकः संदिशन्दूतैर्वृद्धिं पार्थ्वीहरिं नयन् । तयोरेकस्य सामर्थ्यादैच्छत्तं हस्तपातिनम् ॥२७९३॥युग्मम्॥
अभित्तिलिखितालेख्यकल्पं बल्हरस्य तत् । तादृग्विलोक्य सामर्थ्यमथ राज्ञश्च सर्वतः ॥२७९४॥
विभक्ताशेषसैन्यस्य तत्र तत्रारिसंकटे । ज्ञात्वाप्रतिसमाधेयच्छिद्रमुन्मुद्रदुर्नयः ॥२७९५॥
अकृशश्चाविदाचारश्चिरं स्वाङ्गैः स गोपितम् । बहिर्दुर्धर्षमत्याक्षीद्द्वितीयमपि कण्टकम् ॥२७९६॥ तिलकम् ॥
ध्वान्तेम्बुधरजालान्ध्यमहावाते रजोभरः । स्वपक्षभेदयोर्ज्ञातकर्णेजपमहोद्यमः ॥२७९७॥
कुलच्छेदकृतो राज्ञस्तत्र तत्रातिसंकटे । अशान्तजागरोत्यर्थमनर्थपरिपोषकः ॥२७९८॥
सोथ शूरपुरेकस्माद्बहुभिः सह डामरैः । तेन संपूरितः पृथ्वीहरजो लोठको[1]पतत् ॥२७९९॥ तिलकम् ॥
तस्य संघटतः कन्थां प्रयातं वैकृतं चिरात् । पालीभङ्गे तटस्येव प्रावृट्पूर्णस्य लक्ष्यताम् ॥२८००॥
निद्राणोपेन्द्रजठरप्रसादनिसृतं जगत् । समेतमिव तत्सैन्यं प्रत्यभाज्जलदागमे ॥२८०१॥
यावद्भिः पार्यते नेदृक्संख्यातुमपि तद्बलम् । भर्तव्यकल्पैः सुस्वल्पयोधमध्यगतैरपि ॥२८०२॥
तावद्भिरनुगैः पिञ्चदेवद्रङ्गाधिपो युधि । तद्योधान्याम्यहरितैः[1] सरितश्चातिथीन्व्यधात् ॥२८०३॥ युग्मम् ॥
तटोज्ज्वलैश्चिताचक्रैर्बिम्बितैस्तटिनीजले । मृतानामपि संस्कारः क्रियमाण इवाभवत् ॥२८०४॥
इति विस्मृतमृत्युः स कुर्वन्नेकाहमाहवम् । कथंचिदाप्तैरन्यैश्च युर्भग्नसारोपसारितः ॥२८०५॥
पुरे स शून्ये सैन्यानि संगृह्णंस्तत्र सर्वतः । द्वित्रैरहोभिर्नगरं सुखप्राह्यममन्यत ॥२८०६॥
इच्छां पद्मपुरास्कन्दे मन्दत्वं त्रिल्लकोनयत् । पृष्ठस्थयोर्यशोराजकम्पनाधीशयोर्भयात् ॥२८०७॥
न भृत्यैस्तद्विधः सिद्धश्चास्यैकस्मिन्नसंमते । विधेयान्यलवन्यस्य डामरे होलडौ[1]कसि ॥२८०८॥
द्वैराज्ये सुस्सलस्यापि नैवादृश्यत तादृशः । अनर्थो यादृगुत्तस्थौ तत्सुतस्य समन्ततः ॥२८०९॥
चतुष्कमवधीर्याथ राज्ञा पादगदोपमम् । रिल्हणः प्रैषि तं[1] ग्रीवागण्डतुल्यं व्यपोहितुम् ॥२८१०॥
प्रस्थितस्तत्प्रमाथाय शामालैः सोन्वबध्यत । व्रजन्प्राग्ज्योतिषं हन्तुं पार्थः संशप्तकैरिव ॥२८११॥
अधावच्चाभ्यमित्रीणस्तान्व्यावृत्य निपातयन् । पश्चाकरोन्मुखः पृष्ठलग्नान्भृङ्गानिव द्विपः ॥२८१२॥

---

२७८४. [1]) Doubtful emendation; A °स्तर्जितो. २७८६. [1]) Emended with C; A प्रावृड्पयो°. २७८७. [1]) A °शीधु°. २७९९. [1]) Thus A; comp. for this name viii. 2496. 2748. 2912. 3313. २८०३. [1]) Emended with C; A °हरित. २८०८. [1]) A होलळौकसि. २८१०. [1]) Emended with G; A रिल्हणप्रेषितं.

रणश्रान्तेन गमिता त्रियामा तेन रामशे[1] । गर्ज[2]त्कुल्यार्पितारातिपृतनानादसंस्क्रिये ||२८१३||
तं[1] कल्याणपुरं प्राह्णे विशन्तं सोग्रमागतः । रुरोधाभ्येत्य भूयोपि बलैर्भरितदिङ्मुखः ||२८१४||
आपतन्नेव चारातिपदातीन्संमुखागतान् । दृष्टनष्टान्व्यधाच्छागानिवाग्रेजगलो गिलन् ||२८१५||
उद्वृत्तमारुतस्येव तस्यापाते पदातिभिः । तत्यजे रिल्हणः पर्णैर्हेमन्त इव पादपः ||२८१६||
पश्यतस्तस्य ते विद्रवन्तो जिह्मा न जिह्रियुः । देहस्पृहापारमित्यै कस्यौचित्यमनत्ययम् ||२८१७||
आग्नेरथापसृत्य स्वैरर्थितो रिल्हणोब्रवीत् । नयन्प्रजासृजा साम्यं[1] स्वामिभक्तिस्मृतेः स्मितम् ||२८१८||
ह्री[1]---वाविशेषेपि जन्तोर्जन्तोर्यदीशिता । भृत्यभावेपि यो लुप्तकृत्यो धिक्तस्य जीवितम् ||२८१९||
जातं वक्त्रसरः श्मश्रुराजिनीलाब्जभा[1]जनम् । जराकैरवगौरं च राज्ञः पादान्प्रपद्य यान् ||२८२०||
म्लायत्सु तेषु भ्रूभङ्गभृङ्गभ्राजिष्णुभिर्भवेत् । कथं लक्ष्मीविलासैस्तदखण्डैरविडम्बितम् ||२८२१||युग्मम्||
एषा कापुरुषासेव्या धीराणां नैव पद्धतिः । यदायासलवत्रासात्सौख्यवैमुख्यभागिता ||२८२२||
वस्त्रापासन एव शीतजनितस्त्रासोथ तीर्थाम्बुभिः स्नाने ह्लादसुखोपलब्धिरसभब्रह्मानुभावोपमा ।
वैहल्यं[1] समरे वपुर्विजहतामेवं किलोपक्रमे कै[2]वल्याख्यसुखोपलम्भपरमा पश्चात्पुनर्निर्वृतिः ||२८२३||
एवमुक्त्वा परानीकमेकाकी स व्यगाहत । गृध्रञ्शरान्हरिभोथश्वाससंदिग्धभूत्कृतान् ||२८२४||
स्वर्णत्सरुप्रभा[1]जालहरितालोज्ज्वलोभजत् । खड्गपट्टनटस्तस्य रणरङ्गोत्तरङ्गताम् ||२८२५||
तत्खड्गस्य घ्नतः खड्गाङ्ग्रीवैर्जालच्छलाद्ध्रुवम् । उत्थाय लग्नं शत्रूणां तृणैस्तृणमणेरिव ||२८२६||
आजौ तमनुजग्मुस्ते यैरगण्यन्त वैरिणः । तिर्यञ्चोलक्ष्यतां यातास्तेषां प्राणास्तृणान्यपि ||२८२७||
संप्रविष्टो मुखान्मृत्योः कैश्चिन्मार्गैः स निर्गतः । तिमेः संमीलितास्यस्य श्रोत्ररन्ध्रैरिवोदकम् ||२८२८||
शश्वत्कुर्वन्परावृत्तीः श्रमशान्त्यै विनिर्गतः । प्रक्षीणभूयिष्ठबलो लब्धोत्सेको रिपावभूत् ||२८२९||
पृष्ठतोथ पपाताथ चतुष्कः पुष्कलैर्बलैः । साहायकागतं प्राक्स यं स्वं कंचिदमन्यत ||२८३०||
तस्योभयमुखस्यारिसैन्यस्याहेरिवेक्षणात् । न संरम्भैः[1] शिखण्डीव परं ताण्डवितोभवत् ||२८३१||
तौ व्यूहावथ पर्यायैर्मुखपृष्ठं प्रदर्शयन् । सोक्षिणोद्युधि मन्थाद्रिर्मथनेब्धितटाविव ||२८३२||
कीलनिश्चलयोर्भ्राम्यन्नसकृद्वान्तरे द्वयोः । कुविन्द इव ---[1] तुरंगमत्वरा[2]न्वितः ||२८३३||
भासः प्रत्यग्रहीत्तस्य तमेकपृतनारयम्[1] । एकतोम्भोभरं द्वीपस्येव कूलविलोद्गमः ||२८३४||
तेन वैरिचमूश्चक्रे लुलितायुधकुण्डला । क्रीडता चण्डवेगेन पुरुषायितुमक्षमा ||२८३५||
त्रासपाण्डून्द्विषां वक्त्रकुम्भान्स्वेदाम्भसाचितान् । स कुर्वन्भूभुजं[1] जाने भूयो राज्येभ्यषेचयत् ||२८३६||
स च पार्श्वीहरिश्चास्तामन्योन्यस्य क्षपाक्षणे । सज्जौ मान्त्रिकवेतालाविव रन्ध्रगवेषिणौ ||२८३७||
साहायकागतान्साक्षीकृत्य[1] क्ष्मापतिसैनिकान् । अन्येद्युः सोकरोच्छत्रुं वनमार्गावगाहिनम् ||२८३८||
पर्यस्तशौचान्संचिन्त्य त्रिल्लकादीनथाययौ । सज्ञपालस्तृतीयस्मिन्दिवसे रिल्हणान्तिकम् ||२८३९||

२८१३. 1) Should probably be रामुषे; cf. ii. 55.—2) Emended; A गर्जन्कुल्या°. २८१४. 1) Emended; A तस्कल्या°. २८१८. 1) Thus A; perhaps read with G (*sec. manu*) प्रजासृजभास्यं. २८१९. 1) Thus A; C ह्रीमभावाविशेषे. २८२०. 1) Emended; A °भोजनम्. २८२३. 1) Thus corr. by a later hand from A₁ वैहल्ये.—2) Conjectural reading; A वैकल्या°. २८२५. 1) Emended with C; A °प्रजाजाल°. २८३१. 1) Emended; A संरम्भे. २८३३. 1) Thus A; C supplements पूर्ण्योस्तुरंग°.—2) Emended; A °गमतुरान्वितः. २८३४. 1) Emended with C; A पुवनावयम्. २८३६. 1) Emended with C; A °भुजाम्. २८३८. 1) Emended; A साक्षीकृतक्ष्मा°.

नृपप्रतापग्लपितः स ताभ्यां पर्यशोष्यत । वनान्तः शुचिशुक्राभ्यां घुणक्षीण इव द्रुमः ॥२८४०॥ 2840

चितानल इवासारैर्युद्धैः शममनाश्रितः । उदयेन शनैर्निन्ये चतुष्कोपि मितोष्मताम् ॥२८४१॥

दारदं-बलं[1] दृप्यद्धेम[2]संनाहवाहिभिः । हयैरवरुरोहाद्रिकुहरादाहवोन्मुखम् ॥२८४२॥

तुरुष्कलोकेनाक्रान्तान्देशांस्तद्वशमीयुषः । शङ्कमानैर्जनैर्ज्ञाता कृत्स्ना म्लेच्छावृतेव भूः ॥२८४३॥

प्रयाणमात्रान्तरिते धन्ये द्वारपतावपि । साहसं निःसहायस्य तत्खड्गै[1]रग्रतोभवत् ॥२८४४॥

ज्वलत्कनकसंनाहं तत्सैन्यं स द्विषोरुधत् । कचज्ज्वालावलिं दावं सनिर्झर इवाचलः ॥२८४५॥ 2845

विधूय जयचन्द्रादीनग्रप्रस्थानरोधिनः । बलबाहुल्यदृप्तास्ते व्यगाहन्ताहवावनिम् ॥२८४६॥

तेषां हयसहस्राणि त्रिंशद्विंशच्चतुरंगमैः । रंहसा प्रतिजग्राह निजग्राह च गर्गजः ॥२८४७॥

तस्यासुहृद्भिर्ददृशे पौरुषं तदमानुषम् । एकैकस्याग्रतो यत्स वैश्वरूप्यमिवादधे ॥२८४८॥

अश्ववल्गाग्रविन्यस्तवक्त्रास्ते विद्रुताः क्षणात् । जगाहिरे कापुरुषा गिरीन्किंपुरुषा इव ॥२८४९॥

अभूमिज्ञतया शाद्याद्वेष जातः पराभवः । श्वस्तदस्मान्पुरस्कृत्य जयं प्रत्याहरिष्यथ ॥२८५०॥ 2850

इत्युक्ता राजवदनजयचन्द्रादिभिर्निशि । तथेति मिथ्याकथयन्दारदा विद्रवोन्मुखाः ॥२८५१॥ युग्मम् ॥

प्रवेश्य धन्यद्वारेशौ दूरं बलहरो बली । ऐच्छत्सन्नभिसंधातुं रुद्ध्वा पाश्चात्यपद्धतीः ॥२८५२॥

स्कन्धा[1]वारेण सार्धं च दरदां राजबीजिनम्[2] । विधातुं विदधे बुद्धिं तं ततस्तारमूलके ॥२८५३॥

चिकीर्षति ततस्तस्मिन्मत्तेष्वन्धेषु दस्युषु । उत्सेहे साल्हणिः कृत्स्नं राज्यं निश्चित्य[1] निर्जितम् ॥२८५४॥

जयाभावेप्यनन्तेदृक्सामन्तसहितस्ततः[1] । भव्योस्मि भवितेत्येवं विचिन्त्योत्सिषिचे च सः ॥२८५५॥ 2855

पद्मोन्माथाद्विरदरदनैरप्रियैः पद्मबन्धोरिन्दौ स्पर्धिन्युदयति वपुः खण्डशः स्वं भिद्येत ।

तापस्त्यज्येत च रुचिरता[1]भागिभिः सूर्यकान्तैर्भद्राभद्रं व्यसनसमये संभवेदप्रतर्क्यम् ॥२८५६॥

यो डामरतया भिक्षोः शश्वत्कृच्छ्रेप्युपेक्षणम् । टिक्कादीनां च कौटुम्ब्याद्भूभर्तुर्द्रोग्धृमूर्धनि ॥२८५७॥

अत्वन्यतयानन्यसामान्याश्चर्यवर्धनात् । ततः कृच्छ्रोपयोगाच्च विश्वासस्येव मूर्धनि ॥२८५८॥

तौ नागराजवदनौ व्यसनावसरे तदा । चित्रं स्वकार्यतात्पर्यादद्भुतादरतां गतौ ॥२८५९॥ तिलकम् ॥

स्वयं विधेयं नागोन्यकृतं तं वीक्ष्य विप्लवम् । अदूरमर्थमन्येन कृतं कविरिवाशुचत् ॥२८६०॥ 2860

क्ष्माभृद्विपक्षं स्वं पक्षीकर्तुं क्लृप्ताननं ततः । संत्यज्य[1] राजवदनं मां भजस्वेत्यभाषत ॥२८६१॥

संप्राप्तं वः प्रतीक्षध्वं[1] तेजो[2]बलहरात्मजम् । युग्याधिरूढं किं नारी[3]सेवतां यामिको यथा ॥२८६२॥

इति ते संदिशन्तं च व्यसहन्त विहाय तम् । कामधेनुसमं नागं छागाश्लेषाद्विधि- यत्[1] ॥२८६३॥

सर्वः स्वकार्यतात्पर्यात्प्रवर्तेत प्रियाप्रिये । स्नेहवैरेन्यदीये तु न किंचिदधिगच्छति ॥२८६४॥

ज्योतिस्तर्जितकान्ति दन्तयुगलं बाध्यं सुधादीधितेर्दानास्वादधिया प्रिया मधुलिहां कुम्भस्थली कुम्भिनः ।

वासस्वैषं[1] विरोधभाक्सरसिजस्येत्यत्र नेन्दो रतिस्तस्याप्यायकृतो हितोयमिति नाप्यस्य द्विरेफा द्विषः ॥२८६५॥ 2865

---

२८४२. [1]) Thus A; C तद्बलं.—[2]) Emended with C; A दृप्यद्धेम°. २८४४. [1]) Doubtful emendation of C; A तत्खाळ्गैरग्र°. २८५३. [1]) A स्कन्धा°.—[2]) Emended; A राजबीजिनाम्. २८५४. [1]) Emended with G (*sec. manu*); A निश्चितनि°. २८५५. [1]) Emended; A °सहितांस्ततः. २८५६. [1]) Emended; A रुचिरमाभा°. २८६१. [1]) Emended with C; A सात्याज्य. २८६२. [1]) Emended with C; A प्रतीक्ष्यध्वं.—[2]) Cf. भोजोनाम्ना बलहरात्संजातो viii. 2695 and note.—[3]) Thus A; perhaps read नाडांसे°. २८६३. [1]) The text of this verse is evidently corrupt; A as above. C reads व्यहसन् संविहाय तं । कामधेनुसमं नागं छागाश्लेषो विधिर्न यत्. २८६५. [1]) Doubtful; A वा-स्वैष; C सूरस्यैष.

प्रतिष्ठालोठनं कर्तुं ततो बलहरस्य सः । आजन्म वैरं संरेभे तेन भूभृद्धितेच्छया ॥२८६६॥
स तथा दारदान्भग्नानभिन्नो भूभुजैष वः । सभोजात्राजवदनो हन्यादित्यभ्यधान्निजैः ॥२८६७॥
दरद्राजानकानीतनेतारौ कम्पनापती । प्रख्यातक्षेमवदनमत्त— —[1]भिधावुभौ ॥२८६८॥
त्रस्यन्नोजसनामा च कोट्टेशो मन्त्रितं रहः । ब्रुवाणास्तद्व्यहस्यन्त भोजेनान्तरवेदिना ॥२८६९॥
स्फाटिकेनेव सैन्येन तेनाग्रे रुद्धमप्यथ । दिधक्षु[1] राजार्कमहो विड्डुसीहेन्[2]धनेपतत् ॥२८७०॥
पार्थिवानर्थदुश्चिन्तामययक्ष्मपरिक्षतः । स यत्कृष्णक्षपाक्षीणसोमसाम्यं समाययौ ॥२८७१॥
रोगग्रस्ते रणभ्रष्टे पृष्ठगोप्तरि भर्तरि । तथाभियोज्ये स्थाने च भयजर्जरतां गते ॥२८७२॥
आहारस्थं बलहरं विहाय निखिलास्ततः । पलायिषत[1] तेन्येद्युर्विगाह्य हरिभिर्गिरीन् ॥२८७३॥ युग्मम् ॥
दृष्ट्वा बहुमतं प्रातरागन्तारः पुनर्वयम् । कथयित्वेति संप्रार्थ्य साल्हणिं सह तेनयन् ॥२८७४॥
प्राक्पीतकोशो[1] वैवश्यात्स तेषामनुगोभवत् । भ्रष्टकार्यस्तु वैह्वल्यं श्वभ्रे मज्जन्निवादधे ॥२८७५॥
मुहुः सर्वशिरोद्रिक्त[1]रक्तपूर्णमिव ज्वलत्[2] । अवरोहदनच्छाम्बुसोपानाश्मनिभं मुहुः ॥२८७६॥
ज्ञातेन पतितेनेव मुहुर्व्योम्ना महीसमम् । व्रजतस्तस्य वैलक्ष्यादलक्ष्याक्षमभून्मुखम् ॥२८७७॥
दध्यौ च धिङ्गो ये शश्वत्प्रभावं वयमीदृशम् । राज्ञो दृष्ट्वाप्यनात्मज्ञा जानीमो मर्त्यधर्मताम् ॥२८७८॥
प्रतिभाप्रौढनिर्भाततत्त्वानां नान्यथा शिरः । महाकवीनामेतादृक्प्रतापानलवर्णने ॥२८७९॥
राज्ञः प्रतापशिखिनः कणाः क्षोणौ न सन्ति चेत् । तत्कस्माद्भयमायाताः पदन्यासेप्यधीरताम् ॥२८८०॥
अनेकशोङ्गैर्वीराणां पीतधाराम्बुडम्बरे । शोषः प्रादुष्कृतो न स्यात्तज्ज्वालासंज्वरं विना ॥२८८१॥
किमन्तरेण तद्धूममालान्ध्यं प्रोन्मिषद्दृशः । मार्गामार्गविभागस्य परिज्ञाने विमूढता ॥२८८२॥
मधुमत्यास्तटेन्यस्मिन्विवर्ज्य दरदः स्थितान् । वीचीजवनिकाच्छन्नः सोवाप्याथ तटेवसत् ॥२८८३॥
क्रमादुत्खातखेदस्तैर्नीत्वा स्वशिबिरा[1]न्तरम् । तत्रैष्यतेति संधातुं रोहद्रोहस्पृहा[2]तुरैः ॥२८८४॥
नृपं तेषां ह्यगण्यार्थवर्षिणं नयनैपुणात् । उपजीवितुमिच्छाभूत्तद्रक्षणवणिज्यया ॥२८८५॥
नानेहा विग्रहस्यायं प्रत्यासन्नो हिमागमः । मधुमासि विधास्यामः पुनराराब्धिमुत्तमाम् ॥२८८६॥
कालक्षेपेक्षमत्वं चेद्धुद्दराष्ट्राध्वनाधुना । त्वान्तर्निदध्मो बलिनस्त्रिलञ्जकस्योपवेशने ॥२८८७॥
राजानं राजवदनः श्रितस्तैरित्यसावतः । उत्कैष्यत स्वराष्ट्रान्तर्युक्त्या वन्दुं नराधमैः ॥२८८८॥
अपि राजपुरीयाणां कौटिल्यं तैर्हि जीयते । दैर्घ्यं निदाघघस्रा[1]णां वियोगदिवसैरिव ॥२८८९॥ तिलकम् ॥
तथा यातमुपालेभे दूतैर्बलहरोथ तम् । प्रहो निहितवांस्त्वस्मीति त्रोटितवटाकरः ॥२८९०॥
उत्साहादाहवस्थोपि स तथा गार्गिमं[1]भिमम् । आयान्तं च नृपानीकमुत्साहान्नं[2] व्यचिन्तयत् ॥२८९१॥
अकस्माद्विद्रुतदरद्राजभोजादिवार्तया । न व्यदीर्यत यद्धैर्यपर्याप्तिस्तत्किलाङ्कनम् ॥२८९२॥
आडम्बरालम्बनस्य भेदेप्यच्छिन्नविग्रहः । यदयुद्धोद्धतं सिध्येत्तत्कस्यामानुषं विना ॥२८९३॥

२८६८. [1]) Thus A; the *akshara* before the *lacuna* could be read also शु; C °वदनमधुभद्राभिधा°. २८७०. [1]) Emended with C; A दिदक्षु.—[2]) Emended; A विड्डुसूहेन्धने°. २८७३. [1]) Emended; A पलायिततेन्ये°. २८७५. [1]) A °कोर्षो°. २८७६. [1]) Doubtful emendation; A सर्वशिरोदृक्त°.—[2]) Emended; A °ज्वलन्. २८८४. [1]) A स्वशिविरा°.—[2]) Emended; A रोहद्रोहः स्पृहा°. २८८९. [1]) Emended; A °घस्राणां. २८९१. [1]) Emended with C; A गर्गिम°.—[2]) Doubtful emendation; A °कमु–हान्न; C °नीकं दृष्ट्वापि नव्य°.

[C. VIII. 2967



C. VIII. 2994]

कालानुरोधात्संधित्सू धन्यद्वाराधिपावथ । सोयोजयद्विलम्बेन भोजप्रत्यागमाशया ॥२८९४॥
ततोलंकारचक्रः स नेतुं साल्हणिमाययौ । ज्ञातेयाद्द्वारदानेत्य[1] प्रार्थिता परिपन्थिनीः ॥२८९५॥
बुद्ध्वा तदनुबन्धेपि द्रोहनिर्बन्धिनीः सभाः । अग्रहीन्मार्गसेत्वग्रे निधनाध्यवसायिताम् ॥२८९६॥
भृत्यैः सह युवप्रायैर्वीक्ष्य तं मर्तुमुद्यतम् । दरातुरं दरद्राजसैन्यं तद्दैन्यमाययौ ॥२८९७॥
व्यपोहन्ती बलहरी बाहुभिः कलहं सरित् । कल्लोलास्फालनोल्लापैर्निनिन्देव दरद्बलम् ॥२८९८॥
ह्रेपितः स्वावरोधैश्च सेर्ष्यैश्च म्लेच्छपार्थिवैः । सैन्यैः कदनभीतैश्च विड्डसीहोथ तं जहौ ॥२८९९॥
पुरःसरैर्भग्नसेतुपालैः पारं परं ततः । विद्राव्य तानि[1] स प्राप भिन्दंस्तूर्यरवैर्दिशः ॥२९००॥
असामर्थ्ये वरूथिन्याः[1] स्वस्य चार्थितसंधिना । आनीतो विड्डसीहेन दूतः प्रोक्तोथ भूपतेः ॥२९०१॥
अमानुषानुभावेन तावत्त्वत्स्वामिना[1] भवेत् । प्रातिसीमिकसामन्तबुद्ध्या स्पर्धास्तु धीवरः ॥२९०२॥
अश्रद्धेयानुसंधान एव यान्तौ[1] यमान्तिकम् । जयराजोस्मि वामुष्य प्रभावावेदकौ दिवि ॥२९०३॥
तेन दिव्यानुभावेन निर्जयोपि जयो मम । पान्थस्य कूलविभ्रंशात्तीर्थे पतनमुन्नतिः ॥२९०४॥
अथायातः पुरे स्थित्वा कंचित्कालं निजेविशत् । यमराष्ट्रमसत्कीर्तिलसद्वन्दनमालिकम्[1] ॥२९०५॥
अबुद्ध्वा भोजमायान्तं संधिं तत्रैव वासरे । सार्धं द्वारेशधन्याभ्यां स राजवदनोप्यगात् ॥२९०६॥
अश्वागतं तं व्यावृत्य षष्ठं प्रष्ठं मनस्विनाम् । आदाय तावथा[1]भ्यर्णे प्राविक्षातां क्ष्मापतेः ॥२९०७॥
अहंकाराद्विमोहाद्वाविमर्शेन[1] बहिष्कृतौ । उपेक्षामक्षते भोजे भजता[2] राजबीजिनि ॥२९०८॥
आहूतस्तु हठोत्कण्ठाभाजापि प्रभुणासकृत् । अनिःशेषीकृतारातिर्न व्यावर्तत रिल्हणः ॥२९०९॥
प्रभोः पुरस्तात्कार्यान्ते तेन स्थातुमशक्यत । प्रसादाकाङ्क्षिणा सूदेनेव भोक्तुं न हि क्वचित् ॥२९१०॥
द्विधा कृता येन युद्धे पृथ्वीहरसुतद्वयी । मगधेन्द्राकृतिर्भीमेनेव कार्याक्षमाभवत् ॥२९११॥
मातृकुक्षिमिव स्वोर्वीं तेनाजौ लोष्ठकः[1] कृतः । खाण्डवे खण्डितः सर्प इव गाण्डीविनाविशत् ॥२९१२॥
भजं[1]श्चतुष्कः संकोचं दुर्भेदं त्रिह्लकालयम् । स्वकायकर्परं दर्पोज्झितः कूर्म इवाविशत् ॥२९१३॥
निःशेषीकृतकार्यः स शौर्येणैव महीपतेः । पार्श्वं पादनखज्योतिःपट्टबन्धाप्तये ययौ ॥२९१४॥
प्रतापैर्नृपतेरित्थं विप्लवः शोषितोप्यभूत् । अमात्यमतिदोषेण भूयः प्रादुष्कृताङ्कुरः ॥२९१५॥
दण्डार्हो राजवदनो दानेनाप्यायितो यतः । निर्भयं भोजमायान्तं प्रतिजग्राह तं पुनः ॥२९१६॥
उत्कोचपरिणामात्तं सोथ स्थापयति स्म तम् । दिन्नाग्रामाभिधे स्थाने खाशकानां निवेशने ॥२९१७॥
इत्येनमब्रवीच्छ्वश्चेदायास्यो नानुगामिनः । मितानुयायी द्वारेशः प्रायास्यद्गोचरान्मम ॥२९१८॥
सोत्कम्पः साहसस्रोतःपा[1]तेनीयत नौरिव । त्रिह्लकेनापि स स्थैर्यं नीतिरज्जुप्रसारणात् ॥२९१९॥
व्यसनोल्लासवैवश्यं विशां पत्युर्व्यचिन्तयत् । येनाव्यवस्थाप्राथम्यं स जाल्मः पुनरग्रहीत् ॥२९२०॥
अलंकारादिभिः स्वास्थ्ये स्थाप्यमानोपि मन्त्रिभिः । अत्यजन्नैवं[1] कौटिल्यमजितात्मेवं[1] दुर्ग्रहम् ॥२९२१॥

२८९५. [1]) Emended; A °द्वारदावेत्य; the text is corrupt. २९००. [1]) Emended; A विद्रावितानि. २९०१. [1]) Emended; A वरूथिन्या. २९०२. [1]) Emended; A ताव–त्स्वामिना. २९०३. [1]) Emended with C; A यान्तो. २९०५. [1]) Emended; A °मालिकाम्. २९०७. [1]) The letter corresponding to थ cannot be read with certainty in A; C तावताभ्यर्णे. २९०८. [1]) A °विमर्षेण.—[2]) Emended; A भजते. २९१२. [1]) Comp. note to लोठनः viii. 2496. २९१३. [1]) Emended with C; A भजंश्च°. २९१९. [1]) Emended with C; A °स्रोतपाते°. २९२१. [1]) Emended; A अत्यजन्नेव and °जितात्मैव.

गदं वैद्य इवापाकं तमवज्ञाय पार्थिवः । पक्वगण्डानिवारेभे रिपून्पाटयितुं परान् ॥२९२२॥
आगन्तव्यं त्वया पश्चाद्यात्स्वस्मात्तु प्रकम्पताम् । भोजमुक्त्वेत्यलंकारचक्रोगाद्विल्वेोद्यतः[1] ॥२९२३॥
तं जयानन्दवाडाख्यो[1] दस्युरानन्दवाडजः[1] । अन्वयुर्विक्रमोदग्राः परेपि क्रमराज्यजाः ॥२९२४॥
अग्रस्थितो राजगृह्योलंकारः स्वल्पसैनिकः । वालुकासेतुकल्पस्तैर्जज्ञे[1] सिन्धुरयैरिव ॥२९२५॥
स तु रामचराद्या[1]जिक्षोभसंभावनां विशाम् । उदपादयदेकाकी कुर्वन्बहुभिराहवम् ॥२९२६॥
आपानरभसक्षुभ्यद्रक्षःसंभ्रमदक्षिणम् । रणं जगाम गञ्जात्वमञ्जसास्रपरिस्रुतः ॥२९२७॥
स तूलकूटमिव तत्कटकं विकटं द्विषाम् । किमन्यत्प्रैरयत्क्वापि प्रभञ्जन इवाञ्जसा ॥२९२८॥
ग्रासाय गृध्रकङ्कादिपत्त्रि[1]व्रातस्य तत्यजे । आनन्दवाड[2]सूनुः स हत्वा तेनेषुणा रणे ॥२९२९॥
भोजस्योत्थातुकामस्य जिघृक्षोः क्ष्माभुजश्च तत् । पङ्कप्रधावत्कृकरव्याधन्यायो व्यवर्धत ॥२९३०॥
अनुड्डयनसामर्थ्यः श्राम्यति क्रकरो यथा । धावन्पङ्के पतन्व्याधोप्यनुधावत्यथान्वहम् ॥२९३१॥
प्रसङ्गे साहसस्यैवं भोजः क्लैब्यमगात्सदा । तं प्राप्तुं[1]मिच्छुर्भूपोपि मतिमोहं मुहुर्मुहुः ॥२९३२॥ युग्मम् ॥
दिन्नाग्रामस्थिते भोजे स राजवदनोप्यगात् । पुनः किं चौरचण्डालाः श्रेयसीत्युक्तिमीशितुः ॥२९३३॥
डामरा भग्नसंघाता भूयः पूर्वाधिका ततः । कन्थां ते ग्रन्थयामासुर्मुहुर्याः शौर्यशालिनः ॥२९३४॥
ते द्वारपतिमायातं सोढुं शेकुर्न केवलम् । अशक्यैराहवैर्यावत्तात्पर्यादुदवेजयन् ॥२९३५॥
तेषां त्राणार्थमन्येषामुत्थानार्थमथाययौ । कृष्टोलंकारचक्रेण नीविं दत्त्वा स साल्हणिः ॥२९३६॥
तेषां परेद्युः पार्श्वं स यियासुरसकृद्यदा । ह्रायाश्रमं श्रान्तसैन्यो द्वारेशोबुद्ध तं तदा ॥२९३७॥
अजानन्निव तेषां स व्याजसंधिं निबद्धवान् । मिषात्कुतोप्यगात्तिर्यक्स्थितं सत्त्वा[1]रमूलकम् ॥२९३८॥
तस्मिंस्तत्र स्थिते दूरात्कुतस्त्यामपि पूत्कृतिम् । श्रुत्वा भोजोवदत्सायं किमपि व्याकुलीभवन् ॥२९३९॥
निर्जैर्विहस्यमानोपि त्रासात्तस्मादहेतुकात् । व्यरंसीत्संभ्रमान्नासौ चक्रे सज्जांस्तु वाजिनः ॥२९४०॥
त्रस्तोलंकारचक्रोथ दशग्राम्यग्रतो द्रुतम् । क्व राजपुत्र इत्येवं कथयित्वा पलायितः ॥२९४१॥
उदतिष्ठत्ततो ग्राममध्यात्तूर्यध्वनिर्महान् । आस्कन्दावेदकः सेनानिनादश्च क्षपामुखे ॥२९४२॥
अलक्षितो ध्वान्तमध्ये भेजे भोजः पलायनम् । श्वः कर्तव्येष्वलंकारचक्रो युद्धाय संदधे ॥२९४३॥
दत्तो द्वाराधिपेनाग्निर्गिरिवर्त्म प्रकाशयन् । ध्वान्तध्वस्तात्मनां[1] तेषां तदाभूदुपकारकः ॥२९४४॥
द्वाराधिपस्य क्षाम्यन्तः[1] संधिं भोजप्रतीक्षया । श्रुत्वा तमथ वृत्तान्तं भङ्क्त्वा ते डामरा ययुः ॥२९४५॥
असंत्यजन्नपत्यादिबन्धं धीरोचलाश्रयात् । आजिं स भोजोलंकारचक्रेणामङ्गलावहम् ॥२९४६॥
. . . . . . . . . . . . . . . . . . . . . . . . .[1] । भोजस्तत्राप्यभूत्तर्षान्नाहारादिसुखान्वितः ॥२९४७॥
बाणाग्निजस्त्रिपुरनिर्दहने प्रतापः पाथोनिधेः प्रमथने वडवाग्निजन्मा ।
आसाद्य मन्दरनगेन समागमं हि न क्वापि पन्नगपतेः सुखसख्यमासीत् ॥२९४८॥

२९२३. [1]) Emended with C; A °चक्रेगाद्वि°. २९२४. [1]) A °वाळाख्यो and °वाळजः. २९२५. [1]) Emended with G (*sec. manu*); A °कल्पस्तं जज्ञे. २९२६. [1]) Conjectural reading; A राम–राद्या°; C शत्रुभिराद्या°. २९२९. [1]) Emended; A °पतित्रातस्य; C °पातित्रा°.—[2]) A आनन्दवाळ°. २९३२. [1]) Emended; A तत्प्राप्तु°. २९३८. [1]) Emended; A सन्ता°. २९४४. [1]) Emended; A °त्मना. २९४५. [1]) Emended with C; A °क्षम्यन्तः. २९४७. [1]) Two or more *pádas* seem to be lost here; A does not indicate the *lacuna*; C supplements संरम्भात्कर्त्तुमारेभे सामर्थ्यान्न च चक्षमे.

क्षुत्पिपासाश्रमं हन्तुं प्राप्तः स्वविषयावनौ । अलंकारात्मजैर्भूयो बन्द्धुं भोजोभ्यलभ्यत ॥२९४९॥

पितुर्मतेन बुद्ध्या वा स्वया तत्तद्विधित्सतः । सोभिसंधाय निर्यातः प्रापाथ विषयान्तरम् ॥२९५०॥

ततो बलहरेणैव कृत्यं निश्चित्य कार्यवित् । अनास्थोन्यलवन्येषु दिन्नाग्रामं पुनर्ययौ ॥२९५१॥

द्वाराधिपोहितोद्धारधीरोप्यत्रान्तरेक्षमः । चक्षूरोगेण भग्नाभियोगोकस्माद्व्यधीयत ॥२९५२॥

भोजाय दातुमिच्छद्यो डामरस्ते स्तुते ददौ । पर्माण्डये गुल्हणाय राजजाय च निर्जितः ॥२९५३॥

रोगोच्चण्डतया दण्डप्रयोगावसरे कृते । तत्र साम प्रयुज्यैव द्वारेशो विवशोविशत् ॥२९५४॥

अभियोगक्षये तस्मिन्ययौ भारसहः क्षयम् । दुर्नामकामयक्षामः षष्ठचन्द्रोपि गर्गजः ॥२९५५॥

तत्रामयाविन्येत्रात्तोद्रेकौ तदनुजौ निजौ[1] । चक्राते वसुधां दुःस्थामास्कन्दाद्यैरुपद्रवैः ॥२९५६॥

त्रिल्लकः प्रबलैरन्यैः सहाभेदं प्रवर्धयन् । नामहीद्विग्रहैकाग्रः सान्त्वनामपि भूपतेः ॥२९५७॥

षष्ठे निष्ठां गते रोगमग्ने द्वारपतावपि । नियुक्तः क्ष्माभुजा धन्यो[1] निरगात्तारमूलकम् ॥२९५८॥

भोजश्च्युतोमुतोन्येषां बलिनां गोचरे पतेत् । प्राप्तप्रतिष्ठो निस्तीर्णो देशाद्वासाध्यतां व्रजेत् ॥२९५९॥

इति संचिन्त्य सामाद्यैरुपायैस्तं जिघृक्षुणा । क्ष्माभुजामन्दसंरम्भो विदधे सोभियोगभाक् ॥२९६०॥ युग्मम् ॥

अज्ञातोदर्कवैरम्या दुर्नीतिः सा महीभुजम्[1] । व्यावृत्याबाधताच्छिन्नपुच्छाक्रुष्टेव पन्नगी ॥२९६१॥

बलिनं राजवदनं नृपं चावेत्य निर्बलम् । आभ्यन्तराश्च बाह्याश्च विक्रियां यत्क्रमाद्ययुः ॥२९६२॥

छिद्रान्तराणि सुलभानि सदैव हन्त पातालरन्ध्रसरणेरिव दण्डनीतेः ।

बहीभवन्प्रसरमन्तरसंप्रविष्टो यात्यप्रतर्क्यनियमात्पतनं भजेद्वा ॥२९६३॥

भोजत्यागोर्थितो राज्ञा क्षीणार्थोसौ व्रजेदितः । उक्त्वेत्यमुं बलहरस्तस्य वृत्तिमकारयत् ॥२९६४॥

तां लब्धप्रसरां मायां राजपक्षे विलोक्य सः । युक्त्यन्तराणि संलेभे प्रयोक्तुं नीतिकौशलात् ॥२९६५॥

संधिं पदे पदे बद्ध्वा सार्धं बलहरादिभिः । कुर्वन्गतागतं धन्यो जनस्यावाप हास्यताम् ॥२९६६॥

शश्वद्यो[1]वर्तमानस्य राजकार्यस्य नावधिम् । अरघट्टघटीयन्त्रगुणस्येवाससाद सः ॥२९६७॥

तस्य चक्र इवोद्भ्रान्ते कर्तव्ये तैक्ष्ण्यभागपि । भेत्तुं प्ररोढुं वाप्यासीन्नयो बाण इवाक्षमः ॥२९६८॥

नीतराजग्रहो व्यग्रः शेषस्यैकस्य विग्रहे । चतुरङ्ग इव क्रीडन्विवशोभूद्दिशां पतिः ॥२९६९॥

बद्धलक्ष्यः प्रदानार्थं ततश्च छद्मना परान् । भञ्जतो वाजिपत्त्यादि नाप्यासीन्नाप्यजीगणत् ॥२९७०॥

दस्युषु स्यूत[1]सङ्केषु शीतापायप्रतीक्षिषु । नागाद्बलहरः स्वेषामुन्मूलनमशङ्कत ॥२९७१॥

सामर्थ्याशिथिलामित्रभावे सूत्रितविप्रिये । तस्मिन्धावति धन्ये च शश्वत्सोवेपताकुलः ॥२९७२॥

संमन्त्र्य सार्धं भोजेन धन्यं समदिशत्ततः । बद्ध्वार्पयत नागं मे भोजं दास्यामि वस्ततः ॥२९७३॥

भूरिकार्यकृतं स्वस्य बन्धनार्थावहां[1] रिपोः । धन्यो व्यसनवैवश्याद्धियं नाबुद्ध तस्य ताम् ॥२९७४॥

पार्थिवाः स्वार्थसंसिद्धित्वराविरतसत्त्वया । धियाविशुद्धं यत्किंचित्कुर्वन्तीति न नूतनम् ॥२९७५॥

काकुत्स्थो[1]पि प्रियाप्रार्थी व्यग्रः सुग्रीवसंग्रहे । वीरोविधेयं स्वार्थान्ध्याद्वधं व्यधित वालिनः ॥२९७६॥

---

२९४९. 1) A बन्धुं. २९५६. 1) Emended; A तमनुजं निजम्; cf. षष्ठस्य जयचन्द्रश्च श्रीचन्द्रश्चानुजौ viii. 2753. २९५८. 1) Emended; A धन्ये. २९६१. 1) Emended; A °भुजाम्. २९६७. 1) Emended; A °ह्यवर्त°. २९७१. 1) $A_1$ has written first च्यूतसङ्केषु and subsequently indicated the reading स्यूत°. २९७४. 1) Emended; A °वहं. २९७६. 1) Emended with C; A काकुस्थोपि.

संहत्य सत्यनित्यत्वं राज्यगर्वाविशुद्धधीः । आचार्यं पाण्डवो राजा धर्मनिघ्नोऽप्यघातयत् ॥२९७७॥
आ भिक्षुविग्रहान्नित्यद्रोग्धुर्नागस्य विग्रहः । स्वार्थापेक्षी तटस्थस्य तत्कालं न विगर्हितः ॥२९७८॥
अगृहीत्वा तु भूभर्त्रा कंचिद्भोजार्पणे पणम् । सोवाष्टम्भीत्यभूत्तस्मिन्मन्युर्मतिमतां मनाक् ॥२९७९॥
यथा तत्कृत्यमायत्यां हितं जातं तथैव चेत् । विचार्याकारि राज्ञा तच्छेमुषीयममानुषी ॥२९८०॥
विभिन्न इव भोजस्तु नागं समदिशद्यथा । दित्सुर्बलहरो[1] राज्ञे त्वद्दर्पणपणेन माम् ॥२९८१॥
बन्धमश्रद्दधानोऽस्य राज्ञस्त्रासादसौ श्रयेत् । स विदन्नथ माध्यस्थ्यमिति तं हि तथावदत् ॥२९८२॥
षष्ठचन्द्रे गते निष्ठां जयचन्द्रेण पार्थिवः । संगृहीतेन तं नागं पार्श्वं प्रावेशयत्ततः ॥२९८३॥
पक्षीकृतः क्ष्माभुजायं हन्यादस्मान्भयादिति । चलन्तमपि तं भोजस्तन्मन्त्रिणम[1]बोधयत् ॥२९८४॥
तथेति जानन्नपि तं कृष्टोऽस्म्येतै[1]रनीशताम् । यातः किमपि हन्तेति दूतैर्नागोऽप्यभाषत ॥२९८५॥
नियतं नियतिस्रोतोगर्भे जन्तोर्निमज्जतः । कथ्यमानं तटस्थेन श्रोतुं न श्रवणौ क्षमौ ॥२९८६॥
नागे बद्धे तत्कुटुम्बैर्भीतैरेत्य समाश्रितः । मायाशाली बलहरो दुर्दर्शः समपद्यत ॥२९८७॥
भोजनि[1]ष्क्रयविक्रेयं तमादाय ययौ ततः । रिल्हणेन समं धन्यो धावन्बलहरान्ति[2]कम् ॥२९८८॥
सान्तर्हासो मोहयत्तौ[1] प्राङ्नागं दत्त मे ततः । भोजं दास्यामि व इति ब्रुवन्भ्रामयति स्म सः ॥२९८९॥
बद्धमूलतया दूरं दुर्धर्षो योद्धुमागतम् । सर्वं तच्च तयोः सैन्यं निन्ये कृत्यविधेयताम् ॥२९९०॥
वर्षयुद्धापकर्षादि-खिन्नौ[1] तौ ततोऽभ्यधात्[2] । इतोपस्तृतयोः कुर्यां युवयोर्मतमित्यसौ ॥२९९१॥
एकप्रयाणान्तरिते स्थितयोः पथि चाकरोत् । कार्यान्तःपातवैवश्ये तयोर्मतिविमोहनम् ॥२९९२॥
काचिद्बलहरस्यासीत्पर्याप्तिर्धैर्यसत्त्वयोः । निश्चोद्याद्यतने काले वीराणां विरलैव या ॥२९९३॥
तथा हारितमार्गाय साहसात्पार्श्वमीयुषे । द्रुह्यति स्म न धन्याय लोभाद्भोजाय नापि यः ॥२९९४॥
मतिमोहेन[1] नागं चेद्दद्युर्मे सचिवास्ततः । कुर्यां तं स्वपदेऽभ्यर्थ्य चकारेति च चेतसि ॥२९९५॥
नागासांनिध्यलब्धर्द्धिदार्ढ्यार्थं गूढवैकृतः । भ्रातृव्योऽपातयन्नागं धन्याद्यैर्लोष्ठकाभिधः ॥२९९६॥
सचिवैर्निहते नागे निर्हेत्वहितमोहितैः । दुर्मन्त्रितं नरपतेः स्वैः परैश्च व्यगर्ह्यत ॥२९९७॥
स्वजातीयवधक्रोधाद्विरुद्धैः सर्वडामरैः । नागानुगैश्चाश्रितोऽभूत्ततो बलहरो बली ॥२९९८॥
देहिनो व्यसनापातवैवश्याद्भ्रमतोऽपथि । अकार्यं कुर्वतः कार्यं सिद्धः संसाधयेद्विधिः ॥२९९९॥
उद्यद्दुःसहवित्तत्तानवतया बद्धावधाने मनस्युन्मार्गभ्रमणेवशस्य रभसाच्छ्वभ्रे परिभ्राम्यतः ।
अन्योपाहितकोशपृष्ठलुठनात्संदर्शिताङ्कक्षतेर्जन्तोर्हन्त तनोति दुर्गतिशमं रम्यानुलोम्यो विधिः ॥३०००॥
तथा निरनुसंधानं नागं धीसचिवैर्हतम् । नाबुद्ध भोजः संजातत्रासस्त्वेवं व्यकल्पयत् ॥३००१॥
लब्धवर्णस्य नावर्णावहं कर्मेदमीशितुः । अलब्धपणबन्धस्य वाञ्छिताप्त्यै विशङ्क्यते ॥३००२॥
[1]यश्च युद्धमिति व्यग्रं[2] हर्षादाद्यामवापि यः । भोजमन्यकरस्थोऽयमशक्यो ह्यन्यथा मम ॥३००३॥

२९७९. [1]) Emended; A सोवष्टम्भी°. २९८१. [1]) Emended; A °बलहरे. २९८४. [1]) Thus A; perhaps read °न्मन्त्रितमबो°. २९८५ [1]) Emended; A °स्मीत्येतैर°. २९८८. [1]) Emended with C; A भोजोनि°.—[2]) Emended with C; A °न्बलहरोन्तिकम्. २९८९. [1]) Emended; A मोहयन्तौ. २९९१. [1]) Thus A; C °कर्षादिसङ्खिन्नौ.—[2]) Thus corr. by $A_1$ from °व्यधात्. २९९५. [1]) $A_1$ has written मतिमोहे; न supplied apparently by $A_2$. ३००३. [1]) The text of this verse is evidently corrupt; emendation doubtful.—[2]) Perhaps read युद्धमतिव्यग्रं.

उक्तेति मोहयन्धन्यमुख्या – – स्मि[1] संदिशेत्[2] । इति मां राजवदनः स्थितस्तन्नूनमन्यथा ॥३००४॥युग्मम्॥

आ भिक्षुविप्लवाद्द्रोहसुभिक्षस्यानुबन्धिनः । किं राजवदनोप्येष लोभात्संभाव्यते न भूः ॥३००५॥

अथाविशङ्किनस्त्रासव्युदासायास्य खाशकाः । रक्तार्द्रकृत्तिस्तस्ताङ्घ्रि कोशपानं प्रचक्रिरे ॥३००६॥

प्रादुष्कृतभियः क्षिप्तरक्षिणोमुष्य तिष्ठतः । विश्वासार्थं बलहरो विरलः पार्श्वमाययौ ॥३००७॥

अमात्यमतिजाड्येन नष्टे कृत्येथ कृत्यवित् । स्वयमुत्तम्भने नीतः संरंभसंभ्रमो नृपः ॥३००८॥

चैत्रः पादपमण्डलस्य तटिनीतोयस्य वर्षागमः सत्कारो गुणगौरवस्य नयनप्रेम्णोन्तिकासेवनम् ।
ऐश्वर्यस्य महोद्यमो जयविधेर्गाढाविषादग्रहः कर्तव्यस्य च सिंहदेवनृपतिर्म्लानौ न तत्त्वावहः ॥३००९॥

प्रवाहेणेव कृत्यस्य हठेन हरतोन्तरे । प्रातिलोम्यं श्रितवता पारं गन्तुं न पार्यते ॥३०१०॥

अतो धूर्तो नृपो मुग्ध इति ज्ञातोरिभिर्मुधा । मौग्ध्यं प्रदर्शयंस्तेषां यतते स्माभिसंधये ॥३०११॥

स हि यत्तत्प्रदानेन भजन्भोजान्तिकस्थितीन् । तस्याविश्वासपात्रत्वं मन्त्रस्तस्याभितोनयत् ॥३०१२॥

गन्धेन वासितोत्सङ्गाः कुरङ्गार्यङ्गजन्मना । प्रज्वलन्त्यो विभाव्यन्ते तटिन्योपि कवाटिभिः ॥३०१३॥

नीडस्यान्तः सरन्ध्रस्य सर्वतो हि भयं स्पृशन् । जाले द्वाराग्रबद्धे च निर्गमे पतनं विदन् ॥३०१४॥

ताम्येद्यथा खगो भोजस्तथान्तःस्थोऽत्रविश्वसन् । बहिर्भूपेन रुद्धाध्वा प्रस्थानेप्यभजद्भयम् ॥३०१५॥युग्मम्॥

तदा स दौस्थ्यातिथितां प्राप्तः प्रैक्षत न क्षणम् । मनोविनोदनं किंचित्कर्तव्यं लोकद्वयोचितम् ॥३०१६॥

उमाभिषङ्गमनुषङ्गि परस्य दुःखं हन्तात्मवथं व्यथयति प्रसभार्द्रभावम् ।
बद्धः सरोजकुहरे विरहार्तनादैश्चक्राभिधस्य मधुपोधिकमेति दैन्यम् ॥३०१७॥

रणे पूर्णव्रणाश्यानशोणितो लूनकुन्तलः । फेणोद्गार्याननः क्रन्दंस्तेनैकः प्रैक्ष्यत द्विजः ॥३०१८॥

स पृष्टो विप्लुतैर्नीतं[1] सर्वस्वं विक्षतं तथा । स्वं डामरैर्निवेद्यैनं निनिन्द त्रातुमक्षमम् ॥३०१९॥

त्वद्दौस्थ्यार्तमनास्तस्य दुःखेन व्यथितोन्वहम् । घट्टितार्द्रव्रण इव प्राह स्मेति स सान्त्वयन् ॥३०२०॥

गर्हार्होस्मि न ते ब्रह्मन्योनुग्राह्योहमीदृशः । विषमे वर्तमानश्चेत्यथ सोपि तमब्रवीत् ॥३०२१॥

दुर्मदेनामुना ब्रूहि कोर्थः पार्थिवपुत्र ते । सारासार[1]विदो यूनः कुले जातस्य मानिनः ॥३०२२॥

प्राणान्संदेहमारोप्य प्रणम्य प्राकृताशयान् । पीडयित्वा विशः क्लेशैः कार्यं किमिव पश्यसि ॥३०२३॥

यश्च ते प्रतिभात्येव जेतव्यो विदितो न किम् । अग्निशौचः स सारङ्गः परशौर्याग्निमज्जने ॥३०२४॥

यत्र शस्त्रशलाकापि विकला तद्विधीयते । इन्दीवरदलद्रोण्या घटनं स्फाटिकाश्मनः ॥३०२५॥

पृथ्वीहरावतारादिप्रत्यनीकिजितः परे । के नामास्य न संघर्षे क्षुद्रप्राया दरिद्रति ॥३०२६॥

किं दृप्या[1] एव कुत्रापि कृत्यं द्वैराज्यजीविनाम् । भृत्याशयाः फणिग्राहिगृहीता इव भोगिनः ॥३०२७॥

जातैः क्ष्मातलयोद्गृहे फणिकुले धिग्भोगि[1]डिम्बैर्मुदा[2] व्यालग्राहिविकासितास्यकुहरैर्ग्रासस्य[3] हा गृह्यते ।
एतान्भिक्षयितुं न तु प्रथयितुं ते जीविकार्थे जनत्रासार्थं ननु कारयन्ति हि दृतेर्निर्मज्जनोन्मज्जनम् ॥३०२८॥

इत्युक्तवन्तं तं सान्त्वयित्वा भोजो व्यसर्जयत् । तदेवं[1] चाशु व्याकोशविवेकः समपद्यत ॥३०२९॥

३००४. 1) Thus A; C °मुख्यान्मुग्धोऽस्मि सन्दिशेत्.—2) Perhaps read संविशन्. ३०१९. 1) Emended with C; A °र्नीतः. ३०२२. 1) सारसा no longer legible in A; found in R G C. ३०२७. 1) Emended; A दृप्य. ३०२८. 1) Emended with G (*sec. manu*); A °कुलैर्धिर्भोगि°.—2) Emended; A मुधा.—3) Emended with G (*sec. manu*); A °कासितस्य कुहरैर्ग्रामस्य. ३०२९. 1) Emended; A तदेव.

भव्यात्मत्वं प्रशममहिमोल्लासने हन्त हेतुर्भावानां तु ध्रुवमपरथा मार्दवं क्रूरता वा |
स्पृष्टं[1] पादैरमृतमहसः स्यात्कठोरं हिमांशोर्याति ग्रावाप्यहह रभसादार्द्रतां चन्द्रकान्तः ||३०३०||
राजन्याभिजने जातोप्यलज्जत्वमशिक्षितः | सोन्तरं स्वस्य राज्ञश्च मुहुर्महदचिन्तयत् ||३०३१||
गुणैः शौर्यनयत्यागसत्यसत्त्वादिभिः प्रभोः | पूर्वेप्युर्वीभुजः खर्वाः क्षुद्राः स्पर्धासु के वयम् ||३०३२||
तस्य प्रभावदीप्तेपि समये क्षान्तिशीतला | शक्तिः क्षयजडत्वेपि मुग्धानां नो महोष्मता ||३०३३||
क्ष्वेडाग्नितापनिविडोरगसंगमेपि तुङ्गस्य चन्दनतरोरपि शीतलत्वम् |
काले हिमर्तुपरिपिञ्जरसंज्वरेपि निम्नस्य कूपकुहरस्य महोष्मयोगः ||३०३४||
कुतोपि पर्ययात्कार्यं क्षुप्तं नृपममुं विना | प्राप्य कस्य पुनः प्राप्यमध्यभुद्ध्या न बाधितम्[1] ||३०३५||
भ्रष्टं निर्झरवारि शुभ्रमचलैः स्वीयेन भूयः क्वचिल्लभ्यं लभ्यमथाभ्रतः कलुषतादुष्टं प्रकृष्टं न तत् |
निर्यन्निर्भरनिम्नगाम्बु नभसः प्राप्येत नित्यं दधत्प्रालेयत्वमुपेत्य शुद्धिमधिकां नाद्रेर्हिमाद्रेर्नगैः ||३०३६||
तदर्थमेव प्रथितो योनर्थोप्रथितात्मनः | स तेन स्वस्थतां नेतुमर्थितो न स्पृशेद्रुषम् ||३०३७||
शोषाय योस्य दववह्निमदादमुष्मिन्स्वस्थे स तेन शिखिना ग्लपितः समीपम् |
अभ्येति चन्दनतरोर्दववह्निदाहशान्त्यै यदि प्रियकृदेष न तस्य किं स्यात् ||३०३८||
समग्रं[1]दुर्गतावर्हदपकर्तैव भूपतिम् | लोकनाथं तमुद्धर्तुं धीरं धन्यः पुनः पुनः ||३०३९||
राजप्रसादनोपायान्वेषी बलहरान्तिकम् | राजदूतमथायान्तमेकदैकं[1] व्यलोकयत् ||३०४०||
दरदेशं व्रजन्दृष्टवान्प्राक्प्रज्ञात[1]मन्तिकम् | स नमन्तं तमानीय ततः स्मेर इवाब्रवीत् ||३०४१||
राज्ञः किमन्यसंधानैः संधिं बध्नां[1]स्त्वसौ मया | प्राज्ञैर्हि भिषजा भोज्यमातुराय समर्प्यते ||३०४२||
तत्तस्याश्रद्दधानस्य नर्मस्मेरस्य जानतः | प्रत्ययोत्पादनं तैस्तैरालापैः किंचन व्यधात् ||३०४३||
निर्दम्भभाषितैरूढविस्रम्भः स कथान्तरे | अथाभिगम्य राजानं स्तुवन्भोजमभाषत ||३०४४||
राजपुत्राभिजातस्य पादच्छायास्य लभ्यते | स्वर्णाद्रेरिव कल्याणप्रकृतेः पुण्यभागिभिः ||३०४५||
अनुवृत्त्यातिमृद्व्यापि तस्यापोह्येत[1] वैकृतम् | ज्योत्स्नयेव शरद्भानुपरितापौष्ण्यमम्भसः ||३०४६||
अपि स्मरसि चार[1]त्वे नियुक्तोस्मि महीभुजा | विशतस्ते दरद्देशमभूवं पुरतः पुरा ||३०४७||
ततो निवृत्तो वृत्तान्तं मुख्यमाख्याय तावकम् | कालं क्षेप्तुं कथां[1] दैर्घ्यं नयन्मध्ये तमभ्यधाम्[2] ||३०४८||
क्षुत्तृ[1]डध्वक्रमभ्रान्तान्देव त्वामवलोक्य माम् | निन्दतः स्वानुगान्भोजो[2] निर्भर्त्स्यैवं तदाब्रवीत् ||३०४९||
स दैवतमिवास्माकं कुलालंकरणं प्रभोः | वयं त्वसुकृतो यस्य नामुमः पादसेवनम् ||३०५०||
गण्याः पर्यन्तनिःसारास्तत्संबन्धादिमे वयम् | चन्दनभ्रान्तिकृत्काष्ठं यत्स्यात्तद्गन्धवासितम् ||३०५१||
तच्छ्रुत्वैव दयार्द्रत्वं त्वयि यातः स लक्षितः | पृच्छन्पितेव किं गर्भरूपो वक्तीति मां पुनः ||३०५२||
तन्निशम्यैव भोजस्य द्रवीभूतमभून्मनः | सोन्तर्बाष्पोप्यं[1]पश्यत्तं सान्त्वयन्तमिवाग्रतः ||३०५३||

३०३०. [1]) Emended with C; A स्पष्टं. ३०३५. [1]) Emended; A बाधितुम्. ३०३९. [1]) Emended with G (*sec. manu*); A समग्रोदु°. ३०४०. [1]) Emended with G (*sec. manu*); A °मेकमेकं. ३०४१. [1]) Emended; A °न्दृष्टवाक्प्रज्ञान्तम°; C °वाक्प्रज्ञातुम°. ३०४२. [1]) Emended with C; A सन्धिबन्धास्त्वसौ. ३०४६. [1]) Emended; A °पोह्यत. ३०४७. [1]) Emended; A चारुत्वे. ३०४८. [1]) Emended; A कथादैर्घ्य.—[2]) Emended; A तमभ्यधात्. ३०४९. [1]) Doubtful emendation of C; A क्षुन्वक्रमध्व°.—[2]) Emended; A भोजं. ३०५३. [1]) प्य omitted in A; supplied with C.

सुव्यक्तमात्रासंबोधमुग्धत्वेन विहीयते । तत्त्वविक्कारणाज्ञा[1]नादन्तःकरणवेदनम् ||३०५४||
अश्रद्दधानस्तामिच्छां भोजस्याकृच्छ्रवर्तिनः । प्रतिदूतीकृते तस्मिन्धन्यो न प्रत्ययं दधे ||३०५५||
देविताभूद्यथा नागवृत्तान्ते न भवेत्तथा । महीभुजं मोहयितुं मायया दीव्यते मया ||३०५६||
मा भूद्भिन्नोयमित्येवमुक्त्वा बलहरं रहः । व्याजार्जवेन भोजस्तु संधिबन्धाय तत्वरे ||३०५७||युग्मम्||
तत्कालयोग्यसाचिव्यश्चक्रिकाचतुरस्तथा । तेनाशु दैशिकापत्यमेको दूत्ये न्ययोज्यत ||३०५८||
स बालकतया नित्यस्वतन्त्रश्चक्रिकां स्वयम् । आचरेदिति नाशङ्कां भोजे बलहरोभजत् ||३०५९||
पार्थिवः प्रार्थितः संधिदूतमाप्तं प्रतीक्षते । प्रत्यागतेन तेनेति ततो भोजोभ्यधीयत ||३०६०||
तत्रासंनिहितान्याप्तः स्त्रीत्वादप्रतिभामपि । धात्रीं नोनाभिधानां स्वां राज्ञोभ्यर्णे व्यसर्जयत् ||३०६१||
मृतेन पित्रा मात्रा च हीनं[1] दमनुयातया । मातृकृत्यं यथात्रासीच्छैशवे माननीयया ||३०६२||
पत्युः प्रीत्यै विसंधानध्वंसाकल्पादिकल्पनात् । सखीकृत्यं सपत्नीनां यया शान्तेर्ष्यया कृतम् ||३०६३||
ह्रासोल्लासे[1] हि कार्याणां योग्यकृत्याप्रनिश्चयात् । न यां सुक्षत्रियां क्ष्माभृत्संभ्रान्तां जातु वीक्षते ||३०६४||
श्वशुरेण प्रजाभिश्च कृतं राज्ञोभिषेचने । आशास्यं यां[1] महादेवीपट्टबन्धं समादधे ||३०६५||
अपत्यप्रियताभोगलोभभर्तृप्रसादनैः । प्रेर्यमाणाप्यकार्येषु बुद्धिर्यस्या न धावति ||३०६६||
स्वत्रान्यत्र च संधाने जाते भर्तुरभिन्नधीः । भाग्योदयेष्वनुत्सिक्ता या चाखण्डितसद्व्रता ||३०६७||
आ बाल्याद्भावविद्भर्तुः कुसृत्यनुसृतौ न सा । कार्यमध्यं विगाहेत मानाभिजनरक्षिणी ||३०६८||
इति कल्हणिकादेव्या माध्यस्थ्ये स धियं व्यधात् । प्रस्थानपदयात्रां सा सीमान्तप्रापणावधि ||३०६९||कुलकम्||
गुप्त्यै लग्नकवित्तादि परार्ध्यं मध्यपातिनाम्[1] । पाथेयार्थं पृथुस्वर्णभाजि कोशादि चात्मनः ||३०७०||
प्रापयामास किं चाष्टौ प्रकृष्टाभिजनोद्भवान् । पालनार्थं राजपुत्रान्देवी यत्स[2]र्वसंविदम् ||३०७१||युगलकम्||
वाचकं तद्गृहीत्वा तामागमत्पार्थिवेन सः । धात्रीं स कारयन्धन्यो बद्धेच्छासिद्धिनिश्चयाम् ||३०७२||
विहितप्रत्ययस्तस्याः सद्यः स्यात्तु महीपतिः । राजधर्मस्य च वसन्नासीद्दोलाकुलाशयः ||३०७३||
स हि दध्यौ निर्विरोधो वैराग्येणाथ मायया । संकटान्मोचितव्योसौ[1] यायात्कालेन विक्रियाम् ||३०७४||
अनिःशेषितजीमूतजालमाविर्भवन्नविः । अनूनक्लेशशेषं च विवेको न स्फुरेच्चिरम् ||३०७५||
मुग्धान्नि[1]रनुसंधाननागबाधादवेत्य नः । स्वार्थस्य सिद्धये माया तेनेयं निरमायि वा ||३०७६||
लब्धलक्षेपरिक्षीणे शक्ते[1] यूनि गणाश्रिते । क्षत्रधर्मस्थिते नेदृग्विवेकः क्वापि लक्ष्यते ||३०७७||
अवाप्ति कुङ्कुमं पुष्पमपुष्पं क्षीरिणः फलम् । अकालपर्ययापेक्षं वैराग्यं वा महात्मनाम् ||३०७८||
न त्याज्यो राजपुत्रोसावेवं मायानिधिर्यदि । एवंविवर्तश्चेत्तस्मिन्नदृष्टे किं दृशोः फलम् ||३०७९||
राज्ञी राजात्मजाश्रिते प्रतिष्ठाभङ्गशंसिनः । ऋजुप्रभावात्सुस्पष्टमन्यत्कार्यं न मन्यते ||३०८०||
अटन्ती[1] कुटिलं स्पष्टं सरित्स[2]र्वैर्न लक्ष्यते । कान्ताकुन्तलविष्यन्दी तोयबिन्दुरिव क्रमः ||३०८१||

३०५४. 1) Emended with G (*sec. manu*); A °कारणज्ञा°. ३०६२. 1) Emended; A हीने. ३०६४. 1) Emended; A °ह्रासो. ३०६५. 1) Emended; A वा. ३०६९. 1) Emended; A सीमन्ताप्रा°. ३०७०. 1) Emended; A °पातिनम्. ३०७१. 1) Emended with C; A प्राप्नुयामास.—2) Emended with G (*sec. manu*); A °न्देवीवत्स°. ३०७४. 1) Doubtful emendation; A °तव्यासौ. ३०७६. 1) Emended; A मुग्धानिर°. ३०७७. 1) Emended; A शक्तौ. ३०८१. 1) Emended with C; $A_1$ has first written अ‐लं and then supplied टि over the *lacuna*.—2) Emended with C; A शरत्स°.

इति ध्यात्वा राजधर्मं सत्यप्रज्ञोचितं व्यधात् । धन्यरिल्हणयोः कार्यं श्रुतावन्यान्विसर्जयन् ॥३०८२॥
स्वस्यैवार्थस्य दाढर्याय साल्हणिस्त्वां[1] दिदृक्षते । समागमायेत्युक्त्वाथ धन्यो दूतैरनीयत ॥३०८३॥
मा भैषीरिदेष संधित्सु[1]: सैन्यादिति मितानुगः । अवर्तिष्ट तटिन्याः स द्वीपान्तस्तत्प्रतीक्षया ॥३०८४॥
सरित्सा जानुदघ्नाम्भा भूत्वा घर्मद्रुते हिमे । गगनालिङ्गिभिर्भीमा तरङ्गैः समपद्यत ॥३०८५॥
अवाप्य चेर्ष्ययालङ्घ्यभावं यान्त्यपि दन्तिनाम् । रुद्धः सिन्ध्वाभवत्सोथ द्विषां रन्ध्रैषिणां वशे ॥३०८६॥
सिन्धोरुभयतस्तोयैर्व्याप्तौ तीरभुवोन्तरे । ते दिण्डीरोपमां[1] प्रापुः पिण्डिताः पाण्डुवाससः ॥३०८७॥
खाशकानां[1] सहस्राणि भोजस्य पतितं[2] बले । स्थितवन्ति निहन्तुं तं तथास्थितमचिन्तयन्[3] ॥३०८८॥
दृग्भ्यां संभ्रमदीनाभ्यामघशान्त्यै स्पृशन्निव । कर्णे सल्हणसूनुस्तान्संतर्ज्य वृजिनो[1]ब्रवीत् ॥३०८९॥
निर्दम्भमस्य विस्रम्भाद्धावतो विहिते वधे[1] । निरत्ययो निपातः स्यान्नियतं निरये पुनः ॥३०९०॥
हतेस्मिन्बहुभृत्यस्य न च शक्तिक्षयः प्रभोः । नैकपक्षक्षये तार्क्ष्यरंहः संहारमर्हति ॥३०९१॥
अपि वा वाच्यता राज्ञामेवं विस्रब्धबाधनात्[1] । तुल्यस्तुल्येन कर्तव्यं किमनुध्याय बध्यते ॥३०९२॥
यथायं वृत्तयेनन्यकर्मा भूपं[1] निषेवते । तथा ममापि यत्नोयं तत्सेवासादने यतः ॥३०९३॥
युक्तमित्यादि तेनोक्ता अपि निश्चलनिश्चयाः । ते न्यषिध्यन्त निर्बन्धात्प्रतिज्ञायात्मनो वधम् ॥३०९४॥
रात्रौ तथैवादरिद्राश्छिद्रं तद्रक्षितुं ततः । कारिताः कोशपानं ते तमर्थं सोपि बोधितः ॥३०९५॥
तेनावेदितनिर्व्याजतया धीरो महीपतिः । अनुध्यायाथ संदिग्धं संधिसिद्धिममुग्धधीः ॥३०९६॥
अज्ञातनिश्चयः सिद्धेर्विनान्तःकरणं परैः । अथ प्रास्थापयद्देवीं सामात्यां तारमूलकम् ॥३०९७॥
राजधर्मविधेबत्वादवार्यक्रूरशङ्किनी । प्रस्थानप्रार्थनां भर्तुः सा स्वीकृत्य ततोब्रवीत् ॥३०९८॥
असामान्येष्वमात्येषु कुसृत्यालोकनात्सकृत् । आर्यपुत्र विचार्योस्ति[1] विस्रम्भः किं विरोधिनाम् ॥३०९९॥
यद्वा निर्मानुषोन्मेषं[1] शेमुषीत्वं विगाहितुम् । प्रथते नु कथंकारं मूर्तत्वं मर्त्यधर्मिणाम् ॥३१००॥
देहोपकरणत्वं ते प्राणैर्मम विचिन्त्यते । सतीधर्मस्तु सहते राजधर्मस्य नोचितम् ॥३१०१॥
व्यञ्जितास्यसदाचारं कलिकृत्यं द्विषि त्वयि । प्रारब्धो देव भोजेन हिमाद्रौ हिमविक्रयः ॥३१०२॥
न गृह्णाति शमं वेत्ति स्वस्यान्यस्य न चान्तरम् । निर्व्यूढमददोषोद्य प्रायेण प्राकृतो जनः ॥३१०३॥
पुत्रमन्त्र्यविरोधादिबुद्ध्यशुद्ध्या प्रधावति । साध्वाचारोपि भूपालः क्रुध्यन्विस्रब्धबाधने[1] ॥३१०४॥
समयालङ्घनामोघगिरा देवेन पीयते । लोकत्रयैकपात्रेस्मिन्यशो नूनं मया सह ॥३१०५॥
त्रातव्यसंक्षयोपेक्ष्यप्राणायास्त्वन्यदाशयः । ममैवास्वादयन्त्यादादात्मंभरिपुरास्थितिः[1] ॥३१०६॥
इत्युक्त्वा विरतां सत्यसंधः साध्वीं धरापतिः । शान्तशङ्कामकृत्वा तां समामन्त्र्य[1] न्ययोजयत् ॥३१०७॥
भङ्गं सर्वानयं त्रातुं प्रयोक्तुं वेतनं नृपः । संरम्भे किमयं ध्यायत्यन्तः सर्वोप्यचिन्तयत् ॥३१०८॥

---

३०८३. 1) Emended; A °णिस्तां. ३०८४. 1) Emended; A भैषीरिष सन्धित्स्व. ३०८७. 1) Emended with C; A °रोपमतां. ३०८८. 1) Emended; A खश°.—2) Emended; A पतिते.—3) Emended; A° चिन्तयत्. ३०८९. 1) Emended; A °तज्र्य वृजिनो°. ३०९०. 1) Emended; A विधेः. ३०९२. 1) Emended; A °बोधनात्. ३०९३. 1) Emended; A रूपं. ३०९७. 1) The *akshara* त्यां could also be read न्यां; thus C. ३०९९. 1) Doubtful emendation; A विचार्योसि. ३१००. 1) Conjectural reading; A °न्मार्षां. ३१०४. 1) Emended with C; A क्रुध्य त्रि°. ३१०६. 1) Thus A; the text of this verse requires emendation. ३१०७. 1) Conjectural reading; A has written originally ----न्ययो° and subsequently filled up the *lacuna* with माता मन्त्र्या; G (*sec. manu*) सोनामन्त्र्य.

उपायेषु प्रयुक्तेषु देवीसंप्रेषणावधि । नान्यदस्य प्रयोक्तव्यं यदवाशिष्यत कचित् ॥३१०९॥

स्वपक्षभेदाद्भूभर्तुः सबलत्वाबलत्वयोः । परीक्षकत्वाद्ये केचिन्माध्यस्थ्येनावसन्कचित् ॥३११०॥

तेप्यल्पे वा महान्तो वा क्षीणदाक्षिण्यशृङ्खलाः । भोजगृह्यैः सहाबध्नन्कन्थां सर्वेपि डामराः ॥३१११॥

ते ह्यच्छिन्नतटस्थत्वाद्वैराज्येस्माभिरीदृशः । भोजः संजात इत्याशु माध्यस्थ्यं परिजह्रिरे ॥३११२॥

त्रिल्लको भोजसविधं तनूजं प्राहिणोद्द्रुतम् । प्रावेशयच्छमालां च चतुष्कं पुष्कलैर्बलैः ॥३११३॥

ये भिक्षुविप्लवेप्यासन्राजदाक्षिण्यरक्षिणः । विरोधिसविधं प्रापुस्तेपि नीलाश्वडामराः ॥३११४॥

लहराद्दिवसरसाड्डोल[1]डातश्च डामराः । त्रयो नीलाश्वतश्चैका डामरी पर्यशिष्यत ॥३११५॥

न व्यरंसीद्धिमं तत्तल्लवन्ये साल्हणेर्बले[1] । पतत्प्रावृट्प्रमत्तौघ[2]घोषोम्भोधाविवोद्धतः ॥३११६॥

भोजस्तु देवीमायान्तीं[1] श्रुत्वा बलहरं ततः[2] । ध्रुवं संधित्सया बद्ध इति सुव्यक्तमभ्यधात् ॥३११७॥

एतावन्ति दिनान्यासीत्पुंसो भ्रमयिता पुमान् । संबन्धिनीनां माध्यस्थ्ये स्वकुल्यात्कोन्यथा भवेत् ॥३११८॥

कुलचूडामणिः प्रेम्णा स यत्रैवं प्रवर्तते । किं स्यादगण्यप्रायाणां कार्कश्यं तत्र मादृशाम् ॥३११९॥

यच्च मायामिमां ब्रूथ तत्तथास्त्वस्मि वञ्चितः । विश्वास्यैव भविष्यामि नाकीर्तीनां निकेतनम् ॥३१२०॥

मा त्र भूद्विजयाशा वः समेता निखिला इति । अद्राक्ष्म चेदृशान्व्यूहानवारुक्षाम[1] वोन्नतेः ।३१२१॥

युक्तियुक्तमिदं चान्यच्चोक्तवान्बहु निश्चयात् । नाशक्यतान्यथा कर्तुं भोजो बलहरादिभिः ॥३१२२॥

द्वित्राहान्तरितेमित्रप्रमाथेपरथा कथम् । फलकालेसि संवृत्तमिति तं चावदन्नृपाः ॥३१२३॥

तारमूलस्थितौ[1] राज्ञ्यां ससैन्यौ धन्य[2]रिल्हणौ । राजपुत्रैः सह ततः पाञ्चिग्रामममवापतुः ॥३१२४॥

प्राप्तात्रवेत्य तौ नद्यास्तीरेवाचि कृतस्थिती । परस्मिन्कूलगहने भोजोप्येतावुपाविशत् ॥३१२५॥

अश्रान्तं विशतो दिङ्मुखेभ्यस्तत्कटकं भटान् । पश्यन्तः केपि संधिं न श्रद्दधुर्नृपतेर्बले ॥३१२६॥

हठप्रविष्टान्निर्यातुमक्षमानल्पसैनिकान् । धन्यादीन्राजवदनो हन्तुं शश्वदचिन्तयत् ॥३१२७॥

छित्त्वा सुय्यपुरात्सेतुं राज्ञः सैन्यं जिघांसवः । महापद्मसरोनौषु निभृतं केचनावसन् ॥३१२८॥

अन्ये तत्साहसोदन्तान्वेषिणः पतनोन्मुखाः । स्वैः स्वैर्मार्गैस्तत्र तत्र तस्थुर्भूभृदसंमताः ॥३१२९॥

आस्कन्दं भाङ्गिलेयाद्याः पुरे शंकरवर्मणः । शमाला[1]क्षितिकावाप्तिं डामराः समचिन्तयन् ॥३१३०॥

प्राप्यं महासरित्कूलं त्रिल्लकाद्यैरगण्यत । नीलाश्वडामरैर्वी[1]शा कार्या च नगरान्तरे ॥३१३१॥

किमन्यद्राजगृह्याणां समं सर्वे जिघांसवः । कारण्डवानां तोयान्तर्वेष्टितानामिवाभवन्[1] ॥३१३२॥

संदिग्धशिक्षितं कार्यं सर्वतः समतां तदा । प्राप वृष्टेरवग्राहमहयोगान्तरस्थितेः ॥३१३३॥

पदे पदे राजचमूपथायोत्थानमिच्छतः । छिन्दन्बलहरस्येच्छां भोजो ऽप्रमत्वमग्रहीत् ॥३१३४॥

क्षणे क्षणे विसंधानध्यायिना तेन कश्चन । बध्यमानास्व[1]न्तरायः संविधास्तु व्यधीयत ॥३१३५॥

घटनामुख्यौ यो यो विरोधः कटकद्वयात् । सत्त्वैकाग्रः स्वयं भोजस्तं तं त्वरितमच्छिनत् ॥३१३६॥

३११५. 1) A °ड्डोलळातश्च. ३११६. 1) Emended; A साल्हणे बले.—2) Emended with C; A °प्रमत्तोघ°. ३११७. 1) Doubtful emendation; A दीवीमायान्तौ. —2) Emended A° हरस्ततः. ३१२१. 1) Doubtful emendation; A चेदृशां व्यूहानवरुक्ष्याम; C चेदृशं व्यूहमवरोक्ष्यामि. ३१२४. 1) Doubtful emendation; A °स्थिते राज्ञ्यां; C °स्थिते राज्ञि.—2) Emended with C; A धैन्य°. ३१३०. 1) A₁ gloss श्वाल्. ३१३१. 1) Thus A; C °रैरीर्ष्या. ३१३२. 1) Emended with C; A °भवत्. ३१३५. 1) Emended; A बध्यमानस्वान्त°.

दूत्ये च कल्यकत्वे वा येऽस्वत्राजरञ्जकाः । भयेन प्रययुस्ते यद्वैकल्यं कार्यसंकटे ॥३१३७॥

[1]कर्णे तत्कथयन्ति दुन्दुभिरवै राष्ट्रे यदुद्घोषितं तन्नम्राङ्गतया[2] वदन्ति करुणं[3] यस्मात्तपावान्भवेत्[4] ।
श्रावन्ते तदुदीर्यते यदरिणाप्युग्रं न[5] मर्मान्तकृद्ये[6] केचिन्ननु[7] शाठ्यमौग्ध्यनिधयस्ते भूभुजो रञ्जकाः ॥३१३८॥

भण्डस्ताण्डवमण्डपे कटुकथावीथीषु[1] कन्थाकविर्गोष्ठश्वा स्वगृहाङ्गने शिखरिभूगर्ते[2] खटाकुः स्फुटम् ।
पिण्डीभूरतया विटश्च पटुतां भूभृद्गृहे गाहते गच्छन्ति ह्रदकूटकच्छपतुलां चित्रं ततोऽन्यत्र ते ॥३१३९॥

भूरोद्रेकविपर्यासाच्छान्तोष्मक्ष्माभृतस्ततः । वासरः शरणीचक्रे तुङ्ग[1]स्योत्तुङ्गमञ्जसा ॥३१४०॥

भानुर्दत्तपदोऽनूरोर्भ्रातुर्गौवलयान्तरे । क्ष्माभृच्छिरोर्पितकरो रक्तमण्डलतां दधे ॥३१४१॥

अहस्त्रियामामुखयो -- [1] मध्यस्थया दधे । संध्यया वन्दनीयत्वं जनस्य[2] व्यञ्जिताञ्जलेः ॥३१४२॥

कवाटिदन्तैर्विस्फोटाश्चन्द्रकान्तैः सिरोद्गमः । श्वयथुः पयसां पत्या दधे राज्युदयोन्मुखे ॥३१४३॥

सदैन्यैष्वरविन्देषु हीनद्वन्द्वोपजीवनैः । कवाटिनां घटेष्वेव षट्पदैर्घटितं पदम् ॥३१४४॥

अदृष्टकार्यपर्यन्तास्ततस्ते विषमस्थिताः । सरित्तटे सकटकाः पर्यतप्यन्त मन्त्रिणः ॥३१४५॥

न किंचित्प्रत्यभात्सर्वं[1] लघु भ्रान्तं च जानताम् । ओघेन ह्रियमाणानामिवैषामवलम्बनम् ॥३१४६॥

तीरे परस्मिन्सरितो वसन्बलहरः पुनः । रुद्धः कन्दलितास्कन्दबुद्धि[1]ः साल्हणिना[2]सकृत् ॥३१४७॥

कार्यातिपातादायातं मन्त्रिणां तन्मितं बलम् । तस्य प्रवर्धमानस्य सुखोच्छेदं बभूव यत् ॥३१४८॥

वितस्तासिन्धुसंभेदयात्रायां नगरे यथा । तथा तथापतन्त्रां[1]त्रौ लोकोभ्रान्तो व्यवर्तत ॥३१४९॥

लेखैर्डामरसंहारखण्डनाय विसर्जितैः । सान्तरैर्ग्रथिता बाह्यैर्नानाग्रै राजबीजिनः ॥३१५०॥

शाठ्यान्वितैरनुसरैस्तुमुलोत्पादनैरपि । धीरो धैर्यान्निश्चयाद्वा स्वैः स क्रष्टुं न पारितः ॥३१५१॥

सामन्तानामागतानामविस्रम्भादसंभ्रमम् । न्यक्कृतोऽयं निपत्याशु कुर्यादत्याहितं रुषा ॥३१५२॥

कृते च कदनोंकारेनेन --[1]समुन्मिषेत् । द्विजानामिव दस्यूनां समूहस्तेन सर्वतः ॥३१५३॥

इति निध्याय दुर्धु[1]क्षुरिव भोजः क्षपात्यये । कुर्मः साहसमित्युक्त्वा निन्ये बलहरं समम् ॥३१५४॥तिलकम्॥

एषां मदर्थाया[1]तानां सामन्तानां सभोजनः[2] । दाक्षिण्यादिति नाभोजि तेनाप्यभिजनस्पृशा ॥३१५५॥

तथा स्वमत्यां[1]वैमत्यं तमज्ञात्वा तु मन्त्रिणः । निष्प्रत्ययास्तेन जातममन्यन्त नयात्ययम् ॥३१५६॥

पक्षिपक्षस्फुटास्फालशफरस्फुरितेप्यधात् । तेषामासन्निधास्कन्द[1]ः प्रधावदहितभ्रमम् ॥३१५७॥

कूले परस्मिन्कूलिन्याः स्वाभिसंधाननिर्वृतैः । सममभाव्यत तैर्नान्यो रथाङ्गेभ्योऽभिषङ्गभाक् ॥३१५८॥

मरुत्काकुत्स्थ[1]दूतस्य कपेस्तीर्णाम्बुधेः पिता । ततान तेषां कूलानां सरित्पारगतौ --[2] ॥३१५९॥

---

३१३८. 1) This verse and the following are found in *Vallabhadeva's Subhâshitâvali*, 462-463 (ed. Peterson and Durgâprasâda).—2) नम्राङ्गतया supplied by $A_3$ in space left by $A_1$.—3) Thus corr. by $A_1$ from करुणां.—4) Thus corr. by $A_3$ from $A_1$ नपावाभ°.—5) Thus in *Subhâshitâvali*; A °च्युम्रेण.—6) Thus corr. by $A_3$ from $A_1$ कर्मा°.—7) मनु supplied by $A_3$ in space left by $A_1$. ३१३९. 1) Emended; A कटुकथावीचीषु; *Subhâsh.* चटुकथावीथीषु.—2) Thus $A_1$ in margin and *Subhâsh.*; $A_1$ in text भुगर्भे. ३१४०. 1) तुङ्ग supplied by $A_3$ in space left by $A_1$. ३१४२. 1) Thus $A_1$; C supplements °योरपि.—2) Emended with C; A जनयन्व्यञ्जि°. ३१४६. 1) Emended; A °भात्स्वं. ३१४७. 1) Emended with C; A °स्कन्दोबुद्धिः.—2) Emended with C; A साल्हणना°. ३१४९. 1) Emended A °पतद्राञी. ३१५१. 1) नेन supplied by $A_3$; $A_1$ indicated originally a *lacuna* of four *aksharas*; C supplements सर्वं. ३१५४. 1) A दुद्ध°. ३१५५. 1) Doubtful emendation; A एतां मदर्थया.—2) Doubtful emendation; A सभोजनि:; C सामन्तानामभोजने. ३१५६. 1) Doubtful emendation; A समत्यावै°. ३१५७. 1) Emended; A °स्कन्दप्र°. ३१५९ 1) Emended with C; A काकुस्थ°.—2) Thus A; C fills up the *lacuna* with बलम्.

कीर्णकर्णज्वरांश्चारीन्पीत्कृतैस्तीरभूरुहाम् | आश्रित्योन्निद्रकेणेत्थं निन्युस्ते तां निशीथिनीम् ||३१६०||
क्षपान्ते क्ष्माधरोत्तंसहेमतामरसभ्रमम् | उद्गच्छतो रवेर्यावच्चिच्छिदुर्न करच्छटाः ||३१६१||
चक्राह्वविरहालोकसशोकानामिवागलत् | कुट्मलाक्षिपुटाद्यावन्नैशं नाम्भश्च वीरुधाम् ||३१६२||
मितपत्तियुतस्तावत्तरुकच्छाद्विनिर्गतः | ---[1]स्त्वरयन्युद्धं[2]वाहान्मूर्ध्न्यङ्घ्रिणा स्पृशन्[3] ||३१६३||
रोद्धुकामाण्डामरीयान्वीरान्दृष्टैर्विलोकितैः | सर्वतो धावतः कुर्वन्योधान्प्रतिहतौजसः ||३१६४||
पारश्वधी चारुवेषो युवा संमुखमापतन् | युग्याधिरूढस्तैः प्रैक्षि संप्राप्तः सरितस्तटम् ||३१६५||कुलकम्||
अदृष्टपूर्वं तं दृष्ट्वा श्रीखण्डोल्लिखितालकम् | कुङ्कुमालेपिनं चैते भोजोयमिति मेनिरे ||३१६६||
अतिवाह्य निशां राजवदनं तं विमोहयन् | प्रातश्च तरसामन्त्र्य स तथा संमुखोह्यभूत् ||३१६७||
प्रविष्टयुग्यं तोयान्तः पाराद्धावितवाजिनः | धन्यादयस्तमभ्येत्य मुदिताः पर्यवारयन् ||३१६८||
उदभूत्तुमुलः शब्दस्ततः कटकयोर्द्वयोः | एकत्राक्रन्द[1]मुखरः परत्रानन्दनिर्भरः ||३१६९||
नादमाकर्ण्य संग्रामबुद्ध्या दिग्भ्यः प्रधावितैः | तं परैर्मि[1]लितं वीक्ष्य मूर्ध्न्यताड्यत डामरैः ||३१७०||
तस्याभिनन्दनालापप्रमुखा प्र[1]क्रियाभवत् | अदैन्यशुद्धधन्यादिष्वनुज्झितनिजक्रमा ||३१७१||
प्लवमानं मनोहर्षं वेगात्संस्तभ्य[1] सर्वतः | अथेत्थं स्तुवता तत्तस्य धन्येनाभ्यधीयत ||३१७२||
राजपुत्र पवित्रेयं पृथिवी स्थैर्यशालिना | त्वया धाम्ना सुमनसां मेरुणा वा महीभृता ||३१७३||
गवां जयति सर्वासां निर्विकारतया वसन् | विक्रियोपहतं गौस्ते क्षीरं –[1] क्षीरवारिधेः ||३१७४||
कस्य पुंस्कोकिलस्येव त्वां विनाधममध्यतः | निर्गत्य निजकुल्यानां सिद्धं मध्यावगाहनम् ||३१७५||
सदाचारस्य भवता प्रथमं प्रहते पथि | न तच्चित्रं संचरामश्चरमं चेत्ततोधिकम् ||३१७६||
इत्यादिप्रसृतालापदत्तोल्लापोधिरोह्य[1] सः | जयोत्तरङ्गं तुरगं स्तुवद्भिस्तैरनीयत ||३१७७||
लवन्याः कतिचित्क्रोशन्वि[1]क्रोशन्तस्तदा ययुः | स्वकुल्यैर्नीयमानं तं काका इव पिकान्तिकम् ||३१७८||
स एवमेकविंशेब्दे ज्येष्ठस्य[1] दशमेहनि | त्रयस्त्रिंशद्वर्षदेश्यः समगृह्यत भूभुजा ||३१७९||
राज्ञी कृतप्रणामं तं प्रियं पुत्रमिवागतम् | अभ्यनन्दच्छ्रान्तभृत्यमस्याहारमकल्पयत् ||३१८०||
इन्दुवंशाविसंवादिगुणग्राममवेक्ष्य तम् | प्रागदृष्टवती मेने वञ्चिते सा विलोचने ||३१८१||
गुणैरशाठ्यदाक्षिण्यमाधुर्याद्यैरकृत्रिमैः | तस्या विशदशीलं स क्षमापतिममन्यत ||३१८२||
मुखरा[1]गो मनोवृत्तेर्द्वारौज्ज्वल्यं गृहश्रियः | भर्तृस्वभावस्याचारो योषितामनुमापकः ||३१८३||
दिनक्षयव्यञ्जिताध्वक्रमं[1] प्रस्थातुमुत्सुकम् | राज्ञोभ्यर्णे विशोत्येनं[2] दाक्षिण्यात्कोपि नाब्रवीत् ||३१८४||
कथंचिद्रुद्धमाध्यस्थ्यत्रैमत्यैः सचिवैरथ | स त्वादिक्षन्नरपतिराशान्तेभ्योभ्यधीयत[1] ||३१८५||
राज्ञोभ्यर्णे विशो[1]त्युक्तेरुपोद्घातोपमं वचः | तत्तस्य श्रोत्रशष्कुल्यां --[1] शङ्कुक्रियां व्यधात् ||३१८६||

३१६३. ¹) Thus A ; C स वीरस्त्वर°.—²) Emended with C ; A °न्युद्धवा°.—³) The letter न् cannot be read with certainty ; C °स्पृशत्. ३१६९. ¹) Emended ; A °क्रान्ति°. ३१७०. ¹) Thus corr. by $A_1$ from डामरैर्मि°. ३१७१. ¹) Emended with G (*sec. manu*) ; A °मुखापक्ति°. ३१७२. ¹) Emended with C ; A °स्तम्भ्य. ३१७४. ¹) Thus A ; C supplements तं. ३१७७. ¹) Emended; A °इन्तोल्लापोधिरोह. ३१७८. ¹) Emended ; A °स्क्रोशाद्वि°. ३१७९. ¹) Emended with C ; A ज्येष्ठस्य. ३१८१. ¹) Emended ; A इन्द्रवंशा°. ३१८३. ¹) Emended; A मुखरागमनो°. ३१८४. ¹) Emended with C ; A °ङ्क्रमां.— ²) Emended ; A विशल्येनं. ३१८५. ¹) Doubtful emendation ; A स त्वादिक्षुर्नरपतिराशान्तेभ्यांभ्य°. ३१८६. ¹) Emended ; A विशल्यु°.—²) Thus A ; C supplements तदा.

चिरात्ताडितमर्मेव समाश्वास्यैक्षताथ सः । मध्यस्थानां स्थितं स्थैर्यं[1] दाक्षिण्यादोष्टयोः परम् ||३१८७||

प्राणान्मुमुक्षोस्ते रूक्षभाषिणस्तस्य सान्त्वनैः । मन्दत्वं विक्रियां निन्युर्विनयानतमौलयः ||३१८८||

आचारं चैनमास्निग्धमपि न्याय्यं वचस्विनम् । न कोपि प्रतिवाक्येन शक्यं जेतुममन्यत ||३१८९||

3190 अथ स्वान्तस्थितस्वामिवैवश्यं दर्शयन्निव । दशनांशुवनैर्धन्यो वीरः स्निग्धमभाषत ||३१९०||

पद्धतिं राजधर्माणां सदाचारे स्थितां च ते । जानतोपि कथं मोहः क्रमायातेषु वस्तुषु ||३१९१||

किं संधिः सोभिधीयेत यत्र संधेयदर्शनम् । अकृत्वा गम्यत इति प्राज्ञो कथमजीगणः ||३१९२||

अनद्यतनभूभर्तृसुलभं[1] भूभुजं[2] तव । ज्ञात्वा सत्त्वोज्ज्वलं ज्ञातिधर्मजातप्रवर्तनम् ||३१९३||

नास्य दम्भस्मयस्तम्भाप्रीतिस्थैर्यखलोक्तयः[1] । आदरादर्शवैशद्ये निःश्वासस्यापि काः श्रियः ||३१९४||

3195 अस्योपजीवनाद्या श्रीः साम्राज्यासादनान्न सा[1] । प्रकाशो बिम्बितो[2] योर्कादीपात्स्याज्ज्वलतः स किम् ||३१९५||

निर्वाणगोष्ठीनिष्ठत्वं शमिनामाश्रयेषु यत् । तत्पर्षद्यस्य राजर्षेः --[1]न्वृन्दानुबन्धिनः ||३१९६||

एवं स्वगृहसंप्राप्यप्रायोनिःश्रेयसस्य ते । स्थानैः श्रियः समाप्याथ किं स्यादन्यैर्महीधरैः ||३१९७||

मुग्धा न केचन परे गणिताः फणिभ्यः कालानुकूलनिजकुण्डजलत्यजो[1] ये ।
श्लिष्यन्ति चन्दनतरुञ्शिशिरान्निदाघे माघेप्यशीतमनवं[2] विवरं विशन्ति ||३१९८||

प्राणोपकरणं राज्ञो राज्ञी राजात्मजाश्च ये । तद्धिते यदनौचित्यं तेषामौचित्यमेव तत् ||३१९९||

3200 त्यक्तोष्मवैकृतं पाथ इव क्वथितशीतलम् । अनुतापेन ते कृत्यं भूयो वैरस्यमेष्यति ||३२००||

तथा समर्थां सामर्थ्याद[1]प्रत्याख्याय भारतीम् । कुण्ठशाद्यलवस्तस्थौ प्रस्थानार्थं स मन्थरः ||३२०१||

पथि संग्रथितस्तोत्रान्वास्तव्यान्वीक्ष्य सर्वतः । अजायताथ संरूढकृत्यसाधुत्वदार्ढ्यधीः ||३२०२||

पदातिचरणक्षुण्णरेणुव्याजाददृश्यत । वसुंधरातलं बद्धसंधीव नभसा समम् ||३२०३||

दध्यौ ----[1] भोजः कच्चित्संप्राप्नुयां नृपम् । कच्चिदमुष्य विद्येत दर्शनं विप्रलम्भकैः ||३२०४||

3205 आराधन--[1]धाम्नि नान्तरान्तरितो विटैः । स्वामिनां क इवाप्नोति गुणाविष्करणक्षणम् ||३२०५||

शीतोपचारकरणाद्दयितो भवेयमौर्वार्दितस्य जलधेः प्रसृतं धियेति ।
कोतो हिमाद्रिपयसो विनिपात एव ग्रासीकृतं तिमिभिराहत ---[1]स्यात् ||३२०६||

इत्यादिचिन्तास्तैमित्यात्पुरक्षोभाद्यलक्षयन् । सैन्यस्य रुद्धाश्वतयाबुद्धासन्नं[1] नृपास्पदम् ||३२०७||

नातिप्रांशुं नातिकृशं सूर्यांशुश्यामलाननम् । सरोजकर्णिकागौरं शिथिलश्लथविग्रहम् ||३२०८||

ककुद्मत्ककुदोत्सेधिस्कन्धमायतवक्षसम् । श्मश्रुणानतिदीर्घेण व्यक्तगण्डगलोन्नतिम् ||३२०९||

3210 उन्नसं पक्वबिम्बोष्ठं विस्तीर्णानुल्बणालिकम् । तिर्यग्विप्रेक्ष्य ---[1] धीरमन्थरगामिनम् ||३२१०||

समाहितांशुकोष्णीष--[1] श्रीखण्डव--[2]म् । सीमन्त--[3]चुम्बिन्या रेखया चन्द्रगौरया ||३२११||

---

३१८७. [1]) Emended with C; A स्थौर्यं. ३१९३. [1]) Emended; A सुलभे.—[2]) Emended; A भूभुजां. ३१९४. [1]) Emended with G (*sec. manu*); A °स्तम्भप्री°. ३१९५. [1]) Emended with C; A सः.—[2]) Emended with C; A बिम्बतो. ३१९६. [1]) Thus A; perhaps read राजर्षेर्विद्वद्वृन्दा°; C °र्षेज्झनान् वृन्दा°. ३१९८. [1]) Emended with C; A °जल–जो.—[2]) Emended with C; A °शीतम–वं. ३२०१. [1]) Doubtful emendation; A समर्थासामर्थ्या–प्रत्या°; C °सामर्थ्यान्न प्रत्या°. ३२०४. [1]) Thus A; C supplements विज्ञतरो. ३२०५. [1]) Thus A; C आराधयन् प्रभुं धाम्नि. ३२०६. [1]) Thus A; C °हतमेव तत् स्यात्. ३२०७. [1]) Emended; A °सन्ननृपास्पदम्. ३२१०. [1]) Thus A; C °प्रेक्ष्यमाणास्यं. ३२११. [1]) Thus A; C °ष्णीषमौलिं.—[2]) Thus A; C श्रीखण्डवर्त्तनं.—[3]) Thus A; C सीमन्तस्थानचु°.

अश्वावरूढं हर्म्यस्थसचिवैः परिवारितः[1] । -----[2]मायान्तं तमवैक्षत पार्थिवः[3] ॥३२१२॥ कुलकम् ॥
प्रीतिविस्फारितदृशा राज्ञा पृष्टस्ततः सभाम् । सोध्यारुरोह संबाधां कौतुकोत्कन्धरैर्जनैः ॥३२१३॥
स्पृष्ट्वा पादौ निषण्णोग्रे नृपस्यानीय पाणिना । खड्गधेनुं पाणिबद्धामासनाग्रे समार्पयत्[1] ॥३२१४॥
पाणिं सफणिवल्लीकं विवृताग्राङ्गुलिद्वयम् । ततोस्य चिबुकोपान्ते विन्यस्यन्पार्थिवोब्रवीत् ॥३२१५॥
न विगृह्य गृहीतोसि नाधुनापि निर्व[1]ध्यसे । तदङ्ग कस्मात्तूष्णीमः शस्त्रमेतत्त्वयार्पितम् ॥३२१६॥
व्यजिज्ञपत्स भूपालं देव शस्त्रस्य धारणम् । स्वामिसंरक्षणं स्वस्य परित्राणस्य कारणम् ॥३२१७॥
देवे निजप्रतापाग्निगुप्तसप्तसरित्पतौ । सेवावकाशो विरलः स्वशस्त्रस्यापि दृश्यते ॥३२१८॥
लोकान्तरेपि शरणं चरणाश्रयणं प्रभोः । तत्रात्र लोके किं कार्यं त्राणोपकरणैः परैः ॥३२१९॥
राजा जगाद तं सत्त्वस्पर्धाबन्धेधुना भवान् । निर्व्यूढकृत्यो वादीव कृत्यं नो वर्तते परम् ॥३२२०॥
भोजो बभाषे दाक्षिण्यजननायाधुना प्रभोः । दृष्टादृते मया किंचिन्नोपचारार्थमुच्यते ॥३२२१॥
किं ते न चिन्तितं दुष्टं किं किं न कृतमप्रियम् । यदसिद्धं न तद्व्यक्तिमगादित्यवधार्यताम् ॥३२२२॥
किं न मद्वान्वये कश्चित्कारणेषूदितो भवान् । विद्मः[1] समानन्यकुल्यं प्राग्र्यं वयं चर्मचक्षुषः ॥३२२३॥
यदा यदा देव वाञ्छामकार्ष्म भवदप्रिये । भूमिस्तदा तदा भूम्ना भूप ---[1] भूयसः ॥३२२४॥
यावत्कवीनां निर्भाति प्रतिभानेन भास्वरः । देवाभवन्नः प्रत्यक्षः प्रतापस्तादृशस्तव ॥३२२५॥
न शेखरे न प्रदरे न दरेप्युज्झितो[1] मया । प्रालेये भूभृतः कुञ्जे संज्वरस्त्वत्प्रतापजः ॥३२२६॥
ततः प्रभृत्यवनतिप्रणयः शरणैषिणः । सिद्धः संध्यादि[1]वन्ध्यत्वाद्दैव दूरस्थितेर्न मे[2] ॥३२२७॥
अथाभेदाभिलाषेण पापाद्य[1]त्किल चेष्टितम् । स्फुरत्तामात्रकव्यक्त्यै न तु तद्विग्रहाग्रहात् ॥३२२८॥
त्वत्संबन्धादिमे दिक्षु प्रतीक्ष्याः क्ष्माभुजां[1] वयम् । सङ्गाद्गङ्गाम्भसः काचकुम्भसंभावना भुवि ॥३२२९॥
अद्यापि द्योतते शाहि[1]राज्ञयेन दिगन्तरे । तत्संतानभवोनन्तः समूहः क्षत्रजन्मनाम् ॥३२३०॥
त्वय्यर्पिते पार्वतीयभूभृत्सङ्गेन्यदादि[1] नः । कदन्नाशनदु--मुखैः[2] खेदोन्मुखैरभूत् ॥३२३१॥
इती[1]दृशीभिः ---[2] प्रमाणमथ वा प्रभुः । इत्युक्त्वा भूपतेर्मूर्ध्ना सोगृह्णाच्चरणौ पुनः ॥३२३२॥
प्रणामसंभ्रमस्रस्तोष्णीषशीर्षं ततो नृपः । तस्योत्थितस्य स्वशिरोवाससा समवस्त्रयत् ॥३२३३॥
स्वां तां च शस्त्रीं तन्न्यस्तामुत्सङ्गे सान्त्वयन्व्यधात् । तस्यासंक्षोभगाम्भीर्यस्तमूर्त्ते च निषेधिनम् ॥३२३४॥
दत्ते[1] मया बिभृहि वा त्वमेते पूजयाथ वा । न शस्त्रग्रहवैमुख्यं कार्यं मच्छासनं त्वया ॥३२३५॥
अवन्ध्यशासने --[1]त्यनुबध्नति[2] ते व्यधात् । शस्त्र्यौ[3] राजानुगत्यैव वन्दित्वाङ्के स कालवित् ॥३२३६॥
ततो निर्यन्त्रणत्वस्य नर्मणः सान्त्वनस्य च । चिरसेवीव तत्कालं राज्ञोजायत भाजनम् ॥३२३७॥

---

३२१२. [1]) Emended ; A °रितम्.—[2]) Thus A; C अनङ्गतुल्यमायान्तं.—[3]) Emended with C; A पार्थिवम्. ३२१४. [1]) Emended with C; A समर्पयत्. ३२१६. [1]) Emended; A न बध्यसे. ३२२३. [1]) Emended with C; A विद्म स्मा°. ३२२४. [1]) Thus A; C तदा भूता पात्रं कम्पस्य भूयसः; perhaps read भूम्ना भूः प्रकम्पस्य भूयसः. ३२२६. [1]) Emended; A °ज्झिते. ३२२७. [1]) Emended; A संध्यायिव°.—[2]) Emended; A दूरस्थिते न. ३२२८. [1]) Emended with C; A पा-द्यत्किल. ३२२९. [1]) Emended; A क्ष्माभुजा. ३२३०. [1]) Emended; A शाहेवाह्न°. ३२३१. [1]) Thus A; doubtful.—[2]) Thus A; C कदन्नाशनदुर्भोगासुस्थैः खे°. ३२३२. [1]) Emended with C; A इदीदृ°.—[2]) Thus A; C supplements स्तुतिभिः. ३२३५. [1]) Emended; A वत्तं. ३२३६. [1]) Emended; A °शासनो--; perhaps read अवन्ध्यशासने राज्ञीत्यनु°; C °शासनोमानीत्य°.—[2]) Emended; A °त्यनुबति ते; the *lacuna* not indicated.—[3]) Emended; शस्त्रौ.

अन्यत्प्रविष्टो धन्योथ स्वार्चाम--[1]यन्कृती । कृतप्रणामो भूपाल त्वद्गुणाकर्णनं विना ॥३२३८॥

न प्राणा द्रविणं नाद्य गण्यं निर्विक्रिया पुनः । सत्क्रिया स्वामिनोप्यर्थे[1] तस्मात्पार्थिव चिन्त्यताम् ॥३२३९॥

तथापि कथ्यमानं तन्न स्यात्संभावनाभुवि । यदस्मिं[1]श्चिन्त्यतेस्माभिरिति भूपो व्यभाषत ॥३२४०॥

क्षणमुच्चावचां चर्चां विरचय्य विशां पतिः । भोजेन सार्धं शुद्धान्तं रड्डादेव्यास्ततो ययौ ॥३२४१॥

कृतप्रणामस्तां वीक्ष्य सौजन्यादिगुणोज्ज्वलाम् । स राजपारिजातं तं मेने कल्पलतायुतम् ॥३२४२॥

मान्योयं देवि सौजन्यज्ञातेयाभ्यामिहागतः । विशिष्यतेसौ पुत्रेषु क्ष्माभृद्योपेत्य[1]भाषत ॥३२४३॥

सभाजनाय सौजन्यनिधिर्भोजान्वितस्ततः । उद्गूढकार्यभाराणां दाराणामप्यगाद्गृहान् ॥३२४४॥

अभाणीन्निपुणा राज्ञी भोजं राज्ञा सहागतम् । अधुनैव नृपस्याप्तः संवृत्तोसीति[1] सस्मितम् ॥३२४५॥

लज्जास्मितमुखी पत्युः प्रणत्या स्वागतोक्तिषु । ददत्येवोत्तरं भोजं निर्दिशन्त्यप्यभाषत ॥३२४६॥

आर्यपुत्र न विस्मार्यं प्रत्याख्याताप्तमन्त्रितम् । मानैकशरणस्यास्य ज्ञातिप्रीतिप्रवर्तनम् ॥३२४७॥

पूर्वोपकर्तृ सलिलं वृद्धावस्पृशतोन्वहम् । पद्मान्स्वकुलपद्मानां युक्तं जेतुं भवादृशाम् ॥३२४८॥

कार्यकृच्छ्रेवसन्नानामभ्युपागमनं विना । सिध्येदौन्नत्यसंरक्षा नेह प्रत्यागमश्च नः ॥३२४९॥

उद्दीपे[1] रक्षतस्तीरं शरीराश्रयिणी भवेत् । ध्रुवं वनस्पतेर्वीरुत्त[2]न्निपातानुपातिनी ॥३२५०॥

पतिगत्यनुगामित्वं प्राणानां परिचिन्तितम् । तथा कार्यं यथा न स्याज्ज्ञातव्यस्यान्यथात्मनः ॥३२५१॥

राजा जगाद तां देवि सर्वकर्तव्यसाक्षिणी । अन्यथाप्रतिपत्त्वं[1] मे त्वमप्यस्य[2] न मन्यसे ॥३२५२॥

निगृहीतवतो दुष्टौ सुज्जिमल्लार्जुनावपि । निस्तापं मम नाद्यापि प्राप्तानुशयमाशयम् ॥३२५३॥

अथ राज्ञार्थितः स्थातुं परार्ध्ये धाम्नि सानुगः । भोजो नामन्यतान्यत्र राजधान्यां[1] स्थिरां स्थितिम् ॥३२५४॥

विदूराश्रयनिर्गोप्तृभावाप्रचुरदर्शनैः । आराधनं धराभर्तुरसाध्यं ध्यातवान्हि सः ॥३२५५॥

रक्षितृनग्रहीत्क्ष्मापा[1]स्थिरं च समकल्पयत् । [2]अनया - नृपं कार्या न सुराराधनागमे ॥३२५६॥

विज्ञाय भावं प्रीतेन राज्ञा दत्तं[1] ततो गृहम् । सर्वोपकरणापूर्णं राजधान्यन्तरेभजत् ॥३२५७॥

राजापि ममतास्फीतप्रीतिभिः स्वैः परैस्तथा । उपासितस्तत्र रतिं चिराश्रित इवाययौ ॥३२५८॥

भोगवेलोचिताश्चर्यदर्शनादौ नृपोपि तम् । प्रियं पुत्रमिवास्मार्षीद्दूतैः पार्श्वं निनाय च ॥३२५९॥

जग्राह दक्षिणे पार्श्वे भुञ्जानं ज्ञातिगौरवात् । स्पर्शास्वा[1]दितभोज्यादिदाने नैव व्यवर्जयत् ॥३२६०॥

अकृत्रिमं तथा स्नेहमुवा[1]ह ---[2] यथा । लडितं ज्ञा[1]तिवत्तस्मिंस्तद्बा[3]लापत्यकैः समम् ॥३२६१॥

तामेवालम्बत व्यक्तां[1] सोपि वृत्तिं यथा यथा । राजा सपरिवर्होपि विस्रम्भमविगर्हितम् ॥३२६२॥

आसन्नाभ्यन्तरा भिन्ना ये द्वैधे तानदर्शयत् । राज्ञां[1] विरक्तिं स्वस्यारिबाहुल्यं च व्यसर्जयत् ॥३२६३॥

---

३२३८. 1) Thus A; C स्वार्चाममलयन्कृती. ३२३९. 1) Emended with C; A स्वामिनो-र्थे. ३२४०. 1) Emended; A यदास्मि°. ३२४३. 1) Emended with C; A क्ष्माभृद्योपैत्य°. ३२४५. 1) Emended; A संवृत्तोर्मीति; C संवृत्तोऽस्मीति. ३२५०. 1) $A_1$ gloss उद्दीपः अतिवृष्ट्या अत्युद्रिक्तजलागमः.—2) Emended with C; A °वीरुस्तन्नि°. ३२५२. 1) Emended; A प्रतिपत्त्य.—2) Emended with C; A त्वमप्य-. ३२५४. 1) Emended; A °धान्यां. ३२५६. 1) Emended; A °क्ष्मापान्स्थिरं.—2) Thus A; the text is here evidently corrupt; C अनयात्तं नृपं; G (*sec. manu*) अनुयान्तं नृपं कार्यान्नृसुराराधनागमे. ३२५७. 1) Emended with C; A दातुं: ३२६०. 1)—1) Written by $A_5$ on new paper.—2) Thus A; C supplements जनको.—3) Emended; A° स्तब्दलापत्यकैः. ३२६१. 1)—1) Written by $A_5$ on new paper. ३२६२. 1) Conjectural reading; A तमेवालम्बत व्यक्तिं. ३२६३. 1) Emended; A राज्ञां.

अकृत्रिमात्समाधानात्करणानां सभान्तरे । न प्रत्यभाज्जडो नापि धृष्टो नापि बकव्रतः ॥३२६४॥
प्रमादस्खलिते हीनातिरिक्तत्वे च भूपतेः । कार्ये नावदधे क्षुद्रः कवितेव महाकवेः ॥३२६५॥
न विक्रमकथासत्त ----[1] व्यकत्थत । प्राग्वृत्तमन्तरा पृष्टः सोपस्कारं च नाभ्यधात् ॥३२६६॥
त्रि--[1] कान्प्रभोः साम्यसकुल्यत्वादिचाटुभिः । धीराधृष्टैर्दृष्टिपातैरपुनर्भाषिणो व्यधात् ॥३२६७॥
तथा स्पृष्टोप्यनुत्तानाशयोभूदवगाहितुम् । न शेकुस्तं यथा जाल्मनर्मवित्पिशुनादयः ॥३२६८॥
क्षणेष्ववसितालोकक्षोभादिविशरारुषु । प्रा--[1] वसथं गच्छञ्शङ्कां[2] कामपि नातनोत् ॥३२६९॥
यथा यथास्य विस्रम्भाद्भूपोभूच्छिथिलाग्रहः । तथा तथैव सिद्धोश्व इव नाधावदुद्धतम् ॥३२७०॥
सदैवाग्रेसरोन्यत्र पश्चाद्रुद्धपदोभवत् । अनिषिद्धोपि शुद्धान्तमन्त्रागारावगाहने[1] ॥३२७१॥
विज्ञप्त्यौपयिकावाप्तिप्रार्थनमादरा[1]त्स्वयम् । दूरीचक्रे परापेक्षां शश्वत्संशयिताशयः ॥३२७२॥
अना--- समये तस्या---[1] रक्षिणः । न स्वप्नवृत्तमप्यासीदनावेद्यं महीभुजे ॥३२७३॥
मन्त्र्यान्तः[1]पुरिकादीनां परस्परविगर्हणम्[1] । नावर्णयद्विस्मृतिं च दु[1]ष्टस्वप्नमिवानयत्[1] ॥३२७४॥
सचेतनोपि दुर्नर्मगोष्ठीष्वनुरणन्वचः । अवदत्स्फुरदप्यन्तर्विटानां नाम लाघवम् ॥३२७५॥
एवं शुद्धानुभावस्य तस्य कृत्येन कृत्यवित् । पुत्रेभ्योप्यधिकां प्रीतिं खिद्यन्भेजे[1] क्रमान्नृपः ॥३२७६॥
कलिकालमहीपालदुस्तरः सिंहभूभुजा । सोयं गोत्रपरित्राणे नवः सेतुः प्रवर्तितः ॥३२७७॥
इत्थं विद्रावि‌ताशेषोपद्रवस्तिलकस्ततः । अग्नि--[1]मपि स्वास्थ्य--[2] भूभृदचिन्तयत् ॥३२७८॥
असौ हि निर्हिमोर्वीभृन्मार्गे काले पलायनम् । शाठ्यं सत्त्वस्य दुःसाध्यं बद्धं ध्यायन्व्यलम्बत ॥३२७९॥
अतः सुमेधा यात्रायां यावत्क्षणमपेक्षत । सञ्जपालेनाविचारात्तावत्प्रारम्भि धावनम् ॥३२८०॥
अल्पाधिष्ठानसुभटः स देवसरसोद्भटैः । बहुभिः सहितः सैन्यैर्मार्तण्डे विदधे पदम् ॥३२८१॥
निर्निरोधप्रवेशः स प्रदेशः परिपन्थिनाम् । बाह्याश्च योधा निःसारा दर्पान्नेति विवेद सः ॥३२८२॥
त्रिल्लकानुचरा युद्धमसन्निहितसायकाः । तेन सार्धं विदधिरे न चाहीयन्त पौरुषम् ॥३२८३॥
निःसीम[1]सैन्यसहितो लवन्योन्यत्र डामरे । तत्र सर्वाभिसारेण धावतो युयुधे क्रुधा ॥३२८४॥
लुण्ठितद्रविणापूर्णास्ते देवसरसौकसः । सर्वे ततः सञ्जपालं विद्रुताः परिजह्रिरे[1] ॥३२८५॥
द्विषत्संवर्तवर्षार्त्या सर्वत्र त्रुटितेभवन् । अधिष्ठान[1]भटा एव कुलशैला इवो[2]द्धताः ॥३२८६॥
ते तीक्ष्णतीक्ष्णतरणौ सोढारातिरुषश्चिरम् । बहून्नि[1]हतवन्तोन्यांस्तत्र तत्राहवे हताः ॥३२८७॥
[1]क्षतेषु युधि सर्वेषु विन्दानै[1]र्मण्डलं निजैः । शूरेषु त[1]त्र मार्ताण्डोप्यासीदविरलव्रणः[1] ॥३२८८॥
रराजाजौ साञ्ज[1]पालिर्ग[2]यापालो हतेषु यः । त्रिषु वाजिषु[3] चातुर्यात्पदातिर्नोपलक्षितः ॥३२८९॥

---

३२६६. [1]) Thus A; C supplements °सत्त्वदानाद्यैः स्वं व्य°. ३२६७. [1]) Thus A; possible emendations would be विडम्बकान्प्रभोः or विगर्हकान्प्रभोः; C विचारकान्प्रभोः. ३२६९. [1]) Thus A; C प्राप्तोऽस्याव°.—[2]) Emended; A गच्छच्छ–ङ्कां. ३२७१. [1]) Emended with C; A °गहने. ३२७२. [1]) Conjectural reading; A प्रार्थन–दरत्स्वयम्; C °प्रार्थनः स दरत्स्वयम्. ३२७३. [1]) Thus A; C अनाप्तसमये तस्य न ययुः पथि रक्षिणः. ३२७४. [1])—[1]) Written by $A_5$ on new paper. ३३७६. [1]) Emended with C; A भोजे. ३२७८. [1]) Thus A; C अग्निप्रोषमपि स्वास्थ्यहेतुं भू°. ३२८४. [1]) Emended with C; A निःसीमः सै°. ३२८५. [1]) Emended; A °जघ्रिरे. ३२८६. [1]) Thus corr. by a later hand from $A_1$ अधिष्ठाने भटा.—[2]) Emended with C; A इवेद्धताः. ३२८७. [1]) Emended with C; A बहूनिह°. ३२८८. [1])—[1]) Written by $A_5$ on new paper. ३२८९. [1]) Emended; A सञ्जपालि°.—[2]) Emended; A गयपालः; cf. viii. 3322.—[3]) Emended; A वाजिष्मचा°; C वाजिष्वचा°.

तत्राथम्योपलब्धाजिर्जर्जरस्तदनुजः शिशुः । निनाय विस्मयं वीरान्दृष्टा[1]संख्यमहाहवान् ॥३२९०॥
दक्षिणं दोर्न तच्चक्रे यद्वामं कम्पनापतेः । महेभांस्तापयत्यर्कः कुर्याद्भस्मरदान्विधुः ॥३२९१॥
स धावन्वाजिनाराजदेकदोःस्फुरितायुधः । सधूमदण्डो[1] दावाग्निः सपक्षेद्राविव[2] स्थितः ॥३२९२॥
तं वैरितुमुले बाणव्रणभङ्गेष्वसौ पुनः । पृष्ठादलोठयद्वाजी – –[1]न्नाबद्धपद्धतिः ॥३२९३॥
वर्मगौरवभूपृष्ठकाठिन्याघातपीडितः । स विसंज्ञो द्विषन्मध्यात्तनयाभ्यां विनिर्हृतः ॥३२९४॥
कटके सर्वतो नष्टे मार्ताण्डप्राङ्गनान्तरे । विरोध्यसाक्षि क्षिप्त्वा तं तावपासरतां ततः ॥३२९५॥
तत्रस्थं – –[1]ना क्ष्माभृत्प्रस्थितः पृथुलैर्बलैः । तावद्भिः प्राप्यमप्याशु डामरं पिण्डितं व्यधात् ॥३२९६॥
क्ष्मापाले विजयक्षेत्रं प्राप्ते त्रोटितवेष्टनः । सञ्जपालो लवन्यस्य वसतीर्निरदाहयत् ॥३२९७॥
स तादृगपि भूपाले क्रुद्धे[1] वक्रीकृतभ्रुवि । अदरिद्रो गिरिद्रोणीश्रेणिभू[2]सुलभाशनः ॥३२९८॥
संवृत्तो निःसहायश्च परिग्रहबहिष्कृतः । आपत्सुलभपाण्डित्यभृत्योपालम्भभाजनम् ॥३२९९॥
निकृत्तकरशाखोथ क्ष्मापकोपकपेर्व्यधात् । निरालम्भतया – –[1] स स्वशीर्षफलार्थनाम् ॥३३००॥
रड्डादेवीतनूजानां ज्यायांसं गुल्हणाभिधम् । श्रीमांल्लो[1]हरराज्येथ क्ष्मावृ[2]षा सोभ्यषेचयत्[2] ॥३३०१॥
षट्[1]सप्तहायनो[1] राजतनयः स वयो[1]धिकान् । चूताङ्कुरो जीर्णतरुनि[1]वेशानजयद्गुणैः ॥३३०२॥
अभिषेक्तुं सुतं देव्या यातायाः क्ष्माभुजो व्यधुः । शिरःशोणाश्मकिरणैश्चरणौ यावकारुणौ ॥३३०३॥
तत्राभिषिक्ते वसुधामुग्रावग्रहशोषिताम् । देवीभावाभिषेकार्थमिवासिञ्चन्पयोमुचः ॥३३०४॥
भूयोपि राजवदनो विप्लवोत्पादनोत्सुकः । अमन्दमवचस्कन्द जयचन्द्रं नृपाज्ञया ॥३३०५॥
नागभ्रातृव्यसहिता गार्गेरनुप्रवेशिनः । पश्चात्प्रसर्पिणीः सेनाः सोवधीत्संकटेध्वनि ॥३३०६॥
गार्गिः परिभवम्लानाननं तिष्ठन्दिनैस्ततः । नागभ्रातृसुताग्र[1]ण्यमबध्नाल्लोष्टकं[2] मृधे ॥३३०७॥
दुर्गमत्वादनाक्रान्तमन्यैर्वेगात्प्रविश्य च । दग्ध्वा च[1] दिन्नाग्रामं स निरगाल्लघुविक्रमः ॥३३०८॥
तथापि राजवदनो न शौर्यात्पर्यहीयत । न संदधे न चुक्रोध शक्यमस्य विनिर्गमम् ॥३३०९॥
अहन्यहनि हीनाभिः सेनाभिर्न्यपतन्नृपे । जयचन्द्रमुखाच्छश्वदसुखान्यवधीभवत्[1] ॥३३१०॥
क्ष्मानायकोथ निःसीमनखबाहुप्रसारणः । रणान्तरेव तं तीक्ष्णैर्गूढन्यस्तैरघातयत् ॥३३११॥
तन्मुण्डगण्डलेखेन लुठता खण्डशः कृतः । झटिति त्रुटितः स्वास्थ्यविटप्यं[1]कुरणोन्मुखः ॥३३१२॥
पृथ्वीहरकुलाच्छेदस्वच्छन्दो मेदिनीपतिः[1] । अवधील्लोठनम[2]पि छन्न[3]दण्डप्रयुक्तिभिः ॥३३१३॥
एकवारं वेष्टितोपि रक्षितस्तिल्लकेन सः । भूमिभृन्नीतिपाशस्य निपातेनाभ्यवर्तत[1] ॥३३१४॥
मल्लकोष्ठक्षुरजय्यसङ्कु[1]चन्द्रादयोभवन् । जीवन्मृताश्च शान्ताश्च दारिद्र्योपप्लवार्दिताः ॥३३१५॥

---

३२९०. 1) Emended with C; A °न्दृष्टसङ्ख्य°. ३२९२. 1) Emended with C; A °दण्डं.—2) Emended with C; A °द्राविव. ३२९३. 1) Thus A; C तदन्वाबद्ध°. ३२९६. 1) Thus A; C कम्पनाक्ष्मा°. ३२९८. 1) Emended with C; A क्रुद्धो.—2) Emended with C; A °श्रेण-सुल°. ३३००. 1) Thus A; C supplements तस्य. ३३०१. 1) Emended; A श्रीमाल्लो°.—2)—2) Written by A$_5$ on new paper. ३३०२. 1)—1) Written by A$_5$ on new paper. ३३०७. 1) Emended with C; A °सुताग्न्यामब°.—2) Comp. viii. 2996. ३३०८. 1) Emended; A स. ३३१०. 1) Doubtful; thus C; A °खान्यववधीभवत्. ३३१२. 1) Conjectural reading; A °विर्यास्यङ्कुरो°; C °विवास्यंकुरणो°. ३३१३. 1) Emended with C; A °पते:.—2) Comp. regarding this name the note to viii. 2496.—3) Emended; A च्छत्तद°. ३३१४. 1) Emended with C; A °भ्यवर्तितता. ३३१५. 1) Thus A; misread °मङ्कुचन्द्रा° in R C; cf. सङ्कुचन्द्रस्य viii. 643.

[1]अविचिन्त्योच्चलक्षोणिभृतः[1] प्राणान्विनश्वरान् । ऐश्वर्य[2]रूढिमूढत्वादनिर्व्यूढव्यवस्थितौ ॥३३१६॥

मठेनुमितकोशत्वं तत्तद्राजा[1]श्रयाद्गते । कुलोद्वहो विहितवा[1]न्सिंहदेवो व्यवस्थितिम्[2] ॥३३१७॥ युग्मम् ॥

[1]सुल्ला[2]विहारं पैतृव्यं[3] पितुर्देवगृहत्रयम् । तच्चार्धसिद्धप्रासादं परिपूर्णं व्यधा[4]न्नृपः ॥३३१८॥

स एव ग्रामान्[1]सामग्रीमहापणसमर्पणैः । निर्दोषपारिषद्यादिहृद्यान्निश्चोद्यधीर्व्यधात् ॥३३१९॥

अवरोधेन्दुवदनां[1] मृतामुद्दिश्य चन्दलाम्[2] । प्रत्यष्ठापि मठोनूनश्रीर्द्वारिवारितातिथिः ॥३३२०॥

स्पृष्टो नगरनिर्दाहै[1]ः सोपि सूर्यमतीमठः । पूर्वाधिकोपगर्वेण तेनैव निरमीयत ॥३३२१॥

संजाते सज्जपालस्य ततो लोकान्तराश्रये । कम्पने निदधे राज्ञा गयापालस्तदात्मजः ॥३३२२॥

विपाकसुकुमारोपि दुःसहः सूनुनाभवत् । विस्मारितः स सौम्येन[1] शरद्भानुरिवेन्दुना ॥३३२३॥

ग्रीष्मोष्मदोषविषमेष्वविशेषवृत्तेर्मेघोदये तटतरोस्तटिनीप्रवाहः ।
पश्यन्नकाण्डतडिदापतनेन नाशं नाशंसति स्वसलिलस्य विभूतिलाभम् ॥३३२४॥

आ भिक्षुक्षपणाद्द्रोजभञ्जनादपि भूभुजः । विधुरे कार्यभाराणां योभूद्दृढधुरः परम् ॥३३२५॥

तस्य तस्मिन्नृपरते क्षीणप्रक्षीणकण्टके । स धन्योनन्यसा[1]मान्यप्रेमा प्रमयमाययौ ॥३३२६॥

ताम्बूलमायात्रिकतां नीत्वामू[1]नामयानिव । आर्पिपन्मधुरावद्दं जीवं यस्य निजः सुतः ॥३३२७॥

स जगज्जीवितेनापि रक्षणीयः क्षमापतिः । पदे पदे विपन्मग्नः प्रजोद्धरणधीरधीः ॥३३२८॥

व्याधितस्य विनिद्रोपि संसङ्गान्मङ्गलेच्छुभिः । नान्तक्षणे तस्य पार्श्वात्कृतज्ञोवाचलन्नृपः ॥३३२९॥

प्रियप्रजस्या[1]मात्यस्य स्वरूपविपरीतता । तस्य कंचिल्क्षणं जाता जनं[1]जीवितदा भवे[1] ॥३३३०॥

भूभुजामपि मान्धातृमुखानां निधनेन याः । दुःखं ययुः प्रजास्तासां समभावि तदा सुखम् ॥३३३१॥

द्वैराज्योपप्लुते राष्ट्रे नवस्य नृपतेरभूत् । अव्याहतं[1] यत्साचिव्यं तस्य सर्वाभिषङ्गभित् ॥३३३२॥

कालो बली व्यवहृतेर्ननु तद्वशेन पूर्वापराचरणविस्मरणे न कस्य ।
शक्तिः क्षितेर्वहनकर्मणि योग्यतायां निर्दा[1]रणे मुरजितस्तु वराहतायाम् ॥३३३३॥

नगराधिकृतो भूत्वा सुज्जेर्निर्वापिते पुरा । चिरप्ररूढां यो देशस्याव्यवस्थां न्यवारयत् ॥३३३४॥

भ्रष्टः क्रयेषु दीन्नारव्यवहारोव्यवस्थया । निगृह्य तं भ्रंशकार्यनिर्वितण्डः प्रवर्तितः[1] ॥३३३५॥

परिणीताङ्गनाशीलभ्रंशे गृहपतेरभूत् । दण्डप्रवृत्तिर्या तेन सा विचार्य निवारिता ॥३३३६॥

एकान्ततो हितो भूत्वा विशामेवं पुनर्व्यधात् । नगराधिक्रियां लब्ध्वा स एव परिपीडनम्[1] ॥३३३७॥

बद्धाभिर्नर्त[1]कीभिश्च परिणीत[2]गृहस्थितौ । संप्रयुक्तान्कथ्यमानान्हठेनादण्डयद्बहून् ॥३३३८॥

---

३३१६. 1)—1) Written by $A_5$ on new paper.—2) Emended with C; A ऐश्वर्यं रू°. ३३१७. 1)—1) Written by $A_5$ on new paper.—2) Emended; A° स्थितम्. ३३१८. 1)—1) Written by $A_5$ on new paper.—2) Emended with C; A स्वल्ला°; cf. viii. 248.—3) Emended with C; A पैतृव्य.—4) Emended with C; A --नृपः. ३३१९. 1) Emended with G (*sec. manu*); A ग्रामसा°. ३३२०. 1) Emended with C; A °वदनं.—2) Thus $A_1$ R; $A_5$ इन्दलाम्; C चन्द्रलाम्. ३३२१. 1) Emended with G (*sec. manu*); A पृष्टो नगरनिर्मोहः (पृष्टो written by $A_5$); cf. viii. 1193. 1528. ३३२३. 1) Emended; A सोम्येन. ३३२६. 1) Emended; A धन्यो नान्यसा°. ३३२७. 1) Thus A; perhaps read नीत्वासूना°.—2) Emended with C; A आर्पिपामधु°. ३३२९. 1)—1) Written by $A_5$ on new paper. ३३३०. 1)—1) Written by $A_5$ on new paper. ३३३२. 1) Emended with C; A अव्याहतं. ३३३३. 1) Emended with G (*sec. manu*); A निर्मारणे. ३३३५. 1) Doubtful emendation; A प्रवर्तत; C प्रवर्त्तेत. ३३३७. 1) Emended; A पीडयन्. ३३३८. 1) Emended with C; A° बद्धाभि --कीभिश्च.—2) Conjectural reading; A परि - तगृ°; C परिवीतगृ°.

किंवो ---[1]लेशानां तुषाणामिव चिन्तनैः । अद्रोहालोभयोर्भूमिर्न तादृगपरोभवत् ॥३३३९॥
भिक्षु[1]मल्लार्जुनौ कालानुवृ[2]त्त्याश्रि[3]तवानपि । नासौ जहौ स्वामिहितं[4] न तौ ---[5] नावधीत् ॥३३४०॥
अक्षीणत्यागहीनस्य विभूतिसमयेप्यभूत् । संस्कारौपयिकं नास्य पर्याप्तं निधने धनम् ॥३३४१॥
कृतज्ञतायां राज्ञोन्यत्पर्याप्तं किमुदीर्यताम् । यो जीवित इवानीतान्संविभेजेनुजीविनः ॥३३४२॥
लोकान्तरातिथिं त्रिज्जाभिधामुद्दिश्य वल्लभाम् । धन्यस्य त्रिज्जनामाढ्यंविहारारम्भकारिणः ॥३३४३॥
परलोकं प्रयातस्य निर्माणंप्रतिपूरणम् । स्थितं व्यवस्थितेः कं च विनियोगं चकार सः ॥३३४४॥ युग्मम् ॥
भूभृद्धार्मिकतावाप्तस्वकृतोत्सेकवासवैः । युद्धैकवृत्तिभिरपि प्रवृत्ते पुण्यकर्मणि ॥३३४५॥
विपक्षाणां सुभिक्षेण तुरुष्कवि[1]षयाश्रयात् । जन्मभूमेर्वृत्तये यैः क्रौर्यादन्यन्न शिक्षितम् ॥३३४६॥
येपि वृत्तिं विरोध्या[1]जिव्यग्रे सुस्सलभूभुजि । कलहा[1]वसरेप्येवं कश्मीरेषु प्रपेदिरे ॥३३४७॥
गोत्रे तेषां क्षत्रिया[1]णां जातः कर्मल्लियानुजः । राजबीजी सङ्गि[1]याख्यः प्रतिष्ठां[1] स्वाख्ययाकरोत् ॥३३४८॥
वितस्तापुलिने बाणलिङ्गे तेन निवेशिते । जायते स्वर्धुनीरोधःसंप्ररूढविमुक्तधीः ॥३३४९॥
तदीयं च मठं चैव तपोधनविभूषितम् । दृष्ट्वा निवर्तते रुद्रलोकालोकनकौतुकम् ॥३३५०॥
लोठनेन्यप्रतिष्ठानामधन्यद्रविणार्पणे । न तेनायतने काले संरब्धं[1] शुद्धबुद्धिना ॥३३५१॥
उदयस्य प्रिया चिन्ताभिधाना कम्पनापतेः । पुलिनोर्व्यां वितस्ताया विहारेण व्यभूषयत् ॥३३५२॥
प्रासादपञ्चकव्याजात्तद्विहारस्थितः करः । उदस्त इव धर्मेण प्रोत्तुङ्गाङ्गुलिपञ्चकः ॥३३५३॥
सांधिविग्रहिको मङ्खकाख्योलंकारसोदरः । समठस्याभवत्स्रष्टा श्रीकण्ठस्य प्रतिष्ठया ॥३३५४॥
मठाग्रहारदेवौकोजीर्णोद्धारादिकर्मभिः । अनुजः[1] सुमना नाम रिल्हणस्यासदत्तुलाम् ॥३३५५॥
भूतेश्वरे मठं कृत्वा त्रिग्राम्यामप्यपायय[1]त् । तोयं कनकवाहिन्या वितस्तायाश्च यः पितॄन् ॥३३५६॥
प्रदेशे[1] कश्यपागाराभिधाने नीलभूः सरित् । जीगीषयेव जाह्नव्या यत्र पूर्वां दिशं गता[2] ॥३३५७॥
उत्ताराय गवादीनां यः सेतुं तत्र बन्धयन् । निर्ममे निर्मलं कर्म संसारोत्तरणक्षमम् ॥३३५८॥
नगरेपि स्वनामाङ्कवृषाङ्कागारकारिणा । मठो येन कृतोभ्रष्टजटाधरघटाश्रयः ॥३३५९॥
मम्मेश्वरं स सौवर्णामलसारं[1] चकार यः । सोमतीर्थं तथा तोयोद्यानादुद्द्यो[2]तितान्तिकम् ॥३३६०॥
अत्र क्ष्माभुजो[1] वंशे वंशौन्नत्यधनादिषु । सासूयत्वादमा[2]त्यानां धनप्राणादिहा[3]रिणः ॥३३६१॥
क्रुध्यन्नवासनाध्यासासूयया वासवोपि वा । प्राभ्रंशयद्दिवो देवो[1] मान्धातारं धराभुजम् ॥३३६२॥
अविप्लुतमतिर्भृत्यान्कृत्यौन्नत्यवतोन्वहम् । दृष्ट्वा ध्यातस्वमाहात्म्यवृद्धिस्तु प्रीयते नृपः ॥३३६३॥
कलशक्ष्मापते[1]ः प्राज्ञोपज्ञं[2] भृत्योस्य रिल्हणः । कुर्वन्स्वर्णातपत्राणां प्रतिष्ठां प्रीतिकार्यभूत् ॥३३६४॥

३३३९. [1]) Thus A; C वो भवेद्बलेशानां. ३३४०. [1]) Thus R C; $A_5$ भिल्लमल्ला°.—[2]) —[2]) Written by $A_5$ on new paper.—
[3]) Thus $A_5$; C °वृत्त्या श्रुत°.—[4]) Emended; A स्वामिहतं.—[5]) Thus A; C supplements तावपि. ३३४३. [1]) Doubtful emenda-
tion; A °नामाख्य°. ३३४४. [1]) Emended with G (*sec. manu*); A निर्वाण.° ३३४६. [1]) Emended with C; A तुरुष्कामिषया°.
३३४७. [1])—[1]) Written by $A_5$ on new paper. ३३४८. [1])–[1]) Written by $A_5$ on new paper. ३३५१. [1]) Emended; A संरब्धे.
३३५५. [1]) Emended; A अनुजा. ३३५६. [1]) Emended; A त्रिग्राम्यमप्यपातयत्°; cf. वामेन सिन्धुस्त्रिग्राम्या वितस्ता दक्षिणेन तु
v. 97. ३३५७. [1]) Emended; A प्रदेश्य.—[2]) These two *pādas* and the following three verses are written by $A_5$
on new paper. ३३६०. [1]) Emended with C; $A_5$ R °मलशारं.—[2]) Emended; $A_5$ R °द्यानामुद्योति°. ३३६१. [1]) Doubtful
emendation; A क्ष्माभुजौ.—[2]) Emended; A °त्वमामात्यानां.—[3]) Emended; °धिहारिणः. ३३६२. [1]) Emended with C; A
देवीं. ३३६४. [1]) Thus corr. by $A_1$ from °पतिः.—[2]) Thus A; cf. vii. 528 ffg.

स्वर्णपत्त्रं[1] सुरेश्वर्यां शिवयोः समवेतयोः । सदीपारात्रिकामत्रमैत्रीमेति सघण्टिकम् ॥३३६५॥ 3365
वन्धोर्हिमाद्रेर्दयितः सुताजामातरौ शिवौ । स्वर्णच्छत्त्रच्छलान्मेरुर्मूर्ध्न्यार्द्रातुमुपागतः ॥३३६६॥
उद्दिश्य यद्विदधदुद्यममात्मयोनिर्दग्धो मयाङ्गघटनं दयितेन गौर्याः ।
सिद्धं तदत्र ---[1]मुमयेति हेमच्छत्त्रच्छलाद्धरदृशश्चलितोग्निरूर्ध्वम् ॥३३६७॥
सिद्धं तदत्र ---[1]मुमयेति हेमच्छत्त्रच्छलाद्धरदृशश्चलितोग्निरूर्ध्वम् ॥३३६७॥
छत्त्रं तत्र च रिल्हणेन विहितं रौक्मं महद्रुक्मिणीप्रेयोमन्दिरमूर्ध्नि नद्धमधुनादभ्रं परिभ्राजते ।
छत्त्रं तत्र च रिल्हणेन विहितं रौक्मं महद्रुक्मिणीप्रेयोमन्दिरमूर्ध्नि नद्धमधुनादभ्रं परिभ्राजते । स्वामिना प्राप्तं चक्रमवेक्षितुं[1] स्वरुचिरं भास्वानिवाभ्यागतः ॥३३६८॥
क्षैब्येन क्षतजावपानजनुषा नष्टं ततः स्वामिना प्राप्तं चक्रमवेक्षितुं स्वरुचिरं भास्वानिवाभ्यागतः ॥३३६८॥
तीर्थे मन्मथजित्खगध्वजदृढाजर्यार्जिताचार्यके साधाराभरणं क्रियापरिणति स्वर्णातपत्त्रं प्रभोः ।
भात्येकस्य शिखाहिफूत्कृतिवलद्गङ्गाब्जरेणूपगं[1] केशान्तस्थितमेघपार्श्वगतडित्पिण्डाभमन्यस्य च ॥३३६९॥
सौवर्णद्रुहिणाण्डकर्परपुरे संसूत्रिता छत्त्रकव्याकोशस्य समुद्गकप्रतिकृतौ दीर्घार्धित[1] घने ।
सद्रत्नाकरयोः पिधानकरणिं स्वर्णातपत्त्रं गतम् ॥३३७०॥ 3370
सङ्केनेन्दुकिरीटकैटभरिपुश्यामासितालंक्रिया सद्रत्नाकरयोः पिधानकरणिं स्वर्णातपत्त्रं गतम् ॥३३७०॥
तं लोहरमहीपालमन्वजायन्त भूभुजः । रड्डादेव्या गुणोदाराश्चत्वारश्चतुरा[1]ः सुताः ॥३३७१॥
गुल्हणेनापरादित्यो राघवेणेव लक्ष्मणः । अभिन्नभावः संवृद्धिं वर्तते लोहरे श्रयन् ॥३३७२॥
ललितादित्य[1]देवेन जयापीडो हि दारकः । भरतेनेव शत्रुघ्नः पाल्य[2]मानः प्रवर्तते ॥३३७३॥
पार्थिवाहस्कराचारुनमस्काराद्यशस्करः । [1]पञ्चमः क्षितिभृद्धर्म्यो बालातप इवोदितः ॥३३७४॥
चपलैः शैशवाच्छ्रद्धानुभावत्वात्ससौष्ठवैः । लडितैर्ललितादित्यो भित्तीरप्यार्द्रयत्यहो ॥३३७५॥ 3375
दत्तरक्षाञ्जनं ताम्राधरं गौरं तदाननम् । सबालातपभृङ्गाङ्कस्वर्ण[1]पङ्केरुहायते ॥३३७६॥
आलापास्तस्य माहात्म्यगर्भा बाल्या[1]स्फुटा अपि । अमृतार्द्रा इवोद्गारा मथ्यमानस्य वारिधेः ॥३३७७॥
महाभिजनसंजातो राजसूनुः स शैशवे । अभिधत्तेनुभावेन भव्येनागामि जृम्भितम् ॥३३७८॥
अत्यक्तमण्डनशिखण्डिशिखोपि तोयस्पर्शासहाञ्चितकलापिकलापभङ्ग्या ।
वापीं निपीतसलिलो वलितं प्रयाति चेष्टोक्तभावमहिमा वरवर्णिभावः ॥३३७९॥
चतस्रो मेनिला[1] राजलक्ष्मीः पद्मश्रिया समम् । संजाता[2]ः कमला चास्य कन्याः सत्कृत्यवृत्तयः ॥३३८०॥ 3380
विनोदलीलोद्यानैस्तैर्नित्यकान्तैरपत्यकैः । विद्योतिते[1]नवद्यौ तौ प्रावृट्पुष्पाकराविव ॥३३८१॥
तीर्थायतनपूतेस्मिन्मण्डलेखण्डितैर्व्ययैः । रड्डादेव्या एव याता भाग्यभावं विभूतयः ॥३३८२॥
कृतानुयात्रा सा दैवयात्रासु[1] क्षितिपाङ्गना । [2]राजलक्ष्मीरिवाभाति राजसामन्तमन्त्रिभिः ॥३३८३॥
सतीदेशे तीर्थसार्थास्त्यजन्त्यस्या निमज्जने । स्नानासक्तसतीमूर्तिस्पर्शनौत्सुक्यमञ्जसा ॥३३८४॥
चित्रे कालेत्र यात्रासु द्रष्टुं वृष्ट्युत्तरैः सदा । यत्प्रावृडिव --[1]यं जीमूतैरनुगम्यते ॥३३८५॥ 3385

३३६५. 1) Emended; A °पत्त्रां. ३३६७. 1) Thus A; C करुणामुमयेति°.—2) The last *pâda* and the following verse written by $A_5$. ३३६८. 1) Emended with C; $A_5$ R चक्रमिवे°. ३३६९. 1) Thus A; C °पगं. ३३७०. 1) Thus A; C °धिताधें घने. ३३७१. 1) Emended with C; A °श्चतुरस्सुताः. ३३७३. 1) Emended with C; A ललितालित्य°.—2) Emended with C; A पालमानः. ३३७४. 1) The last two *pâdas* and the following verse written by $A_5$ on new paper. ३३७६. 1) Emended with C; A °भृङ्गाङ्कास्वर्ण°. ३३७७. 1) Emended; A बालास्फुटा. ३३८०. 1) Emended with C; A मैनिला; cf. viii. 3394. 3397.—2) Emended; A संजाता. ३३८१. 1) Doubtful emendation; A विद्योतयान्नवद्यौ; C द्योतितावनवद्यौ. ३३८३. 1) Emended with C; A यात्रास्वक्षि°.—2) These two *pâdas* and the first *pâda* of the following verse are written by $A_5$ on new paper. ३३८५. 1) Thus A; C supplements तैश्चेयं.

सा पार्थिवेषु तीर्थेषु स्नानाय प्रस्थिता[1] ध्रुवम् । दिव्यैर्वर्षमिषात्तीर्थैः प्राद्रश्येत तदीर्ष्यया ॥३३८६॥
अभ्रंलिहान्न च गिरीन्न च कूलंकषा नदीः । मृद्वङ्गी दुर्गमा मार्गे तीर्थौत्सुक्येन वेत्त्यसौ ॥३३८७॥
स्नुवल्लीभिः प्रतिष्ठाभिर्जीर्णोद्धारैश्च धीरया । तया चित्रं चतुरया पङ्कुर्दिङ्गा विलङ्घिता ॥३३८८॥
अद्यापि विक्षरत्क्षीरार्णवकान्तिच्छटाच्छलात् । यो भातीव सुधासूतिसितश्वेताश्मनिर्गतः ॥३३८९॥
उपमन्योरुदन्याया दारिद्र्योपद्रवापहः । रुद्रो रुद्रेश्वरो नाम्ना श्रीमान्कश्मीरभूषणम् ॥३३९०॥
जगत्सौन्दर्यसारं स सस्वर्णामलसारकः । शान्तावसादप्रासादोद्धारश्च विहितस्तया ॥३३९१॥
सत्त्वानामिव भृत्यानां कोपैर्वैविकृते नृपे । उदन्वतीव शरणं[1] सिन्धुर्हैमवतीव सा[2] ॥३३९२॥
स्थिरप्रसादे भूपाले निग्रहानुग्रहौ क्षणात् । भूभुजामपि संवृत्तावविच्छिन्नौ[1] तदिच्छया ॥३३९३॥
सोमपालात्मजो भूभृद्भूपालः प्रापितस्तया । मानिन्या मेनिलादेव्या विवाहेन महार्हताम् ॥३३९४॥
उत्पत्तिभूमि[1]सुलभानुभवो न भूम्ना कस्याप्यहो व्यभिचरत्यनुभावभावः ।
तेजस्तमोविलुठनव्रतमुष्णभानोश्छेदं तदुत्थमकरोत्तमसोपि चक्रम् ॥३३९५॥
भुवनाद्भुतसाम्राज्यमार्जने[1] भूभुजाभवत् । प्रातिभाव्यं दृढं रत्नाक्रान्तसन्मण्डलावनिः ॥३३९६॥
ऊढायां मेनिलादेव्यां परिणेतुरभूदपि । पिता वैमत्यमुत्सृज्य निर्व्याजं राज्यदायकः ॥३३९७॥
राज्ञः प्राजिधरस्याजौ तरसा भूभुजोनुजः । वैरिभिर्निहतस्याग्रे वैरसंशोधनोद्यतः ॥३३९८॥
रड्डां शरणमेत्योच्चमानोत्कटो[1] घटोत्कचः । भेजे राज्यश्रियं प्राप्य चित्रं राज्यश्रियं पराम् ॥३३९९॥ कुलकम् ॥
कृतसाहायकोमात्यै राज्ञः सप्रज्ञिमङ्गदम् । राज्यात्प्राभ्रंशयद्भ्रातृद्रुहं पञ्चवटं[2] नृपम् ॥३४००॥
अलङ्घयत्तत्प्रभावात्स्फारदानाम्बुनिर्भरात् । सरितं खड्गवल्लीं च कृष्णां[1] विद्वेषिगोचराम् ॥३४०१॥
द्वितीयस्योरशाभर्तुरकीर्ति निर्जयासृजत्[1] । देवप्रभावाद्योधाग्रमत्युग्रपुरमग्रहीत् ॥३४०२॥
शीतोष्णवारणशशिद्योतकल्लोलितास्ततः । बहवो वाहिनीनाथाः प्रथामित्थं प्रपेदिरे ॥३४०३॥
समाद्वाविंशती राज्यावाप्तेः प्राग्भूभुजो गता । तावत्यैवात्रराज्यस्य पञ्चविंशतिवत्सरे[1] ॥३४०४॥
इयद्दृष्टमनन्यत्र प्रजापुण्यैर्महीभुजः । परिपाकमनोज्ञत्वं स्थेयाः कल्पातिगाः समाः ॥३४०५॥
अम्भोपि प्रवहत्स्वभावमशनैराश्यानमश्मायते यात्राम्भः[1] स्रवति द्रवत्वमुदितोद्रेकेषु चावेयुषः ।
कालस्यास्खलितप्रभावरभसं भाति प्रभुत्वेद्भुते कस्यामुत्र विधातृशक्तिघटिते मार्गे निसर्गः स्थिरः ॥३४०६॥
प्रयाते त्र्यधिकेप्यर्धसमाषट्कशते कलेः । कश्मीरेष्वास्त गोनन्दः पार्थानां सेवया नृपः ॥३४०७॥
सूनुर्दामोदरो[1]स्याथ तस्य पत्नी यशोमती[2] । गोनन्दोन्यस्तत्सुतोपि ततोतीत्य महीपतीन्[3] ॥३४०८॥
पञ्चत्रिंशतमज्ञातानुग्रहाभिजनाभिधाम् । राजाभवल्लवो[1] नाम सूनुस्तस्य कुशस्ततः ॥३४०९॥

---

३३८६. 1) Emended; A प्रास्थितं. ३३९२. 1) Emended with C; A सरणं.—2) The last *páda* and the following two verses written by $A_5$ on new paper. ३३९३. 1) Emended; $A_5$ R C °च्छिन्नस्तदि°. ३३९५. 1) Emended with C; A उत्पत्तिर्भू°. ३३९६. 1) Emended; A °मार्जनो. ३३९९. 1) Emended; A °त्योच्चं मानोत्क°. ३४००. 1) Emended; A राज्यं प्रा°.—2) Doubtful emendation; A °वटो. ३४०१. 1) The last *páda* and the following verse written by $A_5$ on new paper. ३४०२. 1) Doubtful emendation of G (*sec. manu*); A °कीर्तिर्निज°. ३४०४. 1) Emended with C; A °विंशतु व°. ३४०६. 1) Emended with C; A मात्रोम्भः. ३४०८. 1) Emended with C; A दामोदरस्याथ.—2) Comp. यशोवतीं i. 70.—3) Emended with C; A °पती. ३४०९. 1) Emended with C; A राजा वल्लभको; cf. अथाभवल्लवो नाम i. 84.

द्वौ खगेन्द्रसुरेन्द्राख्यौ पुत्रपौत्रावमुष्य तु । गोधरोथान्यकुलजः सुवर्णाख्यस्[2]तदात्मजः ||३४१०||

तज्जन्मा जनकोप्यासीत्सूनुः शच्याः शचीनरः । अथाशोकोभवद्भूभृद्राज्ञोस्य प्रपितृव्यजः ||३४११||

तज्जो जलौकाः संदिग्धवंशो[1] दामोदरस्ततः । तुल्यं त्रयोथ हुष्काद्यास्तुरुष्काभिजनोद्भवाः ||३४१२||

अभिमन्युस्तृतीयोथ गोनन्दोस्य विभीषणः । राजेन्द्रजिद्रावणश्च --द्यः[1] क्रमशोभवत् ||३४१३||

अन्यो विभीषण[1]ः सिद्ध उत्पलाक्षश्[2]च तदनु[3] । पश्चात्ततो हिरण्याक्षहिरण्यकुलयोर[4]भूत् ||३४१४||

राजा वसुकुलस्तस्य सूनुः ख्यातस्त्रिकोटिहा[1] । क्षितिनन्दो बकात्तज्जाद्[2]वसुनन्दस्तदात्मजः ||३४१५||

नरोन्योक्षस्ततस्तस्माद्गोप्ता गोकर्णको नृपात् । तस्मान्नरेन्द्रादित्योभूत्सूनुरन्धयुधिष्ठिरः ||३४१६||

तस्य प्राभ्रंशितो भृत्यैरन्याभिजनसंभवः । भूपः प्रतापादित्योभूज्जलौकोपि तदात्मजः ||३४१७||

तुञ्जीने[1] निःसुते तज्जे विजयोन्यकुलोद्भवः । जयेन्द्रेस्य सुतेपुत्रे[2] सचिवः संधिमानभूत् ||३४१८||

युधिष्ठिरस्य पौत्रेण भूपादित्या[1]त्मजन्मना । श्रीमेघवाहनेनाथ गोनन्दे[2]भ्युदितं कुले[3] ||३४१९||

.............................. | .............................. ||

ततः प्रवरसेनोन्यस्तोरमाणात्म[1]जः क्षितिम् । लेभे हिरण्यभ्रातृव्यस्तस्य पुत्रो युधिष्ठिरः[2] ||३४२०||

ततो नरेन्द्रादित्यश्च रणादित्यश्च भूपतिः । क्रमादभूतां तत्पुत्रो विक्रमादित्यभूपति[1]ः ||३४२१||

बालादित्यश्चोदभवद्[1]रणादित्यस्य[2] नन्दनः । बालादित्यस्य जामाता ततो दुर्लभवर्धनः ||३४२२||

सूनुर्दुर्लभकस्तस्य चन्द्रापीडोभवत्ततः । तारापीडोनुजन्मा च मुक्तापीडोस्य[1] चानुजः ||३४२३||

भूपावास्तां कुवलयापीडो द्वैमातुरोस्य च । वज्रादित्यः सुतो राज्ञो मुक्तापीडस्य तत्सुतौ ||३४२४||

पृथिव्यापीडसंग्रामापीडावनु नृपोभवत् । जयापीडोस्य मन्त्री च जज्जः[1] पुत्रावपि क्रमात् ||३४२५||

ललितापीडसंग्रामापीडौ[1] ज्येष्ठात्मजस्ततः । श्रीचिप्पटजयापीडः कल्यपाल्युद्भवोभवत् ||३४२६||

अभिचारेण तं हत्वा सांमत्या[1]दितरेतरम् । उत्पलाद्यैरसंप्राप्तराज्यैस्तन्मातुलैः कृतः ||३४२७||

भ्रातुः पुत्रोजितापीडो जयापीडस्य तत्पदे । अनङ्गापीडनामा च संग्रामापीडजस्ततः ||३४२८||

तमुत्पाट्योत्पलापीडोस्याजितापीडनन्दनः । अवन्तिवर्मा शूरेण[1] तं निवार्याथ मन्त्रिणा ||३४२९||

---

३४१०. 1) The last three *pâdas* and the following verse are no longer found in A as the upper portion of fol. 327 has broken off; the text is given from R G.—2) Emended with C; R G (*prima manu*) सुवर्णाकृत्तश°; cf. i. 97. ३४१२. 1) Emended; R C °वंशे; the upper strokes of the letters are not legible in A. ३४१३. 1) Thus A; C पितापुत्रौ क्रमान्नृपौ. ३४१४. 1) Here the name of NARA is omitted.—2) Emended; A उत्पलाख्यश्च.—3) Thus A; doubtful.—4) Emended; A हिरण्याख्येहिरण्यकुशयोर°. ३४१५. 1) C inserts here two *pâdas* श्रीमिहिरकुलो राजा बकाख्यस्तदनन्तरं.—2) Emended; A क्षितिनन्दो बकात्मजाद्वसु°. ३४१८. 1) Emended; A तुञ्जने; cf. ii. 11.—2) Emended; A जयेन्द्रस्य--पुत्रे; C जयेन्द्रस्तसुतेऽपुत्रः. ३४१९. 1) Thus A; but compare ii. 145 ffg.—2) Emended with C; A गोनन्दाभ्युदितं.—3) After this verse C inserts the following: ततः प्रवरसेनोभूद्भूपः काश्मीरमण्डले॥ तस्सूनुश्च हिरण्योऽभूत् पालयन् क्षितिमण्डलं। मातृगुप्तोऽभवद्दत्तराज्यस्तेन चक्रारिणा॥. One verse containing the names of PRAVARASENA I., HIRANYA and MÂTRIGUPTA appears to have been omitted here by A. ३४२०. 1) The remaining portion of this verse, the following verse and the first *pâda* of verse 3422 are no longer found in A, as the upper portion of fol. 327 has broken off; the text is given from R G.—2) Thus C; R पुत्रो -धिष्ठिरात्, corr. *sec. manu* as above; G पुत्राद्युधिष्ठिरात्. ३४२१. 1) Thus C R; G तद्वच्च विक्रमादित्य उर्वरीम्. ३४२२. 1) Thus C R; G °त्यश्चोदभवद्रणा°.—2) Emended with R G; A °दित्यश्च नं°. ३४२३. 1) Thus C; R G °पीडस्य; in A three *aksharas* after मुक्ता have become illegible. ३४२५. 1) Emended with C; A जज्जपुत्रावपि. ३४२६. 1) Emended with C; A °पीडज्येष्ठा.° ३४२७. 1) Emended with C; A सम्मत्या°. ३४२९. 1) Here ends the text of A at the foot of fol. 327 *rev.*, the last leaf of the MS. being lost. The text of the remaining verses is given from R G.

नन्दोत्पलस्य विदधे साम्राज्ये सुखवर्मजः । शूरः शंकरवर्मा स गोपालस्तस्य चात्मजः[1] ॥३४३०॥
रथ्यागृहीतः प्राभूच्च तद्भ्राता संकटाभिधः । सुगन्धाख्या तयोर्माता तां विनाश्य[1]ाथ भूभुजम् ॥३४३१॥
शूरवर्मप्रणप्तारं पार्थं तन्त्रिपदातयः । चक्रुर्निर्जितवर्माणं ततस्तस्य[1] च तत्क्रमात् ॥३४३२॥
चक्रवर्मा शूरवर्मा चेति निर्जितवर्मजः । [1]विहिता बहुशो राज्ये तस्तम्भे[2] शंभुवर्धनः ॥३४३३॥
तदन्तरे लब्धराज्ये मन्त्री व्यापाद्य तं नृपम् । चक्रवर्मण्यतीतेथ पापी पार्थात्मजः क्रमात् ॥३४३४॥
उन्मत्तावन्तिवर्मासीत्तत्पुत्रे शूरवर्मणि । राज्याद्भ्रष्टे द्विजैश्चक्रे राज्ये मन्त्री यशस्करः ॥३४३५॥
प्रपितृव्यात्मजस्तस्य वर्णटस्तनयोनु तम् । राज्ये वक्राङ्घ्रिसंग्रामस्तस्थौ निष्पाट्य तं ततः ॥३४३६॥
अमात्यः पर्वगुप्ताख्यो राज्यं द्रोहेण लब्धवान् । क्षेम[1]गुप्तः सुतोस्यासीदभिमन्यौ तदात्मजे ॥३४३७॥
शान्ते मात्रा पाल्यमाने नन्दिगुप्ते च तत्सुते । ततस्त्रिभुवने भीमगुप्ते च क्रूरचेष्टया ॥३४३८॥
पौत्रे तथैव निहते[1] स्वयं दिद्दाख्यया कृतम् । राज्यं[2] संग्रामराजोपि भ्रातृव्योन्ते नृपः कृतः ॥३४३९॥
हरिराजानन्तदेवावास्तां तस्यात्मजौ ततः । कलशोनन्ततनयः क्रमाद्भूपौ तदात्मजौ ॥३४४०॥
उभावुत्कर्षहर्षाख्यावपि निष्पाट्य भूपतिम् । हर्षदेवं तमुद्दामविक्रमोनन्यवंशजः ॥३४४१॥
भ्रातुः पुत्रस्य दिद्दाया जस्सराजस्य नप्तृतः । मल्लाभिधानादुद्भूतो भूपतामुच्चलोभजत् ॥३४४२॥
द्रोहेण तं हतवतां भृत्यानामग्रतस्ततः । शङ्खराजान्यनामाभूद्रड्डाख्यः क्षणिको नृपः ॥३४४३॥
गर्गेण निहते तस्मिन्सल्हो[1] द्वैमातुरोप्यभूत् । तस्योच्चलमहीभर्तुर्भ्राता निर्वध्य तं बली ॥३४४४॥
सुस्सलाख्योग्रहीद्राज्यं माल्लिरुच्चलसोदरः । विरक्तैः पातिते तस्मिन्राज्याद्भृत्यैर्नृपः कृतः ॥३४४५॥
षण्मासान्हर्षभूभर्तुर्नप्ता भिक्षाचराभिधः । पुनर्निर्वास्य तं प्राप्तराज्ये सुस्सलभूभृति ॥३४४६॥
क्रमाल्लवन्यैर्विश्वस्तैर्द्वैराज्योद्वेजिते हते । लवन्यान्निखिलांस्तं च[1] हत्वा भिक्षाचरं नृपम् ॥३४४७॥
सुतः सुस्सलभूभर्तुः संप्रत्यप्रतिमक्षमः । नन्दयन्मेदिनीमास्ते जयसिंहो महीपतिः ॥३४४८॥
गोदावरी सरिदिवोत्तुमुलैस्तरङ्गैर्वक्त्रैः स्फुटं सपदि सप्तभिरापतन्ती ।
श्रीका[1]न्तिराजविपुलाभिजनाब्धिमध्यं विश्रान्तये विशति राजतरङ्गिणीयम् ॥३४४९॥

[1] इति श्रीमहाकविश्रीकल्हणकृतायां राजतरङ्गिण्यामष्टमस्तरङ्गः[1] ॥

समाप्तेयं राजतरङ्गिणी

कृतिः श्रीमहामात्यचण्पकप्रभुसूनोर्महाकवेः कल्हणस्य ॥

---

३४३०. [1]) The last two *pâdas* are found in the above form in C; in R G they are added *sec. manu*, being probably copied from C. ३४३१. [1]) Emended with C; R G निनाद्य°. ३४३२. [1]) Thus R G; cf. v. 287 ffg.; C ततः पार्थस्ततः क्रमात्. ३४३३. [1]) These two *pâdas* and the first half of the following verse are omitted in C.—[2]) Thus R; G --म्भे. ३४३७. [1]) Thus C R (*sec. manu*); G R (*prima manu*) सोमगुप्तः. ३४३९. [1]) Emended; R G C निहिते.—[2]) Thus R; G राज्ये; C कृते। राज्ये. ३४४४. [1]) Emended; R G C मल्लो; R (*sec. manu*) सल्हो. ३४४७. [1]) Thus R; G °लांस्ते च; C °लांस्तांश्च. ३४४९. [1]) Emended; R G C श्रीकान्त°; comp. vii. 1285. *Colophon.* [1])—[1]) This part of the Colophon is not found in G.

# CORRIGENDA AND ADDENDA.

Canto. Verse.

१. ६०. *For* स्कन्शवारं *read* स्कन्धावारं, *adding note:* [1]) Emended ; A स्कन्शवारं.

१. १७३.[1]) *For* $A_2$ भूम्येश्वरो *read* $A_1$ भूम्येश्वरो.

१. २१७. *For* स्वादुभोक्तव्य° *read* स्वादु भोक्तव्य°.

२. १. *For* ललनापुं° *read* लटभापुं°.

२. ४४. *For* वीक्षमाणाथ *read* वीक्ष्यमाणाथ.

२ ११५. *For* संवारिनिखिला° *read* संवारि निखिला°.

२. १७०. *For* जरढ° *read* जरठ°[2], *adding note:* [2]) A जरढ°.

३. ३०२. *To* पुरुषाधमः *add note:* Subhâshitâvalî, 361, reads पुरुषोधमः.

३. ४९२. *To* निरधस्त्विषं *add note:* Subhâshitâvalî, 579, reads विरधस्त्विषं

*To* जगतस्तिग्मां° *add note:* Subhâshitâvalî, 579, reads जगतां तिग्मां°.

४. १२५. *For* योयं *read* यो यं.

*To* परापकरणाय *add. note:* Subhâshitâvalî, 3133, reads जनापकरणाय.

४. १४८. *For* अशिश्रयंस्तं *read* अशिश्रियंस्तं.

४. २३४. *To* °न्कालेतिबालों° *add note:* Subhâshitâvalî, 3028, reads °न्कालेपि बालो°.

४. ४९८[2]) *For* $A_3$ देश, $A_1$ देशे *read* $A_3$ देशे, $A_1$ देशं.

४. ७१२. *For* °नुत्तम्भय *read* °नुत्तम्भ्य[1], *adding note:* [1]) Emended ; A°नुत्तम्भय.

५. ११५. *For* सत्कर्मजन्मसु *read* सत्कर्म जन्मसु.

५. १२६. *For* वर्षे एकोनषठे *read* वर्ष एकोनषष्टे.

५. १२२. *For* °शिश्रयन् *read* °शिश्रियन्.

५ १४९. *For* °भुभूजः *read* °भूभुजः.

५. २२५.[1]) *For* वराहमल° *read* वराहमूल°.

५. २३३. *To* कमलुकाभिधाम् *add note:* Comp. the name of the Shâhiya King *Kamalû*, Albêrûnî's *Indica* (transl. by Sachau), ii. 13.

५. २६०. *For* °महका *read* °माहका.

५. २९५. *For* व्यधुतान्वि° *read* व्यधुस्तान्वि°.

५. १०६. *For* श्रीढक° *read* श्रीढक्क°.

Canto. Verse.

६. ९८. *For* समर्पयत् *read* समार्पयत्[2], *adding note:* [2]) Emended ; A समर्पयत्.

६. २४५. *For* तद्दल *read* तद्दलम्.

६. ३४९. *For* काश्मीरिकाबल° *read* काश्मीरकबल°.

७. २१७. *For* स्वल्पानुगोभवन् *read* स्वल्पानुगो भवन्.

७. ४६६. *For* °स्कन्शानां[1] *read* °स्कन्धानां[1], *adding note:* [1]) Emended ; A °स्कन्शानां.

७. ५६०. *For* देशमशिश्रयन् *read* देशमाशिश्रियन्.

७. ५८७. *For* °स्त्रिषष्ठेव्दे° *read* °स्त्रिषष्टेव्दे°.

७. ५८८. *To* कीर्तिन्यक्वपुरा° *add note:* [1]) Thus A ; perhaps read कीर्तिर्नक्वापुरा° ; comp, viii. 538.

७. ५९०. *For* काष्टवाट° *read* काष्ठवाट°.

७. ५९२. *For* °व्यसक्षीणं *read* °व्यसंक्षीणं.

७. ६०३.[1]) *For* A प्रत्यास्ने *read* $A_1$ प्रत्यास्मे.

७. ७६२. *For* पक्षमशिश्रयन् *read* पक्षमशिश्रियन्.

७. ८०४. *To* स्वशिरसः *add note:* Subhâshitâvalî, 3132, reads निजाशिरः,

*To* दिव्या स्वैव *add note:* Subhâshitâvalî, 3132, reads देव्याः सैव.

७. ८४९. *For* जग्ठः *read* जरठः[1], *adding note:* [1]) A जरढः.

७. ८८९. *For* कोपाच्छले *read* कोपाच्छूले

७. ८९९. *For* बुद्रुभु° *read* बुभुक्षु°.

७. ९५०. *For* विरलामु° *read* विरलोमु°.

७. ९७९. *For* काश्मीरिकाणां[1] *read* काश्मीरकाणां, *omitting note.*

७. १००८. *For* काश्मीरिकाणां[1] *read* काश्मीरकाणां, *omitting note.*

७. १०११. *For* बुभुभु° *read* बुभुक्षु°.

७. ११२३. *For* संप्रस्थमुाष्मन्यतः *read* संप्रस्थमुष्मिन्यतः.

७. ११८१. *For* काश्मीरिका[1]: *read* काश्मीरकाः, *omitting note.*

७. ११८९. *For* स्कन्शवारे *read* स्कन्धावारे[1], *adding note:* [1]) Emended ; A स्कन्शवारे.

# CORRIGENDA AND ADDENDA.

Canto. Verse.

७. १४६७. *For* मल्लज्ञातीय° *read* मल्लज्ञातेय°[1], *adding note:* [1]) Emended; A °ज्ञातीय°.

७. १६५८. *For* शर्वर्यामु लोविशत् *read* शर्वर्यामुचलोविशत्.

७. १६९५. *For* भूतिभिश्वा° *read* भूतभिश्वा°.

८. २५४. *For* °न्स्कन्दावारेषु *read* °न्स्कन्धावारेषु[1], *adding note:* [1]) Emended; A° न्स्कन्दा°.

८. ४८९. *For* वेशादौ *read* वेषादौ[1], *adding note:* [1]) Emended; A वेशादौ.

८. ६७७. *For* हम्ब *read* हम्बं.

८. ७४५. *For* तैर्जयो मोचिवा° *read* तैर्जयोमोचि वा°.

८. ८८७. *For* काश्मीरिक°[1] *read* काश्मीरक°, *omitting note.*

*For* °पाटवः *read* °पाटवः.

८. ९०२. *For* °तालादीवाद्य° *read* °तालाविवाद्य°.

८.९२२.९२३. *For* काश्मीरिका°[1] *read* काश्मीरका°, *omitting note.*

८. १००८. *For* °क्रान्दमुखरे *read* °क्रन्दमुखरं.

८. १०५५. *For* स्कन्दावारं *read* स्कन्धावारं[1], *adding note:* [1]) Emended; A स्कन्दावारं.

८. १०८४. *For* °भिञ्जिकास्थान *read* °भिञ्जिकास्थान°.

८. ११४८. *For* काश्मीरकें[1] *read* काश्मीरिकें, *omitting note.*

८. १३२८. *For* राजात्मभ्रजमात् *read* राजात्मजभ्रमात्.

८. १४४५ *For* निजप्रभाः *read* निजप्रभोः.

८. २०२८. *For* ज्योतीरसा° *read* ज्योती रसा°.

८. २०४२. *For* °स्कोष्ठेश्वरी *read* °स्कोष्ठेश्वरो.

८. २३२३. *For* संस्तम्भ्येन°[1] *read* संस्तम्भ्यैन°, *omitting note.*

८. २७४८.[1]). *For* PRITH-ÎHARI'S *read* PRITHVÌHARA'S.

८. २७६७. *For* काश्मरिका:[1] *read* काश्मीरिका:, *omitting note.*

८. ३०२२.[1]). *For* सारसा *read* सारासा.

८. ३१७२. *For* °त्संस्तभ्य[1] *read* °त्संस्तम्भ्य, *omitting note.*

८. ३१८१. *For* इन्दुवंश° *read* इन्दुवंशा°.

---

*N.B.—Some letters, especially* ा *and* ि, *have occasionally broken in the printing.*

# SERINDIA

by SIR AUREL STEIN

(In 5 Vols.; Size : Demy Quarto)

Vols. I-III—Text, Appendices, Indices, 345 Illustrations, Plans. (pp. 1580)

Vol. IV—Plates 175, Vol. V—Maps 94.

| Vols. | I | II | III | IV | V | |
|---|---|---|---|---|---|---|
| Rs. | 325 | 315 | 400 | 650 | 1300 | Rs. 3000 (per set) |

This is a detailed report of explorations in Central Asia and Westernmost China carried out by SIR AUREL STEIN during 1906-08 under the orders of H.M. Indian Government. Published as early as in 1921, this work was long out of print. Sir Aurel Stein, the arch explorer, undertook his second Central Asian Expedition, with the object of providing a full record of the explorations, archaeological and geographical. The area covered by these explorations, well under ten thousand miles, extended from Hindukush Valleys and Oxus to the Province of Kan-su in the West of China.

Sir Stein, with his characteristic zeal for things ancient, had recovered vast amount of relics from the long abandoned ruins in the desert, representing the ancient civilization fostered by Buddhist India, China and the Hellenized Near East. The finds and relics of exploration include numerous antiques, and manuscript remains in Sanskrit, Khotanese and Chinese (Khotan); wooden documents in Kharoshthi script and Prakrit language (Niya site); important information on ancient routes from Khotan to China; many interesting remains of the architectural and industrial art of third cent. A.D. (at Lou-lan site); hundreds of Tibetan records on wood and paper along with Turkish "Runic" documents; fine wall paintings of Buddhist shrines (at Miran); a great deposit of ancient manuscripts and art relics belonging to Chinese, Sanskrit, Khotanese etc., paintings, fine textiles (caves of thousand Buddhas at Tun-huang); and several others.

The entire booty of the exploration was brought in over a hundred cases and were deposited in British Museum (London) and Imperial Museum (Delhi); the complete story was given in a fascinating and absorbing manner in 33 chapters (1580 pp.) with TEN Appendices detailing the relics and finds in minute and scholary analysis by experts in the respective fields—Chinese Records (M.E. Chavannes), Coins (J. Allan), Physical Anthropology (T.A. Joyce), Mural Painting and Plaster (Sir Arthur Church), Buddhist Paintings (R. Petrucci and L. Binyon), Manuscripts in Sanskrit, Khotanese etc. (A.F.R. Hoernle), Tibetan Documents (A.H. Francke), Musical Instruments (K. Schlesinger), Tibetan Manuscripts (F.W. Thomas), Tibetan Inscriptions of Buddhist Paintings (L.D. Barnett).

MOTILAL BANARSIDASS

*Delhi Varanasi Patna*

*Bangalore Madras*